In the celebrated work entitled, Tattvacintāmaṇi, there is a section devoted to Pakṣatā. The three important aspects of Inference are: Pakṣaḥ, Sādhya and Hetu. Therein pakṣa is pakṣatāśraya. In the section dealing with Pakṣatā, the definition of Pakṣatā is discussed and a conclusion is arrived at by Raghunātha S'iromaṇi. The Dīdhiti gloss on Pakṣatā, Gadādharabhaṭṭacārya's Prakāś-ikā commentary on Dīdhiti are studied and taught in the traditional system. The significance of the two commentaries have to be comprehended with great care after concentrated study over several weeks. Hence Pandit Dr. N.S.R. Tatacharya has now come orward with his gloss called, Bhāvabodhinī (literally expounding the central idea) on this work so that this might enable scholars and students to easily understand the original work. It is hoped that this commentary of Dr. Tatacharya will be read profitably by those who wish to enter into the domain of the Neo-logical System of Indian thought.

राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली
(तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला–संख्या ५०)

श्री गङ्गेशोपाध्यायकृता

# पक्षता

रघुनाथशिरोमणिकृतया **दीधित्या**–

गादाधरभट्टाचार्यकृतया **दीधितिप्रकाशिकया**–

**डा. एन्. एस्. रामानुजताताचार्यकृतया**

दीधितिप्रकाशिकाव्याख्यया

**बालबोधिन्या च सहिता**




**केन्द्रीयसंस्कृतविद्यापीठम्**

तिरुपतिः

१९८८

प्रकाशनवत्सरः–१९८८



मूल्यम् रू.

मानवसंसाधनविकासमन्त्रालयान्तर्गत-
नवदेहलीस्थ-राष्ट्रियसंस्कृतसंस्थानस्य कृते
तिरुपतिस्थ-केन्द्रीयसंस्कृतविद्यापीठस्य
प्राचार्येण
डा. एन्. एस्. रामानुजताताचार्येण
प्रकाशिता

मुद्रापकः – श्री सत्यसाई प्रिन्टर्स्, टि. नगर्, तिरुपतिः

RASHTRIYA SANSKRIT SAMSTHAN, NEW DELHI

(Kendriya Sanskrit Vidyapeetha, Tirupati Series No. 50)

# PAKSHATA

of

Gangesopadhyaya

with

**Didhiti** of Raghunathasiromani

**Didhitiprakasikȧ** of Gadadhara Bhattacharya

and

**Bhavabodhini**

a commentary on the Didhitiprakāsikā

by

**Dr. N. S. RAMANUJA TATACHARYA**

Principal

K. S. Vidapeetha, Tirupati




KENDRIYA SANSKRIT VIDYAPEETHA

TIRUPATI

1988

Year of Publication : 1988



Price Rs :

Published for the
Rashtriya Sanskrit Samsthan
Ministry of Human Resource Development
Government of India
New Delhi

by
**Dr. N. S. Ramanuja Tatacharya**
Principal
Kendriya Sanskrit Vidyapeetha, Tirupati (A.P.)

Printed at Sri Satya Sai Printers, T. Nagar, Tirupati.

# उपोद्घातः

तत्त्वचिन्तामणावनुमानखण्डे पक्षता इति नाम्ना व्यवह्रियमाणं किंचित् प्रकरणं वर्तते। तत्र पक्षतायाः लक्षणं सविमर्शं निष्कृष्यते। मणिग्रन्थस्य रघुनाथशिरोमणिकृतं दीधित्याख्यं व्याख्यानं प्रसिद्धम्। दीधितेश्च जगदीशतर्कालंकारकृतं व्याख्यानं गादाधरभट्टाचार्यकृतं व्याख्यानं च विख्यातं जगति। तत्र आद्यं व्याख्यानम उत्तरदेशीयैः द्वितीयं दाक्षिणात्यैः गुरुमुखादधीयते। यदाहम् अतिबाल्ये गादाधरव्याख्यासहितां पक्षतामपठम्, तदा मद्गुरुचरणा अवदन्– "पक्षता प्राणघातिनीति प्रसिद्धिः। अतः सावधानं त्वयायं ग्रन्थः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च। अन्यथा ग्रन्थतात्पर्यं यथावत् त्वया नावगन्तुं शक्यते" इति। अतोऽहं तदादि एव सावधानमधीतवान्, सतीर्थ्यैः सह बहुवारं चिन्तितवांश्च। अस्य ग्रन्थस्य सुखावबोधजनकं समुचितं व्याख्यानं निर्मातव्यमिति चिरादनुवर्तमानोऽभिलाषः वर्षद्वयात् प्राक् सफलः जातः। अधुना मुद्रणं च संजातमिति कृतकृत्योऽहं नितरां तुष्यामि।

अथ ग्रन्थप्रतिपाद्यविषयजातमध्येतृसौकर्यार्थं संगृह्णामि। व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। तत्र व्याप्तेर्निरूपणं पूर्वं कृतम् इदानीं पक्षधर्मता निरूप्यते। अनुमितिरूपैककार्यानुकूलत्वं व्याप्त्यनन्तरं पक्षधर्मतानिरूपणे संगतिः। पक्षधर्मता च पक्षताश्रयवृत्तित्वरूपा पक्षतायां ज्ञातायां सुज्ञानेति पक्षतैवात्र निरूप्यते। तत्र विशेष्यतासंबन्धेन साध्यप्रकारकसंदेहः पक्षता। पर्वतो वह्निमान्न वेत्याकारकः वह्निप्रकारकः संदेहः विशेष्यतासंबन्धेन पर्वते वर्तत इति पर्वतस्य पक्षत्वम् इति प्राचीनाः। मणिकारा एतन्मतमित्थं दूषयन्ति–साध्यसंदेहः किमनुमित्यव्यवहितप्राक्क्षणवृत्तिः सन्ननुमितौ हेतुः, उत यदा कदापि वर्तमानः? आद्ये यत्र साध्यसंदेह–लिङ्गदर्शनव्याप्तिस्मरणपरामर्शक्रमेणानुमितिर्जायते तत्र अनुमित्यव्यवहितपूर्वक्षणे साध्यसंदेहस्याभावात् साध्यसंदेहं विनापि अनुमितेर्जायमानतया व्यतिरेकव्यभिचारः।

द्वितीये दिनद्वयादेः प्राक् यत्र साध्यसंदेहः अथ लिङ्गदर्शनादिक्रमेण परामर्शः सिद्धिश्च तत्राप्यनुमित्यापत्ति । सिद्धिकालेऽनुमितिवारणाय हि पक्षताया अनुमितिहेतुत्वमुपेयते । अनुमितेः पूर्वं यदा कदाचित् स्थितस्य साध्यसंदेहस्याप्यनुमितिहेतुत्वे तद्बलात् सिद्धिकालेऽप्यनुमित्यापत्त्या सिद्धिकालेऽनुमितिवारणरूपप्रयोजनानिर्वाहात् पक्षताया हेतुत्वं न स्यात् इति । साध्यनिश्चयरूपसिद्धिकाले साध्याभावनिश्चयरूपबाधकाले चानुमितेरनुत्पत्त्या सिद्ध्यभाव-बाधाभावयोः पक्षताविधया अनुमितिहेतुत्वं केचिदाहुः । तदपि न । बाधाभावस्य पक्षताशरीरे प्रवेशवैयर्थ्यात् । बाधज्ञानस्य हेत्वाभासज्ञानविधया प्रतिबन्धकतया तत्कालेऽनुमितिवारणसंभवात् । अन्यथा असिद्ध्यादिज्ञानकालेऽप्यनुमितेरनुत्पत्त्या तेषामभावानामपि पक्षताशरीरे प्रवेशप्रसङ्गात् । तर्हि सिद्ध्यभावमात्रं पक्षतास्तु इति नाशङ्कनीयम् । सिद्धिकालेऽपि सिषाधयिषायां सत्यामनुमितेरुत्पत्त्या तदनिर्वाहात् । तदा सिद्ध्यभावविरहात् ।

केचित्तु सिषाधयिषा पक्षता । अतः सिद्धिकाले सिषाधयिषायाः सत्त्वे तद्बलात् अनुमितिः । तस्या असत्त्वे पक्षताविरहात् नानुमितिरित्याहुः । तदपि न । तस्याः संदेहवत् अनुमित्यव्यवहितपूर्ववृत्तितया अन्यथा वा हेतुत्वे तथैव दोषप्रसक्तेः । किं च सिषाधयिषां विनापि घनगर्जितश्रवणेन मेघानुमानात् व्यतिरेकव्यभिचारेण न तस्या अनुमितिहेतुत्वम् ।

तस्मात् सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । यत्र सिषाधयिषा सिद्धिश्च स्तः तत्र सिषाधयिषाविरहरूपस्य विशेषणस्याभावात् विशिष्टसिद्ध्यभावरूपा पक्षता । यत्र सिषाधयिषा सिद्धिश्च न स्तः तत्र सिद्धिरूपस्य विशेष्यस्याभावात् विशिष्टाभावरूपा पक्षता । यत्र सिषाधयिषा अस्ति सिद्धिर्नास्ति, तत्र सिषाधयिषाविरहरूपविशेषणस्य सिद्धिरूपस्य विशेष्यस्य चाभावात् विशेषणविशेष्योभयाभावप्रयुक्तो विशिष्टाभावः । यत्र सिषाधयिषा नास्ति सिद्धिरस्ति तत्र

विशेषणविशेष्योभयसत्त्वात् न पक्षता इति सिद्धान्तितं मणौ ।

दीधितौ सिद्धान्तपक्षतायाम् आदौ सिषाधयिषापदार्थः तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकानुमितिविषयकेच्छेति परिष्कृतः । ततः इच्छानां तत्तद्व्यक्तित्वेनैवोत्तेजकत्वं नानुगतरूपेणेत्युक्तम् । ततो लिङ्गभेदेन पक्षताया भिन्नत्वं स्वीकृत्य तल्लिङ्गकानुमितौ तल्लिङ्गकानुमितीच्छा सिषाधयिषापदेन उत्तेजकतया विवक्षणीया इति प्रतिपादितम् ।

ततः सिद्धिपदार्थविवेचनपूर्वकं पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकावच्छेदेन सिद्धिरेव प्रतिबन्धिका । पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु पक्षतावच्छेदकसामानाधिकरण्येन पक्षतावच्छेदकावच्छेदेन च सिद्धिः प्रतिबन्धिका इति निरूपितम् । ततः पक्षविशेष्यकानुमितौ पक्षविशेष्यकसिद्धिर्विरोधिनी । साध्यविशेष्यकानुमितौ साध्यविशेष्यकसिद्धिः पक्षविशेष्यकसिद्धिश्च विरोधिनी । साध्यप्रसिद्धिरेव वा विरोधिनीति न्यरूपि ।

ततः सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वेऽपि यत्र सिषाधयिषालिङ्गदर्शनव्याप्तिस्मरणसिद्धिपरामर्शानुमितयः क्रमेण भवन्ति तत्र परामर्शक्षणे सिषाधयिषानाशात् सिषाधयिषाविरहविशिष्टसिद्धेरेव सत्त्वात् तदभावरूपा पक्षता न निर्वहतीत्याक्षेपमुद्भाव्य यज्ञपत्युपाध्यायमतानुसारेण परामर्शपूर्वक्षणे परामर्शद्वितीयक्षणे वा सिषाधयिषान्तरोत्पत्त्यैवानुमितिः सम्पादनीया । अनुमित्सान्तरोत्त्यैव सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षताया निर्वाहात् इति समाहितम् ।

ततो मिश्रमतमाश्रित्य अनुमित्सायोग्यताया उत्तेजकत्वं स्वीकृत्य उक्तस्थले अनुमित्साया नाशेऽपि अनुमित्सायोग्यतायाः सत्त्वात् अनुमित्सायोग्यताविरहविशिष्टसिद्ध्यभावरूपा पक्षता निर्वहति । अनुमित्सायोग्यता च अनुमित्सानन्तरं यावता कालेन परामर्शो जायते तावान् कालः इति समाहितम् ।

ततः उक्तस्थले अनुमित्सान्तरमकल्पयित्वा योग्यताया श्चोत्तेजकत्वमनादृत्य सिद्धौ सिषाधयिषाविरहवत् सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वरूपं विशेषणमपि दत्त्वा सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्न–सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वं स्वीकृत्य अनुमितिमुपपादयतः सार्वभौमस्य मतमनूद्य तत् बहुधा दूषितम्। एतेषु मतेषु उपाध्यायमत एव दीधितिकाराणां नैर्भर्यम्।

ततः यथा सिद्धिकाले नानुमितिः पक्षताविरहात् तथा समानविषयकप्रत्यक्षशाब्दबोधसामग्रीकालेऽपि नानुमितिः पक्षताविरहादेव। अतः प्रत्यक्षादिसामग्र्यभावोऽपि पक्षताकुक्षौ प्रवेशनीयः। तदनुसारेण मूलस्थं साधकमानपदं सिद्धि—अनुमित्यतिरिक्तसिद्धिसामग्र्यन्यतरपरमास्थेयम्। समानविषयकप्रत्यक्षादिसामग्रीदशायामपि अनुमित्सायां सत्यामनुमितेरुत्पत्त्या प्रत्यक्षादिसामग्र्यामपि अनुमित्सायाः उत्तेजकत्वम्। तथा च सिषाधयिषाविरहविशिष्टस्य सिद्ध्यनुमित्यतिरिक्तसिद्धिसामग्र्यन्यतरस्याभावः पक्षतेति उपाध्यायमतं बहुभिः प्रकारैः खण्डितम्।

तदनन्तरम् उत्तेजकताभिमतसिषाधयिषाकारणतां स्वीकृत्य सिद्ध्यभावकारणत्वाक्षेप्तॄणां मतमवलम्ब्य सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्त्वित्याक्षिप्य सिषाधयिषाया अननुगतत्वात् सिद्ध्युत्तरानुमितित्वस्य दुर्वचत्वाच्च अननुगतसिषाधयिषाभावकूटविशिष्टसिद्ध्यभावस्य हेतुत्वमेवोचितमिति समाहितम्।

ततः पक्षता नानुमितिहेतुरिति प्राभाकरमतमनूद्य खण्डितम्।

दीधितिव्याख्यायां गादाधर्यां प्रतिविषयं बहवो विचाराः परिष्काराश्च कृताः। एतस्य सव्याख्यस्य ग्रन्थस्य प्रत्यक्षरं सावधानं पठनेन न्यायशास्त्रे महती व्युत्पत्तिर्लभ्यते बहवश्च विषयाः सर्वशास्त्रोपकारकाः ज्ञायन्त इत्यनुभवसाक्षिकमिदम्।

भावबोधिन्याख्यायाः व्याख्यायाः निर्माणे मुख्यप्रेरकाः मद्रास्विश्वविद्यालये संस्कृतविभागाध्यक्षाः अस्मत्तः यथावकाशं नव्यन्यायशास्त्रं सावधानमधीयानाः न्याय–व्याकरणवेदान्तेषु कृतभूरिपरिश्रमाः प्राच्य-प्रतीच्यविद्यानिष्णाताः डा० वीलिनाथन्महोदयाः। मया लिखितायाः व्याख्यायाः तत्रैव विश्वविद्यालये व्याख्यातृपदमधितिष्ठन्त्या न्यायशास्त्रे समुचितव्युत्पत्तिमत्या डा० रेवतीमहोदयया सुन्दरैः दैवनागराक्षरैः प्रतिलिपिर्विलिखिता। सैव प्रतिलिपिर्मुद्रणालये दत्ता। अतस्तयोरहं कृतज्ञः सन्नाशिषः प्रयुनज्मि।

मया कृतां पञ्चलक्षणीव्याख्यां दृष्ट्वा भारते बहवो विद्वांसः प्रशंसापूर्वकमितरेषामपि ग्रन्थानामीदृशीं व्याख्यां विरचयन्तु, येन च्छात्राः अध्यापकाश्चोपकृताः स्युरिति पत्रमलिखन्। पञ्चलक्षणीव्याख्यानस्य प्रतयः सर्वाः विक्रीताः। पुनर्मुद्रणं तस्याः कर्तव्यमस्ति। एवमेवेदं पक्षताव्याख्यानं छात्राणां विदुषां चोपकारमादध्यादिति विश्वसिमि।

राष्ट्रियसंस्कृतसंस्थाननिदेशकाः डा० मण्डममिश्रमहोदयाः प्रकाशनसमितिद्वारा अस्य ग्रन्थस्य मुद्रणम् विद्यापीटकार्यतया अनुमतवन्त इति तेभ्यो हृदयपूर्वकं धन्यवादं समर्पयामि।

मया कृतानां चतुर्दशलक्षणी–अवयव–अवच्छेदकतानिरुक्तिगादाधरीव्याख्यानानामपि प्रकाशनं प्रतीक्षे। तत् संस्थाननिदेशकानां साहाय्येन सम्पत्स्यत इति प्रत्येमि। व्याख्यायां मुद्रणे वा याः त्रुटयः स्युः ताः विद्वद्भिः 'गच्छतः स्खलनं न दोषाय' इति न्यायेन मर्षणीया इति साञ्जलिबन्धं प्रार्थये। एकस्य ग्रन्थस्य निर्माणे प्रतिकृतिलेखने मुद्रणे च यावन्तः शारीराः मानसाश्च क्लेशा भवन्तीति अनुभवैकवेद्यम्। भगवान् वेंकटेश्वरः, विद्वांसः, गुरवश्च कर्मणानेन प्रीताः सन्तः मामनुगृह्णीयुः।

15-12-88
तिरुपति

एन्. एस्. रामानुजताताचार्यः

# INTRODUCTION

Inferential cognition is a cognition that arises from subsumptive reflection (parāmars'a). The latter is a complex cognition that arises from a combination of the knowledge of invariable concomitance (vyāptijñāna) and that of the presence of the hetu in the pakṣa. technically known as pakṣadharmatājñāna. Just as the knowledge of invariable concomitance–vyāptjñāna is the cause of the inferential cognition, in the same way, the knowledge of the presence of the hetu in the pakṣa, that is, the pakṣadharmatājñāna too is the cause of inferential cognition. Gaṅges'a in his Tattvacintāmaṇi has explained the definitions of vyāpti–both the prima facie ones and the final one and then sets out to discuss the nature of pakṣadharmatā.

Pakṣadharmatā, as we have said, is only the presence of hetu in the pakṣa or the subject of inference. The question arises as to what precisely is the factor that makes a thing a proper subject or pakṣa of inference. Or, what is pakṣatā? When once this is made clear, it would be easier to explain pakṣadharmatā which is only the presence of hetu in the substratum of pakṣatā, that is, pakṣa. It is with this in view, Gaṅges'a, having said that pakṣadharmatā is being explained after discussing the definitions of vyāpti proceeds to discuss the nature of pakṣatā in the texts beginning with.

na tāvat sandigdhasādhyavattvaṁ pakṣatvam

Before descending into details, it is necessary to note that pakṣatā is essential to account for the absence of the rise of inferential cognition when there is the certainty regarding the existence of sādhya (sādhya-siddhi). It is thus: if one perceives fire in the hill, there would not arise in his case the inferential cognition 'The hill has fire'. Hence in an instance like this the hill would not be a proper subject or pakṣa of an inferential cognition of the form 'The hill has fire'. In other words there is no pakṣatā and as such there would be no inference.

If, however, a person desires to infer fire in the hill in spite of his perceiving it there and thus having certainty about it, then the process of inference is noticed in his case provided that he sees smoke there and remembers the invariable relation between smoke and fire. And in this case there would be paṣatā, that is, the hill becomes a proper subject for the inferential argument.

Some logicians hold the view that the desire to infer (siṣādhayiṣā) constitutes pakṣatā. Hence there may be inference on the strength of the desire to infer inspite of one having certainty about sādhya. This view does not hold good in view of the fact that one involuntarily infers the existence of clouds from the roar of thunder. This case shows that there is the rise of the inferential cognition even when there is no desire to infer. As such desire to infer cannot constitute pakṣatā.

Yet another group of logicians maintain the view that doubt regarding the existence of sādhya (sādhya-sandeha) constitutes pakṣatā. Gaṅges'a rejects this view on the following grounds: it may be said that sādhya-sandeha which is pakṣatā is the cause of the inferential cognition by being present in the moment immediately preceding the rise of the inferential cognition, or by being present at some point of time prior to the rise of the inferential cognition. To either of the views there are difficulties. In an instance when there exist doubt regarding sādhya in the first moment, perceptual knowledge of the hetu in the second moment, recollection of vyāpti in the third moment. subsumptive reflection in the fourth moment, and inferential cognition in the fifth moment, doubt will be lost in the moment prior to the moment of subsumptive reflection. The point that is of importance here is that doubt regarding sādhya does not exist in the moment immediately preceding the rise of inferential cognition and so the former cannot be viewed as the cause of inferential cognition. In other words, doubt regarding the sādhya cannot be viewed as pakṣatā.

To get over this difficulty if it is held that doubt regarding sādhya is the cause of inferential cognition by being present at some point of time prior to the rise of inferential cognition then there is the possibility of the rise of inferential cognition even when there exists certainty about sādhya. It must be noted that doubt about sādhya existed in the present case at some point of time. The

result of this argument is that there is the rise of the inferential cognition even when there is the certainty about sādhya. But the purpose of admitting pakṣatā is to ward off the rise of inferential cognition when there is certainty about sādhya. And this purpose would not be served if we admit that doubt regarding sādhya is the cause of inferential cognition by being present at some point of time prior to the rise of inferential cognition. Hence the definition of pakṣatā as sādhya-sandeha is not correct.

Some other logicians hold that since inferential cognition does not arise when there is certainty about Sādhya and also when there is certanty about the absence of sādhya, it must be held that siddhyabhāva and bādhābhāva must be viewed as paksatā. This also is wrong. It is because no useful purpose will be served by including bādhābhāva in the body of the definition of pakṣatā. The knowledge of bādha in its capacity as the knowledge of hetvābhāsa prevents the rise of inferential cognition. If it is held that bādhābhāva constitutes pakṣatā and it is the cause of inferential cognition on the ground that bādha prevents the rise of inferential cognition, then it may very well be said that absence of asiddhijñāna, etc., too is to be viewed as pakṣatā and it is the cause of the inferential cognition on the ground that the knowledge of asiddhi prevents the rise of the inferential cognition. It would come to this that the concept of hetvābhāsa itself would not hold good.

It may be said that then in that case absence of siddhi alone may be viewed as constituting pakṣatā as there arises inferential cognition then. This too is wrong because at the time of siddhi when there exists the desire to infer, there definitely arises the inferential cognition. Since in the absence of siddhyabhāva there arises the inferential cognition, siddhyabhāva or absence of siddhi cannot be viewed as constituting pakṣatā.

The logical difficulties in the definitions set forth above have led Gaṅges'a to formulate his definition which is as follows :

siṣādhayiṣāvirahavis'iṣṭasiddhyabhāvaḥ pakṣatā

This definition may be explained as follows : a person actually perceives fire in the hill. He has thus certainty about the existence of the sādhya. In other words, there is siddhi. Normally this would prevent him from inferring the fire. But if he has the desire to infer (siṣādhayiṣā), then siddhi which thwarted the rise of the process of inference is checked by the desire to infer allowing inference to take place. The desire to infer is known as uttejaka.

In so far as the desire to infer and the certainty of the sādhya are concerned there are three situations which are as follows :

a) there are desire to infer and certainty :
b) there is absence of both the desire to infer and certainty; and,
c) there is desire to infer but no certainty.

In the first case, the adjectival feature, namely, absence of desire to infer is not present although the substantive feature, namely, certainty is present. This leads to the absence of the complex entity, namely, certainty associated with absence of desire to infer. The result is that there is the absence of certainty as associated with the absence of the desire to infer.

In the second case, the adjectival feature, namely, the absence of desire to infer exists, but the substantive feature, namely, siddhi does not exist. The absence of the complex entity, namely, absence of siddhi as associated with the absence of desire to infer is caused by the absence of the substantive feature.

In the third case, the adjectival feature, namely, the absence of desire to infer does not exist, and the substantive feature, namely, certainty too does not exist. It is the absence of the two that leads to the absence of the complex entity.

Thus inference would take place in all these three cases as there is pakṣatā. There is the fourth situation which can be formulated as a case of certainty with the absence of the desire to infer. This represents the case where there is absence of pakṣatā.

Thus the definition –

sişādhayişāvirahavis'iṣṭasiddhyabhāvaḥ pakṣatā

holds good.

An objection suggests itself at this stage. In an in-

stance where desire to infer certainty about sādhya, subsumptive reflection and inferential cognition arise successively, therein the desire to infer is lost at the time of subsumptive reflection and as such there is certainty about sādhya associated with the absence of desire to infer. The absence of certainty about sādhya associated with the absence of desire to infer which is proved to be pakṣatā does not exist. And in its absence inferential cognition has arisen. So pakṣatā of this nature cannot be considered to be the caūse of inferential cognition.

Yajñapatyupādhyāya overcomes the above difficulty by admitting the rise of another desire to infer either during the moment prior to subsumptive reflection or subsequent to it. Thus we would have absence of certainty associated with the absence of desire to infer. This, however, is caused by the absence of the adjectival feature, namely, the absence of desire to infer.

Sārvabhauma, however, overcomes the difficulty pointed out earlier by admitting that siddhi or certainty about sādhya must be associated with another adjectival feature, namely, siṣādhayiṣāvirahavis'iṣṭasvakṣaṇāvyavahitottarakṣaṇotpattikānumitikabhinna besides siṣādhayiṣāvirahavis'iṣṭa. This means pakṣatā is absence of certainty (i) which is associated with the absence of desire to infer and, (ii) which is different from the one that has inferential cognition that arises at the moment immediately subsequent to the moment which is associated with the absence of desire to infer. In the case cited

above, certainty is associated with the absence of desire to infer. But it is not different from the one that has inferential cognition which arises at the moment immediately subsequent to the moment that is associated with the absence of desire to infer. It is thus: siṣādhayiṣa, siddhi, parāmars'a and anumiti have arisen successively in the present case. The moment which is associated with the absence of desire to infer is the moment during which parāmars'a has arisen. And in the next moment anumiti has arisen. Here siddhi is associated with the absence of desire to infer. This is the substantive part. But siddhi is not associated with the adjectival part, namely, difference from the one that has inferential cognition that arises at the moment immediately subsequent to the moment that is associated with the absence of desire to infer. It is because inferential cognition actually arises in the moment subsequent to the moment of the rise of parāmars'a associated with the absence of desire to infer. It is this absence of the adjectival part that accounts for the absence of the complex entity which is pakṣatā.

The above definition involves the defect of prolixity. Further it involves the defect of interdependence too. It is thus : in the body of the definition of pakṣatā, 'origination of inferential cognition' is involved. And it requires to be explained on the basis of the presence of pakṣatā. And the latter could be explained only in relation to the origination of iuferential cognition. So the definition of pakṣatā as amended by Sārvabhauma does not hold good.

Mis'ra argues that in the instance where siṣādhayiṣā, siddhi, parāmars'a and anumiti arise successively, it is true that the moment prior to the rise of anumiti is characterized by siṣādhayiṣāvirahavis'iṣṭasiddhi and as such it may be argued that there is no pakṣatā of the form sisādhayiṣāvirahavis'iṣṭasiddhyabhāva. But the word siṣādhayiṣā stands for siṣādhayiṣāyogyatā. The latter is defined as the period of time between the rise of siṣādhayiṣā and that of parāmars'a Hence at the time of parāmars'a, sidddi exists, siṣādhayiṣā is lost but siṣādhayiṣāyogyatā is present. And as such we have siṣādhayiṣāyogyatāvirahavis'iṣṭasiddhyabhāva which is pakṣatā. This definition too is not to be favoured as it involves the defect of prolixity.

Yajñapatyupādhyāya has set forth another definition of pakṣatā. He argues that in regard to the rise of inferential cognition the following factors are necessary:

1) absence of certainty associated with the absence of desire to infer; and,
2) the absence of the causal aggregates leeding to perceptual cognition and verbal co nition in regard to the object of inferential cognition.

If the causal aggregate leading to the perceptual cognition or verbal cognition of fire in the hill is present then inferential cognition will not arise. Hence the absence of the causal aggregate leading to the perceptual cognition and verbal cognition must be viewed as the

cause of inferential cognition. Hence the definition of pakṣatā would be :

sisādhayiṣāvirahaviśiṣṭasya siddhyanumānātirikta-

sādhakamānayoranyatarasyābhāvaḥ pakṣatā

This definition should not be favoured on the following ground : the causal aggregate leading to perceptual cognition or verbal cognition is the factor that quite independently constitutes the pratibandhaka in regard to the rise of inferential cognition and its abhāva is an independent cause. There is no valid reason to hold that the absence of the causal aggregate of perceptual and verbal cognition is the cause of inferential cognition as pakṣatā.

The above are some of the important views discussed in the text of the Gādādharī on pakṣatā. According to Gadādhara, Raghunātha Siromaṇi favours the view of Yajnāpatyupādhāya that in the case of the rise of siṣādhayiṣa, siddhi, parāmarśa and anumiti successively, there arises a fresh siṣādhayiṣā either at the moment prior to parāmarśa or subsequent to it. Thus will be having siṣādhayiṣāvirahaviśiṣṭasiddhyabhāva although the siṣādhayiṣā which arose at the first moment has been lost.

It is generally believed that the text of Pakṣatā is very difficult to understand even in the case of qualified logicians in India. This criticism is true to some extent. Therefore, the present commentary entitled, Bhāvabodhinī was solely written with the purpose of elucidating the text so that trained logicians will be able to grasp the fundamentals of the text without difficulty.

We record our sincere thanks to "Sri Satya Sai Printers" for the neat printing of this book.

Tirupati,
15-12-1988

(N. S. RAMANUJA TATACHARYA)

# विषयानुक्रमणिका

। श्रीरस्तु ।

# त त्त्व चि न्ता म णौ

## प क्ष ता

व्याप्तिनिरूपणानन्तरं पक्षधर्मता निरूप्यते ।

---

दीधितिः

अनुमितिलक्षणैककार्यानुकूलत्वसङ्गत्या व्याप्त्यनन्तरं पक्षधर्मतां निरूपयितुमाह-व्याप्तीति ।

---

गादाधरी

मूले व्याप्तिपक्षधर्मतयोः सङ्गत्यप्रदर्शनेन न्यूनतां परिजिहीर्षुः तयोरेककार्यकारित्वरूपां सङ्गतिं प्रदर्शयन् व्याप्त्यनन्तरमित्यादिमूलमवतारयति–अनुमितीति । अनुमितिलक्षणम् – अनुमितिस्वरूपं यत् एकं कार्यम्, तदनुकूलत्वसङ्गत्या – तत्प्रयोजकत्वरूपसङ्गत्या, प्रयोजकत्वं च कारणतावच्छेदकस्यापीति व्याप्तिपक्षधर्मतयोः परामर्शनिष्ठकारणतायामवच्छेदकत्वेनानुमित्यजनकत्वेऽपि न क्षतिः ।

---

भावबोधिनी

श्रीवेङ्कटाद्रिनिलयं करुणानिधानं
लक्ष्मीनिवासहृदयं रमणीयरूपम् ।
भक्ताभयप्रदमभीष्टफलप्रसूतिं
देवाधिदैवमनघं शरणं प्रपद्ये ॥

व्याप्त्यनन्तरं पक्षधर्मता निरूप्यत इति मणिग्रन्थः । पक्षधर्मता व्याप्तिनिरूपणा-

### भावबोधिनी

व्यवहितोत्तरकालिकनिरूपणविषय इति तदर्थः। इतः प्राक् व्याप्तिर्निरूपिता। अथेदानीं पक्षधर्मता निरूप्यते। तत्र व्याप्तिनिरूपणानन्तरं पक्षधर्मतानिरूपणे का सङ्गतिरिति जिज्ञासायां दीधितौ 'अनुमितिलक्षणैककार्यानुकूलत्वसङ्गत्या' इत्युक्तम्। यथा 'साध्यव्याप्यो हेतुः' इत्याकारकं व्याप्तिज्ञानमनुमितिजनकं तथा 'हेतुमान् पक्षः' इत्याकारकं पक्षधर्मताज्ञानमप्यनुमितिजनकम्। तथा चानुमितिरूपैककार्यानुकूलत्वं व्याप्तिपक्षधर्मतयोरस्तीति एककार्यकारित्वाख्यसङ्गत्या व्याप्तिनिरूपणानन्तरं पक्षधर्मतानिरूपणमिति भावः। **न्यूनता।** अवश्यवक्तव्यस्याकथनम्। अनुमितेर्लक्षणमिति षष्ठीतत्पुरुषभ्रमवारणाय **अनुमितिस्वरूपमित्युक्तम्।** तथा च लक्षणशब्दः स्वरूपपरः। अनुमितिः लक्षणं स्वरूपं यस्य तत् इति बहुव्रीहिरिति भावः। ननु व्याप्तिज्ञानपक्षधर्मताज्ञानयोः अनुमितिजनकत्वेपि व्याप्तिपक्षधर्मतयोः अनुमितिजनकत्वाभावात् कथं तयोः अनुमितिरूपैककार्यानुकूलत्वमित्यतो व्याचष्टे—**तदनुकूलत्वसङ्गत्या तत्प्रयोजकत्वरूपसङ्गत्येति।** तथा च प्रयोजकत्वं कारणकारणतावच्छेदकोभयसाधारणम्। कारणत्वकारणतावच्छेदकत्वान्यतररूपं प्रयोजकत्वमिति यावत्। विषयितासंबन्धेन व्याप्तिविशिष्टस्य पक्षधर्मताविशिष्टस्य च परामर्शात्मकज्ञानस्य अनुमितिकारणत्वात् व्याप्तिपक्षधर्मतयोः विषयितासंबन्धेन तत्कारणतावच्छेदकत्वमस्तीति अनुमितिकारणतावच्छेदकत्वरूपप्रयोजकत्वाख्यसङ्गतिरुभयोरक्षतेति भावः। तदाह **प्रयोजकत्वं चेति।** अपिना कारणं समुच्चीयते। अनुमित्यजनकत्वेऽपि कारणतायामवच्छेदकत्वेन न क्षतिरित्यन्वयः।

ननु मणौ 'व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते' इति प्रतिज्ञाय 'तत्र न तावत्संदिग्धसाध्यधर्मत्वं पक्षत्वम्' इत्यादिना पक्षता निरूप्यते न पक्षधर्मता। तस्यायमाशयः पक्षतास्वरूप एव विवादसद्भावात् तन्निरूपणेन तत्स्वरूपे ज्ञाते सति पक्षताश्रयवृत्तित्वरूपा पक्षधर्मता सुज्ञानेति। तत्र निरूप्यमाणया पक्षतया सहापि व्याप्तेः सङ्गतिर्वक्तव्या। तत्र न तावत् पक्षताव्याप्त्योः अनुमितिजनकतावच्छेदकत्वरूप-प्रयोजकत्वाख्यसङ्गतिर्भवितुमर्हति। पक्ष·वाविषयकस्य 'पर्वतः धूमवान्' इत्याद्याकारकस्य पक्षधर्मताज्ञानस्यैवानुमितिजनकतया पक्षतायाः परामर्शनिष्ठानुमिति-

## तत्त्वचिन्तामणिः

तत्र न तावत्सन्दिग्धसाध्यधर्मत्वं पक्षत्वम्; सन्देहो हि न विशेषणम्; परामर्शपूर्वं लिङ्गदर्शनव्याप्तिस्मरणादिना तस्य नाशात्

## दीधितिः

यत्र साध्यस्य यादृशसम्बन्धावगाहिनिर्णयनिवर्त्यो यः संशयः स तत्र तादृशसंबन्धेन साध्यानुमितौ पक्षतेत्यर्थः । तेन न पक्षसाध्यविशेष्यकसंशयाननुगमः ।

## गादाधरी

यद्यपि पक्षताया न कारणतावच्छेदकघटकत्वम्, तामनन्तर्भाव्य पक्षतादिवृत्तित्वज्ञानत्वेनैवानुमितिजनकत्वात्; तथापि पक्षताया अनुमितौ स्वातन्त्र्येण कारणता तदुपलक्षितधर्मिवृत्तितायाः कारणतावच्छेदकतया तद्घटितविशिष्टस्यैककार्यानुकूलत्वमक्षतमेवेति ध्येयम् ।

निरूपयितुमिति । निरूपणम्—प्रतिपत्त्यनुकूलव्यापारः; एवं च पक्षधर्मताघटकपक्षतानिरूपणस्यापि पक्षधर्मताप्रतिपत्त्यनुकूलत्वेन तन्निरूपणत्वमक्षतमेवेति मूले पक्षतानिरूपणेपि पक्षधर्मतां निरूपयितुमित्यस्य नाऽसङ्गतिः । पक्षे धर्मत्वं यस्या इति व्युत्पत्त्या पक्षधर्मतापदं पक्षीयधर्मविशेषरूपपक्षतापरमिति केचित्; तच्चिन्त्यम्; तथात्वे लिखनसंक्षेपनिर्बंधिनो दीधितिकारस्य " पक्षतां निरूपयितु " मित्यस्योपेक्षायां बीजाभावात् ।

## भावबोधिनी

जनकतानिरूपितविषयितासंबन्धावच्छिन्नावच्छेदकत्वविरहात् इत्याशङ्कते—यद्यपीति । न कारणतावच्छेदकघटकत्वम् इति । कारणे परामर्शे ये विषयाः ते कारणतावच्छेदकाः तेषु पक्षता नान्तर्भूता, तस्यास्तद्विषयत्वादित्यर्थः । तदाह—तामनन्तर्भाव्येति । पर्वतादिवृत्तित्वज्ञानत्वेनैवेति । एवकारेण पक्षताज्ञानत्वव्यवच्छेदः । समाधत्ते तथापीति । तथा च पक्षतायाः परामर्शाविषयतया यद्यपि अनुमितिकारणतावच्छेदकत्वं नास्ति, तथापि साध्यसंदेहादिरूपपक्षतायाः परामर्शवत् स्वातन्त्र्येणानु-

## गादाधरी

व्याप्तीति। व्याप्तिनिरूपणानन्तरमिति मूलपाठाभिप्रायेण; 'व्याप्त्यनन्तर' मिति पाठे च तत्र इकाराभावात् 'प्रत्यक्षे' त्याद्युपेक्ष्य प्रत्यक्षवित्यादिरीत्या प्रत्यक्षोपजीवकत्वादिति ग्रन्थधारकस्य तथाविधलिखनस्याऽसङ्गत्यापत्तेः। तत्रेति मूले तत्पदं पक्षधर्मतापरम्, सप्तम्यर्थश्च घटकत्वम्; अन्वयश्चास्य पक्षत्वमित्यनेनेत्यवधेयम्। सन्दिग्धे

---

## भावबोधिनी

मितिजनकत्वात् अनुमितिप्रयोजकत्वम्, पक्षताश्रयवृत्तित्वरूपपक्षधर्मतायाः अनुमितिजनकज्ञानविषयत्वात अनुमितिजनकतावच्छेदकत्वरूपं प्रयोजकत्वम् इत्युभयोः सङ्गततया निरूपणं युज्यत इति भावः। साध्यसन्देहादिरूपपक्षताया यो विषयतासंबन्धेनाश्रयः तस्य हेतोश्च वैशिष्ट्यावगाहिज्ञानमेवानुमितिहेतुः न तु पक्षतानाश्रयस्य हेतोश्च संबन्धज्ञानमिति ज्ञापनाय तदुपलक्षितधर्मिवृत्तिताया। इत्युक्तम्। तद्घटितविशिष्टस्येति। पक्षतोपलक्षितधर्मिवृत्तित्वरूपस्य विशिष्टस्येत्यर्थः।

ननु 'पक्षधर्मतां निरूपयितुमाह' इति दीधितिग्रन्थेन पक्षधर्मताविषयकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मणिकारः इति लभ्यते। परं तु उपरितनैः शब्दैः पक्षताविषयकज्ञानस्यैव जननात् कथं दीधितिग्रन्थः संगच्छत इत्याशङ्कानिराकरणाय व्याचष्टे—निरूपणं प्रतिपत्त्यनुकूलव्यापार इति। पक्षताज्ञानं विना पक्षताश्रयवृत्तित्वरूपपक्षधर्मताज्ञानं न संभवति। अतः पक्षताज्ञानजनकस्य शब्दस्य पक्षधर्मताज्ञानानुकूलत्वमस्तीति भावः। एतज्ज्ञापनायैव पक्षधर्मतां निरूपयतीत्यनुक्त्वा पक्षधर्मतां निरूपयितुमाहेत्युक्तिः। अनुकूलत्वेनेति तृतीयार्थोऽभेदः निरूपणत्वान्वयी। पक्षधर्मताविषयकज्ञानानुकूलत्वात्मकं पक्षधर्मतानिरूपणत्वमक्षतमेवेत्यर्थः।

केचित्तु पक्षधर्मतापदस्य पक्षतेत्यर्थः। तथा हि पक्षे धर्मत्वं यस्याः सा पक्षधर्मतेति विग्रहः। धर्मत्वपदस्य आधेयत्वमर्थः। पक्षनिरूपिताधेयत्वं यन्निरूपिताधेयत्वाश्रय इति विग्रहवाक्याद्बोधः। पक्षनिरूपिताधेयत्वाश्रयो य इति समासात् बोधः। पक्षवृत्तिरिति पक्षधर्मतापदस्य पर्यवसितोऽर्थः। पक्षता च पक्षवृत्तिर्भवतीति

## भावबोधिनी

पक्षधर्मतापदेन पक्षतैवोच्यते । पक्षवृत्तित्वेन सामान्यरूपेण पक्षतारूपः धर्मविशेषः उच्यत इति यावत् । अतः पक्षधर्मतां निरूपयितुमिति दीधितिग्रन्थस्य नासङ्गतिरिति व्याचक्षते । तन्मतमनुवदति- **पक्षे धर्मत्वं यस्या इति । तत्रेकाराभावादिति ।** श्रूयमाणाच्सहितस्यैव प्रतीकधारणमिति नियमात् 'व्याप्त्येति' इत्येव प्रतीकस्य धार्यत्वादिति भावः । ननु कुतोऽयं नियम इत्यत आह—**प्रत्यक्षेत्यादीति**—ननु नायं नियमः 'नन्वनुमितिहेतुभूतव्याप्तिज्ञाने' इति मणेः 'नन्वेति' इति प्रतीकमधृत्वा 'नन्विति' इत्येव प्रतीकधारणादिति चेत्—न । यत्र समासघटकस्याच्सहितस्य प्रतीकधारणं तत्रैव दर्शितनियमात् ।

यत्र साध्यस्येत्यादिदीधितिग्रन्थमवतारयति — **सन्दिग्धेत्यादिग्रन्थस्येत्यादिना ।** साध्यश्चासौ धर्मश्च साध्यधर्मः सन्दिग्धः साध्यधर्मो यत्र स सन्दिग्धसाध्यधर्मः तस्य भावः सन्दिग्धसाध्यधर्मत्वमिति विग्रहः । यत्रेति त्रल्प्रत्ययस्य विशेष्यत्वमर्थः । तत्र प्रकृत्यर्थस्य आधेयतासंबन्धेनान्वयः । विशेष्यतायाः निरूपकतासंबन्धेन सम्पूर्वकदिहधात्वर्थे सन्देहेऽन्वयः । क्तप्रत्ययस्य प्रकारत्ववान् अर्थः । तदेकदेश-प्रकारतायां निरूपितत्वसंबन्धेन धात्वर्थस्य सन्देहस्यान्वयः । प्रकारत्ववतः अभेद-संबन्धेन साध्याभिन्ने धर्मेऽन्वयः । यन्निष्ठविशेष्यतानिरूपकसन्देहनिरूपितप्रकारता-श्रयः साध्याभिन्नो धर्म इति विग्रहवाक्याद्बोधः । साध्याभिन्नधर्मनिष्ठप्रकारता-निरूपकसन्देहविशेष्यः समासार्थः । तदुत्तरभावप्रत्ययेन तादृशसन्देहविशेष्यत्वं बोध्यते । इत्थं च साध्याभिन्नधर्मप्रकारकसन्देहविशेष्यत्वं, विशेष्यतासंबन्धेन साध्याभिन्नधर्मप्रकारकसन्देहः पक्षतेति पर्यवस्यति । पर्वतो वह्निमान् धूमादित्यत्र साध्याभिन्नो धर्मः वह्निः तत्प्रकारकः सन्देहः पर्वतो वह्निमान्न वेति सन्देहः तद्विशेष्यत्वं पर्वतेऽस्तीति समन्वयः । परं त्वत्र कल्पे साध्यप्रकारकसन्देहस्यैव पक्षतात्वसंभवेन धर्मत्वनिवेशनमफलं भवति ।

यदि च धर्मपदसार्थक्याय एवं विग्रहः उच्यते-साध्यं धर्मो यस्य स साध्य-धर्मा तस्य भावः साध्यधर्मत्वं सन्दिग्धं साध्यधर्मत्वं सन्दिग्धसाध्यधर्मत्वं इति विग्रहः । साध्यं धर्मो यस्येत्यत्र धर्मशब्दस्य आधेयतावानर्थः । यस्येत्यत्र षष्ठ्या अधिकरणत्व-

## गादाधरी

स्यादिग्रन्थस्य सन्दिग्धः साध्यरूपो धर्मो यत्रेति व्युत्पत्त्या विषयतया साध्यीभूतधर्मसन्देहवत्त्वं तादृशसन्देहपर्यवसितं पक्षत्वमित्युक्तौ तत्र साध्ये धर्मत्वनिवेशनमफलम्। धर्मपदसार्थक्याय स्वस्मिन् सन्दिग्धं साध्यधर्मत्वं इति बहुव्रीहिबलात्साध्यनिरूपितधर्मित्वपर्यवसितं पक्षत्वमित्युक्तौ साध्ये सन्दिग्धं धर्मत्वं यस्य तत्त्वं पक्षत्वमित्युक्तौ च साध्यनिरूपितधर्मित्वस्य पक्षधर्मत्वस्य वा यत्राप्रसिद्धिः तत्र वक्ष्यमाणानुपपत्तिप्रयोजकं तत्। एवं साध्यकोटिकसंशयस्य निवेश साध्यं पक्षवृत्ति न वा? साध्यं पक्षनिष्ठात्यन्ताभावप्रतियोगि न वा? इत्यादिसंशयासंग्रहः, तादृशसंशयोपादाने च पक्षस्साध्यवान्नवेत्यादिसंशयादनुमित्यनुपपत्तिः अतो धर्मत्वांशं परित्यज्य

---

## भावबोधिनी

मर्थः। तत्र यत्पदार्थस्याधेयतासंबन्धेनान्वयः। अधिकरणत्वस्य आधेयतायां निरूपितत्वसंबन्धेनान्वयः। धर्मपदार्थस्याभेदसंबन्धेन साध्येऽन्वयः। तथा च यन्निष्ठाधिकारणतानिरूपिताधेयतावदभिन्नं साध्यमिति विग्रहवाक्यार्थः। साध्यनिष्ठाधेयतानिरूपिताधिकरणतावान् साध्यधर्मेति समासार्थः। भावप्रत्ययेन साध्यनिष्ठाधेयतानिरूपिताधिकरणत्वं प्रत्याय्यते। सन्दिग्धमित्यस्य सन्देहनिरूपितप्रकारतावदित्यर्थः। तस्याभेदसंबन्धेनाधिकरणत्वेऽन्वयः। सन्देहस्य विशेष्याकाङ्क्षायां स्वस्मिन्नित्यध्याह्रियते। सप्तम्यर्थो विशेष्यत्वं, तस्य निरूपकतासंबन्धेन सन्देहेऽन्वयः। स्वपदार्थः अधिकरणतावान्। तथा च स्वविशेष्यकसन्देहप्रकारीभूतं साध्यनिष्ठाधेयतानिरूपिताधिकरणत्वं पक्षतेति लभ्यते। यद्वा सन्दिग्धं साध्यधर्मत्वं यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः भावप्रधानश्च निर्देशः। त्रलो विशेष्यत्वमाधेयत्वं चार्थः। यन्निष्ठं साध्यनिष्ठाधेयतानिरूपिताधिकरणत्वं स्वविशेष्यकसन्देहप्रकारीभूतं इति विग्रहार्थः। भावप्रधानेन समासेन च स्वविशेष्यकसन्देहप्रकारीभूतं साध्यनिष्ठाधेयतानिरूपिताधिकरणत्वं पक्षतेति लभ्यते। पर्वतो वह्निमान् धूमादित्यादौ 'पर्वतो वह्न्यधिकरणं न वा' इति सन्देहं वा 'पर्वतो वह्निमान् न वा' इति सन्देहं वा आदाय तत्प्रकारीभूतं वह्निनिष्ठा-

धेयतानिरूपिताधिकरणत्वं पर्वतेऽस्तीति समन्वयः कार्यः। यद्वा सन्दिग्धं साध्यधर्मत्वं यत्रेति विग्रहात् यद्विशेष्यकसन्देहप्रकारीभूतं साध्यनिष्ठधेयतानिरूपिताधिकरणत्वमित्यर्थः लभ्यते। भावप्रधानात् समासात् साध्यनिष्ठाधेयतानिरूपिताधिकरणत्वप्रकारकसन्देहविशेष्यत्वं पक्षत्वमिति लभ्यते।

अथ वा सन्दिग्धं साध्ये धर्मत्वं यस्य तत् सन्दिग्धसाध्यधर्मत्वमिति विग्रहः। भावप्रधानश्च निर्देशः। साध्य इति सप्तम्याः विशेष्यत्वमर्थः। तत्र साध्यस्याधेयतासंबन्धेनान्वयः। विशेष्यतायाः निरूपकत्वसंबन्धेन सन्देहेऽन्वयः धर्मत्वमित्यस्य आधेयत्वमित्यर्थः। यस्येति षष्ठ्याः निरूपितत्वमित्यर्थः। तत्र निरूपितत्वसंबन्धेन यत्पदार्थस्यान्वयः। षष्ठ्यर्थस्य निरूपितत्वस्याश्रयतासंबन्धेन धर्मत्वेऽन्वयः। तथा च यन्निरूपितनिरूपितत्वाश्रयः आधेयत्वं यन्निरूपितमाधेयत्वमिति यावत् साध्यविशेष्यकसन्देहप्रकारीभूतं इति विग्रहवाक्यार्थः। साध्यविशेष्यकसन्देहप्रकारीभूताधेयतानिरूपकत्वं समासार्थः। वह्निः पर्वतवृत्तिर्नवेति सन्देहः साध्यविशेष्यकः तत्प्रकारीभूता या आधेयता तन्निरूपकत्व पर्वतेऽस्तीति समन्वयः इति, तर्हि यत्र साध्यनिष्ठाधेयतानिरूपिताधिकरणत्वं पक्षनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नाधेयत्वं वा अप्रसिद्धं तत्र तमः समवायेन गगनवत् इत्यत्र पक्षताया अनिर्वाहः। अतो दीधितौ प्रकारान्तरेण व्याख्यानमकारीति अवतरणगादाधर्याशयः।

विषयतयेति। विशेष्यतयेत्यर्थः। साध्यीभूतधर्मसन्देहवत्त्वमिति। साध्याभिन्नधर्मप्रकारकसन्देहवत्त्वमित्यर्थः। वक्ष्यमाणानुपपत्तीति। न वा तमःप्रभृतषु समवायेनाकाशादिसाधने तद्वैकल्यमिति ग्रन्थेन दीधितिकारवक्ष्यमाणा या अनुपपत्तिः पक्षतावैकल्यम् तत्प्रयोजकमित्यर्थः।

यत्र साध्यस्येत्यादिदीधितेः यद्धर्मावच्छिन्नविशेष्यकयादृशसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिर्णयनिवर्त्यो यः संशयः स तद्धर्मावच्छिन्नोद्देश्यकतादृशसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताशाल्यनुमितिजनकीभूता पक्षते-

## गादाधरी

केवलान्वयिग्रन्थे मणिकृतैव वक्ष्यमाणं तथाविधसकलसंशयानुगमप्रकारं दर्शयति यत्रेति। यत्र – यद्धर्मावच्छिन्ने सप्तम्यर्थो निर्णयान्वयि विशेष्यत्वम्। साध्यस्य साध्यतावच्छेदकावच्छिन्नस्य; षष्ठ्यर्थः प्रकारित्वम्; तस्यापि निर्णयेऽन्वयः। तत्र तद्धर्मावच्छिन्ने; सप्तम्यर्थोऽनुमित्यन्वयि विशेष्यत्वम्। तादृशसंबन्धेन साध्यानुमितौ तादृशसंसर्गावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितौ। पक्षता – जनकीभूते-

## भावबोधिनी

त्यर्थः। निवर्त्य इत्यस्य प्रतिबध्य इत्यर्थः। पर्वतो वह्निमान् धूमादित्यत्र पर्वतत्वावच्छिन्नोद्देश्यकसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिः पर्वतो वह्निमानित्यनुमितिः, तां प्रति पर्वतो वह्निमानित्याकारकनिर्णयनिवर्त्यः संशयः पक्षताविधया हेतुः। स च संशयः पर्वतो वह्निमान्नवेत्याकारकः वह्न्यभावविषये पर्वतो वह्निमानिति निर्णयस्य प्रतिबन्धकत्वात्। एवं वह्निः पर्वतवृत्तिर्नवा इति संशयः वह्निः पर्वतनिष्ठात्यन्ताभावप्रतियोगी न वेति संशयश्च पर्वतो वह्निमानिति निर्णयप्रतिबध्यः। प्राचीनमते पक्षः साध्यवानिति निश्चयस्य पक्षविशेष्यकसाध्याभावबुद्धाविव साध्यविशेष्यकपक्षावृत्तित्वप्रकारकबुद्धौ साध्यविशेष्यकपक्षनिष्ठाभावप्रतियोगित्वप्रकारकबुद्धौ च प्रतिबन्धकत्वात् सर्वेषां संशयानां संग्रहः।

दीधित्युक्तार्थस्य मणिग्रन्थाल्लाभप्रकारस्त्वित्थम्–धर्मपदपरित्यागे सन्दिग्धसाध्यत्वं पक्षत्वमिति मूलम्। सन्दिग्धं साध्यं यत्र तत् सन्दिग्धसाध्यं तस्य भावः संदिग्धसाध्यत्वमिति विग्रहः। यत्रेति सप्तम्याः विशेष्यत्वर्थः। तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः। विशेष्यतायाः निरूपकतासंबन्धेन संपूर्वकदिह-

भावबोधिनी

धात्वर्थे संदेहेऽन्वयः। क्तप्रत्ययस्य प्रतिबन्धकताश्रयनिर्णयनिरूपितप्रकारतावत् इत्यर्थः। प्रतिबन्धकतायां निरूपितत्वसंबन्धेन संदेहस्यान्वयः। प्रकारतावतः अभेदसंबन्धेन साध्येऽन्वयः। एवं च यद्विशेष्यकसंदेहप्रतिबन्धकनिर्णयप्रकारतावद-भिन्नं साध्यमिति विग्रहाल्लभ्यते। साध्यप्रकारकनिर्णयप्रतिबध्यसन्देहविशेष्यत्वं, विशे-ष्यतासंबन्धेन तादृशसंदेहवत्वं पक्षतेति समासात् बुध्यत इति।

पर्यवसितं कार्यकारणभावमाह—गादाधर्याम् एवं चेति। कार्यतावच्छेदककोटौ पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितत्वानिवेशे भूतलं वह्निमदित्याकारकानुमितेरपि शुद्ध-संयोगसंबन्धावच्छिन्नशुद्धवह्नित्वावच्छिन्नविधेयताकानुमितित्वरूपकार्यतावच्छेदकाक्रान्त-तया तस्याश्च पर्वतत्वावच्छिन्नविशेष्यकसंयोगसंसर्गकवह्नित्वावच्छिन्नप्रकारकनिश्चयप्रति-बध्यं पर्वतो वह्निमान्न वेति संशयं विनाप्युत्पत्त्या व्यतिरेकव्यभिचार इति तद्वारणाय तन्निवेशः। भूतलं वह्निमत् इत्यनुमितेः भूतलत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वा-वच्छिन्नविधेयताकत्वेऽपि पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकत्वा-भावेन कार्यतावच्छेदकानाक्रान्ततया न व्यतिरेकव्यभिचारः। कार्यतावच्छेदका-क्रान्तस्य कारणं विनोत्पत्तावेव व्यतिरेकव्यभिचारात्। पर्वतनिष्ठोद्देश्यतानिरूपित-त्वोक्तौ द्रव्यं वह्निमदित्यनुमितिमादाय तद्दोषतादवस्थ्यम् अतः पर्वतत्वावच्छिन्नोद्देश्य-तानिवेशः। तन्निवेशेऽपि पर्वतो वह्निमानितिस्थलीयस्य पर्वतत्वावच्छिन्नोद्देश्यता-निरूपितवह्नित्वावच्छिन्नविधेयताशाल्यनुमितित्वरूपस्य कार्यतावच्छेदकस्य 'अधिकं तु प्रविष्टं चेन्न तद्धान्यै' इति न्यायेन 'नीलपर्वतो वह्निमान्' इत्यनुमितावपि सत्त्वात् तस्याश्च पर्वतो वह्निमान्न वेति संशयं विनाप्युत्पत्त्या व्यतिरेकव्यभिचारः स्यात् तद्वारणाय शुद्धपर्वतत्वावच्छिन्नेत्युक्तम्। पर्वतत्वेतरधर्मानवच्छिन्नेति तदर्थः पर्वतत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकेति यावत्। नीलपर्वतो वह्निमा-नित्यनुमितेः पर्वतत्वेतरनीलत्वावच्छिन्नोद्देश्यताकत्वान्न दोषः। एवमपि जातित्वेन पर्वतत्वावगाहिनी या जातिमान् वह्निमानित्यनुमितिः तस्या अपि पर्वतत्वेतरधर्मान-

भावबोधिनी

वच्छिन्नोद्देश्यताकत्वेन कार्यतावच्छेदकाक्रान्ततया तस्याश्च पर्वतो वह्निमान्नवेति संशयं विनाप्युत्पत्त्या व्यतिरेकव्यभिचारः स्यात्, तद्वारणाय पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वं उद्देश्यतायां विवक्षणीयम्। पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्ना या जातित्वावच्छिन्ना पर्वतत्वनिष्ठावच्छेदकता तन्निरूपकोद्देश्यताकत्वमेव जातिमान् वह्निमानित्यनुमितेरिति न दोषः।

कार्यतावच्छेदककोटौ विधेयतायां शुद्धसंयोगसंबन्धावच्छिन्नत्वानिवेशे पर्वतः समवायेन वह्निमानित्यनुमितेरपि कार्यतावच्छेदकाक्रान्ततया तस्याश्च पर्वतः संयोगेन वह्निमान्न वेति संशयं विनाप्युत्पत्त्या व्यतिरेकव्यभिचारः स्यादतस्तन्निवेशः। तत्र शुद्धत्वानिवेशे संयोगेन वह्निसाध्यके पर्वतः संयुक्तसंयोगेन वह्निमानित्यनुमितेरपि कार्यतावच्छेदकाक्रान्ततया तस्याः पर्वतः संयोगेन वह्निमान्न वेति संशयं विनापि जायमानतया व्यतिरेकव्यभिचारः प्रसज्यते। तद्वारणाय शुद्धत्वनिवेशः। शुद्धसंयोगावच्छिन्नत्वं नाम किंचिन्निष्ठसांसर्गिकविषयत्वानिरूपितसंयोगनिष्ठसांसर्गिकविषयतानिरूपकत्वम्। संयुक्तसंयोगनिष्ठा सांसर्गिकविषयता तु संयुक्तनिष्ठसांसर्गिकविषयत्वनिरूपितेति तादृशानुमितेर्व्युदासः। यद्वा संयोगत्वेतरधर्मानवच्छिन्नसंयोगावच्छिन्नत्वं शुद्धसंयोगावच्छिन्नत्वम्।

वह्नित्वावच्छिन्नविधेयताकत्वानिवेशे पर्वतत्वावच्छिन्नोद्देश्यताकायाः पर्वतो द्रव्यवानित्यनुमितेः पर्वतो वह्निमान्न वेत संशयं विना जायमानतया व्यतिरेकव्यभिचारः स्यात्। तत्र शुद्धत्वानिवेशे तु पर्वतः सुन्दरवह्निमानित्यनुमितिमादाय व्यतिरेकव्यभिचारः स्यात्। वह्नित्वेतरधर्मानवच्छिन्नेति तदर्थ। पर्वतः सुन्दरवह्निमानित्यनुमितेः वह्नित्वेतरसुन्दरत्वावच्छिन्नविधेयताकत्वान्न दोषः। एवमपि जातित्वेन वह्नित्वावगाहिपर्वतो जातिमद्वानित्यनुमितेर्वारणाय वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वपर्यन्तं विवक्षणीयम्। उद्देश्यताविधेयतयोर्निरूप्यनिरूपकभावमनिवेश्य पर्वतत्वावच्छिन्नोद्देश्यताका वह्नित्वावच्छिन्नविधेयताका च

भावबोधिनी

यानुमितिः इति विवक्षणे भूतलं वह्निमत् पर्वतो घटवानित्याकारकसमूहालम्बनानुमितेरपि तादृशतया तस्याः पर्वतो वह्निमान्न वेति संशयं विनापि जायमानतया व्यतिरेकव्यभिचारः स्यात्। तद्वारणाय पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिं प्रतीत्युक्तम्। उक्तसमूहालम्बनानुमितेः भूतलत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकत्वेऽपि पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितघटत्वावच्छिन्नविधेयताकत्वेऽपि च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकत्वाभावेन कार्यतावच्छेदकानाक्रान्ततया न पूर्वोक्तव्यभिचारः। इत्थं च पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकोद्देश्यतानिरूपितकिंचिन्निष्ठसांसर्गिकविषयत्वानिरूपितसंयोगनिष्ठसांसर्गिकविषयतानिरूपक-वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविधेयताशाल्यनुमितित्वं कार्यतावच्छेदकमिति निष्कर्षः।

एतावता कार्यदिशि दलानां प्रयोजनान्युक्तानि। अथ कारणदिशि दलानां प्रयोजनान्युच्यन्ते। पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिसंशयो हेतुः। तत्र प्रतिबन्धकतायां निश्चयत्वावच्छिन्नत्वमनिवेश्य निश्चयनिष्ठत्वनिवेशे पर्वतो वह्निमान् भूतलं घटवद्वेतिसमूहालम्बननिश्चयस्यापि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकतया तन्निष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिनः भूतलं घटवान्न वेति संशयस्यापि पर्वतो वह्निमानित्यनुमितौ पक्षतात्वापत्तिः। अतो निश्चयत्वावच्छिन्नत्वनिवेशः। भूतलं घटवन्न वेति संशयस्य तादृशसमूहालम्बननिश्चयनिष्ठभूतलत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वेऽपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताकत्वाभावान्न पक्षतात्वापत्तिः। निश्चयत्वावच्छिन्नत्वं च

भावबोधिनी

तादृशनिश्चयत्वव्यापकत्वमिति परस्ताद्वक्ष्यते। पर्वतत्वावच्छिन्नविशेष्यतानिरूपितत्वानिवेशे वह्नित्वावच्छिन्नप्रकारताकनिश्चयत्वस्य महानसं वह्निमत् भूतलं वह्निमत् इत्यादिनिश्चयेष्वपि वर्तमानतया तत्र पर्वतो वह्निमान्न वेति संशयनिरूपितप्रतिबन्धकताविरहेण तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं कामितीजिज्ञासादावेव स्यात्, पर्वतो वह्निमान्न वेति संशये तु तन्नास्तीति तस्य पक्षतात्वं न स्यात्। अतः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितत्वनिवेशः। तन्निवेशे च पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वं न भूतलं वह्निमदित्यादिनिश्चयेऽस्ति, अपि तु पर्वतो वह्निमानिति निश्चय एव वर्तते। तत्र च पर्वतो वह्निमान्न वेति संशयप्रतिबन्धकता वर्तत एवेति तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं तादृशसंशयस्याक्षतमिति तस्य पक्षतात्वोपपत्तिः।

एवं वह्नित्वावच्छिन्नप्रकारताशालित्वानिवेशे पर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वस्य पर्वतो घटवान्, पर्वतः पटवानित्यादिनिश्चयेष्वपि सत्त्वेन तत्र पर्वतो वह्निमान्न वेति संशयप्रतिबन्धकताविरहात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं पर्वतो वह्निमान्न वेति संशये नास्तीति तस्य पक्षतात्वानुपपत्तिः अतः तन्निवेशः। प्रकारतायां संयोगसंबन्धावच्छिन्नत्वानिवेशे पर्वतः समवायेन वह्निमानिति निश्चयेऽपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वसत्त्वेन तत्र पर्वतः संयोगेन वह्निमान्नवेति संशयप्रतिबन्धकताविरहात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं तादृशसंशये नास्तीति तस्य पक्षतात्वं न स्यात्। अतः संयोगसंबन्धावच्छिन्नत्वनिवेशः। विशेष्यताप्रकारतयोर्निरूप्यनिरूपकभावानिवेशे पर्वतत्वावच्छिन्नविशेष्यताक-वह्नित्वावच्छिन्नप्रकारताकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिसंशयो हेतुरित्युक्तौ पर्वतो घटवान् भूतलं वह्निमत् इति समूहालम्बननिश्चयेऽपि पर्वतत्वावच्छिन्नविशेष्यताकत्ववह्नित्वावच्छिन्नप्रकारताकत्वयोः सत्त्वेन तत्र च पर्वतो वह्निमान्न वेति संशयप्रतिबन्धकताविरहात् तादृश-

संशयस्य पक्षतात्वानुपपत्तिः । अतस्तन्निवेशः ।

अथैवमपि जातिमान् वह्निमान् पर्वतो जातिमद्वान् पर्वतः संयुक्तसंयोगेन वह्निमानिति निश्चयेऽपि तादृशनिश्चयत्वसत्त्वेन तत्र च पर्वतो वह्निमान्न वेतिसंशय-प्रतिबन्धकत्वाभावात् कथं तस्य पक्षतात्वोपपत्तिः इति चेन्न । पर्वतत्वनिष्ठनिरवच्छिन्ना-वच्छेदकताकविशेष्यतानिरूपित-किंचिन्निष्ठसांसर्गिकविषयत्वानिरूपितसंयोगनिष्ठसांस-र्गिकविषयताक-वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारताशालिनिश्चयत्वव्यापकप्रति-बन्धकतानिरूपितप्रतिबध्यताशालिसंशयः हेतुरिति विवक्षणात् । जातिमान् वह्निमानिति निश्चये पर्वतत्वनिष्ठविशेष्यतावच्छेदकतायाः जातित्वावच्छिन्नत्वेन निरवच्छिन्नत्वा-भावात् पर्वतो जातिमद्वान् इति निश्चयीयवह्नित्वनिष्ठप्रकारतावच्छेदकतायाः जातित्वा-वच्छिन्नत्वेन निरवच्छिन्नत्वाभावात् पर्वतः संयुक्तसंयोगेन वह्निमानिति निश्चयीय-संयोगनिष्ठसांसर्गिकविषयतायाः संयुक्तत्वनिष्ठसांसर्गिकविषयतानिरूपितत्वेन किंचिन्निष्ठ-सांसर्गिकविषयत्वानिरूपितत्वाभावात् तेषूक्तनिश्चयत्वाभावेन तत्र पर्वतो वह्निमान्न वेति संशयप्रतिबन्धकत्वविरहेऽपि क्षत्यभावात् । पर्वतो वह्निमानिति निश्चय एव तादृशनिश्चयत्वसत्त्वेन तद्व्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः पर्वतो वह्नि-मान्न वेति संशये सत्त्वेन तस्य पक्षतात्वोपपत्तेः ।

नन्वेवमपि नीलपर्वतो वह्निमानिति, पर्वतः सुन्दरवह्निमानिति च निश्चययोः पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताकविशेष्यतानिरूपितवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदक-ताकवह्निनिष्ठप्रकारताशालिनिश्चयत्वसत्त्वेन तत्र प्रतिबन्धकताविरहात् कथं पर्वतो वह्निमान्न वेति संशयस्य पक्षतात्वोपपत्तिरिति चेत्-न । पर्वतत्वसामानाधिकरण्येन वह्न्यनुमितौ पर्वतत्वावच्छेदेन वह्न्यभावावगाहिनः पर्वतो वह्निमान्न वेति संशयस्यैव पक्षतात्वात् नीलपर्वतो वह्निमानिति निश्चयस्यापि तत्प्रतिबन्धकत्वात् एवं पर्वतः सुन्दरवह्निमानिति निश्चयस्यापि पर्वतो वह्निमान्न वेति वह्निसामान्यावगाहिसंशयं

## गादाधरी

पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंसर्गावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालि-निश्चयत्वावच्छिन्नप्रतिबन्धकताकसंशयो हेतुरिति पर्यवसितम्। तादृशनिश्चयप्रतिबध्यत्वस्य यथाश्रुते घटादिविषयकसमूहालम्बनात्मक वह्न्यादिनिश्चयप्रतिबध्यघटादि-संशयसाधारणत्वात्तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकताप्रवेशः। अवच्छिन्नत्वं च अन्यूनवृत्तित्वम्; न तु स्वरूपसंबन्धविशेषः, तेन वह्निसामान्याभावविशिष्टबुद्धौ महानसीयत्वादिविषयतामनन्तर्भाव्य वह्निमान् महानसीयवह्निमानित्यादिसकलज्ञान-

---

## भावबोधिनी

प्रति प्रतिबन्धकत्वात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकताकत्वस्याक्षतत्वात् तादृश-संशयस्य पक्षतात्वोपपत्तेः। एवं चैतदर्थं कारणदिशि पर्वतत्वे वह्नित्वे च शुद्धत्वं न निवेशनीयम्। पर्वतत्ववह्नित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्व न निवेशनीयमिति यावत्। एतत्सूचनायैव कार्यदिशि शुद्धत्वमुपादाय कारणदिशि तस्यानुपादानं गादाधर्याम्।

इत्थं च पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकपर्वतनिष्ठोद्देश्यतानिरूपित-किंचिन्निष्ठसांसर्गिकविषयत्वानिरूपितसंयोगनिष्ठसांसर्गिक-विषयतानिरूपक-वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकवह्नि-निष्ठविधेयतानिरूपकानुमितित्वावच्छिन्नं प्रति, पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताक-पर्वतनिष्ठविशेष्यतानिरूपित-किंचिन्निष्ठसांसर्गिकविषयत्वानिरूपितसंयोगनिष्ठसांसर्गिक-विषयतानिरूपक-वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकवह्निनिष्ठप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिसंशयो हेतुरिति कार्यकारणभावः संपन्नः।

अन्यूनवृत्तित्वमिति। व्यापकत्वमित्यर्थः। स्वरूपसंबन्धरूपावच्छिन्नत्वनिवेशे-दोषमाह – तेन वह्निसामान्याभावविशिष्टबुद्धावित्यादिना। अयमाशयः- पर्वतो

भावबोधिनी

महानसीयवह्निमानित्यनुमितौ पर्वतो महानसीयवह्निमान् वह्निसामान्याभाववान् वा इति संशयस्य पक्षतात्वमिष्टं न स्यात् स्वरूपसंबन्धरूपस्य निश्चयत्वावच्छिन्नत्वस्य निवेशे। तथाहि तादृशस्थलानुरोधेन पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितमहानसीयवह्नित्वावच्छिन्नसंयोगसंबन्धावच्छिन्नविधेयताशाल्यनुमितिं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नमहानसीयवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबध्यताशालिसंशयो हेतुरिति कार्यकारणभावो वक्तव्यः। तत्र पर्वते वह्निसामान्याभावावगाहिनं पर्वतो महानसीयवह्निमान् वह्निसामान्याभाववान् वा इति संशयं प्रति पर्वतो वह्निमान् पर्वतः महानसीयवह्निमान् इत्यादिनिश्चयानां प्रतिबन्धकतया तेषां पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन रूपेणैव प्रतिबन्धकत्वम्, तस्यैव प्रतिबन्धकसकलनिश्चयसाधारणत्वात्-तथा च तादृशसंशयस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वेऽपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नमहानसीयवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावात्। तस्य पक्षतात्वानुपपत्तिः। व्यापकत्वरूपावच्छिन्नत्वनिवेशे तु तादृशमहानसीयवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वं यत्रास्ति पर्वतो महानसीयवह्निमानिति निश्चये तत्र पर्वतो महानसीयवह्निमान् वह्निसामान्याभाववान् वा इत्ति संशयप्रतिबन्धकतासत्वात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकताकत्वमुक्तसंशयस्याक्षतमिति नानुपपत्तिः।

एवं स्वरूपसंबन्धरूपनिश्चयत्वावच्छिन्नत्वनिवेशे पर्वतो वह्निमान् धूमादित्यत्र पर्वतो महानसीयवह्निमान्न वेति संशयस्य पक्षतात्वापत्तिः। तादृशसंशयं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितमहानसीयत्वविशिष्टवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नस्य प्रतिबन्धकतया अधिकं त्रित्यादिन्यायेन वह्नित्वा-

## गादाधरी

साधारणवह्नित्वावच्छिन्नवत्तानिश्चयत्वेनैव प्रतिबन्धकताकल्पनात् ' महानसीयवह्निमान् वह्निसामान्याभाववान्वा पक्ष ' इत्याकारकसंशयं प्रति महानसीयवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनाऽप्रतिबन्धकत्वेऽपि न तथाविधसंशयस्य महानसीयवह्नित्वावच्छिन्नसाध्यकानुमितौ पक्षतात्वानुपपत्तिः, न वा महानसीयवह्न्यभावादिविशिष्टबुद्धिप्रतिबन्धकतावच्छेदककोटौ वह्नित्वावच्छिन्नप्रकारत्वादेर्निविष्टत्वेपि वह्निमानित्याद्यनुमितौ महानसीयवह्निमान् न वा पक्ष इत्यादिसंशयस्य पक्षतात्वापत्तिः, इत्थं च आहार्यस्य

---

## भावबोधिनी

वच्छिन्नप्रकारताया अपि प्रतिबन्धकतावच्छेदककोटिप्रविष्टतया तच्छालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः पर्वतो महानसीयवह्निमान्न वेति संशयेऽपि सत्त्वात् । अतो व्यापकस्वरूपमवच्छिन्नत्वमेव निवेश्यम् । तन्निवेशे तु वह्नित्वावच्छिन्नप्रकारताकनिश्चयत्वस्य पर्वतो वह्निमान्, चत्वरीयवह्निमान् इत्यादिनिश्चयेऽपि सत्त्वेन तत्र पर्वतो महानसीयवह्निमान्न वेति संशयप्रतिबन्धकताविरहान्न दोषः । प्रथमं प्रयोजनं साध्यतावच्छेदके प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकतापर्याप्तिनिवेशे, तदनिवेशे द्वितीयं प्रयोजनमिति विवेक इत्याहुः ।

ननु तादृशनिश्चयत्वव्यापकत्वस्य प्रतिबन्धकतायां निवेशे आहार्ये अप्रामाण्यज्ञानास्कन्दिते च पर्वतो वह्निमानिति निश्चयेऽपि तादृशनिश्चयत्वसत्त्वेन तत्र च प्रतिबन्धकताविरहात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकत्वाप्रसिद्ध्या असंभव इत्यत आह- इत्थं चेति । तया च पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिसंशयो हेतुः । अतो न दोष इति भावः ।

कारणदिशि दलानां प्रयोजनमाह-पर्वतो वह्निमान्न वेत्यादेरित्यादिना ।

गादाधरी

भ्रमत्वज्ञानास्कन्दितस्य च निश्चयस्याप्रतिबन्धकतयाऽनाहार्यत्वम् भ्रमत्वज्ञानानास्कन्दितत्वं च निश्चयविशेषणं देयम्; अतो न तथाविधनिश्चयत्वान्यूनवृत्तिप्रतिबन्धकत्वाप्रसिद्धिः पर्वतो वह्निमानन्वेत्यादेः कस्यापि ज्ञानस्य धर्मान्तरावच्छिन्नविशेष्यकान्यसंसर्गकान्यधर्मावच्छिन्नप्रकारकनिश्चयसाधारणसंयोगसंसर्गकवह्नित्वाद्यवच्छिन्नप्रकारकनिश्चयत्वान्यूनवृत्तिप्रतिबन्धताकत्वं न संभवतीति प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वादेः प्रकारताविशेषणत्वम्। उपनीतभानात्मकबाधनिश्चयस्यापि साध्यवत्तानिश्चयसामान्यनिवर्तनीयतया भ्रमत्वज्ञानास्कन्दितस्य च तस्यानुमित्यविरोधितया तथाविधबाधदशायामनुमित्यापत्तिः। अतः संशयत्वनिवेशनम्। न च पक्षसाध्यविशेष्यकसंशयसाधारणस्य अनतिप्रसक्तस्य संशयत्वस्य दुर्वचतया पुनरननुगमतादवस्थ्यमिति

---

भावबोधिनी

भूतलं वह्निमत्; पर्वतः समवायेन वह्निमान्, पर्वतो घटवान् इत्यादिनिश्चया अत्र विवक्षिताः। एतत् प्रागेव स्पष्टीकृतम्। ननु निर्णयनिवर्त्यो यः संशयः इति दीधितौ संशयपदं किमर्थम्, निर्णयनिवर्त्यो हेतुरिति वा तादृशनिर्णयनिवर्त्यं ज्ञानं हेतुरिति वास्तु इत्याशङ्क्य संशयत्वनिवेशफलमाह–उपनीतभानात्मकबाधनिश्चयस्यापीति। लौकिकसन्निकर्षाजन्यबाधनिश्चयस्येत्यर्थः। पर्वतो वह्न्यभाववानिति बाधनिश्चयं प्रति पर्वतो वह्निमानिति निश्चयस्य प्रतिबन्धकतया पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिनः पर्वतो वह्न्यभाववानिति बाधनिश्चयस्य पक्षतात्ववारणाय संशयत्वनिवेशः। न च बाधनिश्चयस्य तदभावावगाहित्वेन पर्वतो वह्निमानिति अनुमितिप्रतिबन्धकत्वेन कथं तस्य हेतुत्वप्रसक्तिरिति वाच्यम्। भ्रमत्वज्ञानास्कन्दितस्य तस्य हेतुत्वप्रसञ्जने तात्पर्यात्। अत्र लौकिकसन्निकर्षजन्यस्य बाधनिश्चयस्य न पर्वतो वह्निमानिति निश्चयनिवर्त्यत्वम्, लौकिकसन्निकर्षाजन्यतद्वत्ताबुद्धिं प्रत्येव तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वादिति उपनीतभानात्मके-

## गादाधरी

वाच्यम्, बाधनिश्चयनिवर्तनीयत्वस्यैवात्र संशयपदेन विवक्षणीयत्वात्। केवलान्वयिसाध्यके च साध्ये पक्षनिष्ठाभावप्रतियोगित्वनिश्चय एव सुलभो बाधः, एकविधबाधोपादानेनैव विविधसंशयानुगमसंभवात्तदननुगमो न दोषाय; अनुगमस्यापि कथंचित्सम्भवाच्च।

यत्तु पक्षसाध्यवैशिष्ट्यावगाहित्वं संशयपदेन विवक्षितमिति नाननुगमः, साध्यं पक्षवृत्ति न वेति साध्यविशेष्यकसंशयस्यापि तथात्वादिति; तदसत्;– तथा सति साध्यपक्षवैशिष्ट्यानवगाहिनः साध्यं पक्षनिष्ठाभावप्रतियोगि न वेति संशयस्यासंग्रहात्। न च केवलान्वयिस्थले साध्यं पक्षवृत्ति न वेत्यादिसंशयादेव अनुमित्युत्पत्त्या तथाविधसंशयासंग्रहो न दोषायेति वाच्यम्; प्रमेयत्वं पक्षनिष्ठात्यन्ताभावप्रतियोगि न वेत्यादिसंशयस्य केवलान्वयिग्रन्थे मणिकृतैव संगृहीततया तद्विरोधात्।

---

## भावबोधिनी

त्युक्तम्। न च पक्षसाध्यविशेष्यकेति। पक्षविशेष्यकः संशयः पर्वतो वह्निमान्न वेत्यादिः। साध्यविशेष्यकः संशयः वह्निः पर्वतवृत्तिर्न वा वह्निः पर्वतनिष्ठात्यन्ताभावप्रतियोगी न वा इति। अनतिप्रसक्तस्येति। यद्यपि एकधर्मिविशेष्यकविरुद्धनानाधर्मप्रकारकज्ञानत्वं पूर्वोक्तसंशयसाधारणं संशयत्वं सुवचम्। तथापि पर्वतो वह्न्यभाववान् भूतलं घटवन्न वेति बाधात्मकसंशयेऽपि तद्वर्तते पर्वतो वह्निमानिति निश्चयनिवर्त्यत्वं चास्तीति तस्य पक्षतात्वापत्तिरिति भावः। बाधनिश्चयनिवर्तनीयत्वस्येति। तथा च पर्वतो वह्निमानिति निश्चयनिवर्त्यं पर्वतो वह्न्यभाववान् इति निश्चयनिवर्त्यं च ज्ञानं पक्षतेत्युक्तं भवति। ननु केवलान्वयिसाध्यके इदं वाच्यं ज्ञेयत्वादित्यादौ साध्याभावाप्रसिद्ध्या साध्याभाववत्पक्षरूपबाधनिश्चयनिवर्त्यज्ञानरूपपक्षता दुर्वचेत्यत आह–केवलान्वयिनि चेति। वाच्यत्वं घटनिष्ठात्यन्ताभावप्रतियोगीति निश्चयः तत्र बाधनिश्चयः तन्निवर्त्यः वाच्यत्व घटनिष्ठात्यन्ताभावप्रतियोगि न वेत्याकारक-

## गादाधरी

वस्तुतस्तु—तादात्म्येन प्रमेयपक्षकवाच्यसाध्यकस्थले तादृशसंशयाप्रसिद्धिः, तादात्म्यसंबन्धेन पक्षसंबन्धित्वाभावरूपकोटचप्रसिद्धेः। न च साध्ये पक्षनिष्ठाभाव-प्रतियोगित्वसंशयस्य पक्षतात्वेप्युक्तस्थले पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितेरु-द्देश्यत्वे पक्षतावच्छेदकावच्छेदेन वर्तमानभेदप्रतियोगित्वकोटिसंशयस्यैव साध्यवत्तानिर्णय-प्रतिबध्यतया पक्षतात्वमङ्गीकर्तव्यम्; तच्च न संभवति. प्रमेयत्वावच्छेदेन वर्तमान-भेदाप्रसिद्धचा कोटचप्रसिद्धेरिति वाच्यम्;—घटपटोभयत्वावच्छिन्नभेदस्य प्रतियोगिन्यपि प्रत्येकं वर्तमानतया तादृशभेदस्यैव पक्षतावच्छेदकावच्छेदेन वर्तमानभेदप्रतियोगित्व-

---

## भावबोधिनी

संशयस्तत्र पक्षतेति भावः। एकविधेति। सर्वसाधारण्याय साध्यं पक्षनिष्ठा-भावप्रतियोगीत्याकारकस्य वा साध्यं पक्षावृत्तीत्याकारकस्य वा एकविधस्य बाध-निश्चयस्य उपादानेनैवेत्यर्थः। तदननुगमः बाधाननुगमः। अनुगमस्यापि कथंचिदिति। पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्य-तावच्छेदकावच्छिन्नप्रकारतानिष्ठप्रकारतात्वावच्छिन्नावच्छेदकताकप्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकविषयत्वमनुगतं बाधत्वमिति न्यायरत्नम्। पक्षसाध्यवैशिष्ट्या-वगाहिग्रहविरोध्यनुन्नायकत्वे सति आश्रयासिद्ध्यादिभिन्नत्वे सति पक्षसाध्यवैशिष्ट्याव-गाहिग्रहविरोधिनिष्ठविषयताशालित्वेन अन्यतमत्वादिना वेति केचिदिति कृष्णभट्टी। साध्यवत्ताज्ञानप्रतिबध्यतावच्छेदकत्वे सति साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदिका या विषयता तच्छालित्वमनुगतं बाधत्वमित्यन्ये।

वस्तुतस्त्वित्यादि। इदं वाच्यं ज्ञेयत्वादित्यत्र वाच्यत्वं पक्षवृत्ति न वेति संशयस्य पक्षतात्वेऽपि प्रमेयं तादात्म्यसंबन्धेन वाच्यमित्यत्र वाच्यं तादात्म्यसंबन्धेन प्रमेयसंबन्धि न वेति संशयो न संभवति, तादा-त्म्येन प्रमेयसंबन्धित्वाभावरूपकोट्यप्रसिद्धेः। अतस्तत्र वाच्यं प्रमेयनिष्ठभेदप्रति-

भावबोधिनी

योगि न वेति संशयस्यैव पक्षतात्वं वक्तव्यम्। तस्य च पक्षसाध्यवैशिष्ट्यावगाहित्वाभावेन पक्षसाध्यवैशिष्ट्यावगाहित्वं न सकलसंशयानुगमकमिति भावः। ननु यत्र प्रमेयत्वसामानाधिकरण्येन तादात्म्येन वाच्यं सिषाधयिषितं तत्र वाच्यं प्रमेयनिष्ठभेदप्रतियोगि न वेति संशयस्यापि पक्षतात्वं न संभवति। प्रमेयत्वावच्छेदेन वर्तमानो यो भेदस्तत्प्रतियोगित्वकोटिकसंशयस्यैव साध्यवत्तानिर्णयप्रतिबध्यतया पक्षतात्वं वाच्यम्, तच्च न संभवति, प्रमेयत्वावच्छेदेन वर्तमानस्य भेदस्याप्रसिद्धेः; न हि घटपटादिभेदः यावत्प्रमेयवृत्तिर्भवति। न च प्रमेयत्वसामानाधिकरण्येन यो भेदः तत्प्रतियोगित्वकोटिकः संशयस्तत्र कुतो न साध्यवत्तानिर्णयप्रतिबध्य इति शङ्क्यम्। प्रमेयत्वसामानाधिकरण्येन वाच्याभेदनिर्णयेऽपि साध्यवत्तानिश्चयत्वसत्त्वेन तस्य प्रमेयत्वसामानाधिकरण्येन वर्तमानभेदप्रतियोगित्वप्रकारकज्ञानाविरोधित्वात्। यत्किंचित्प्रमेये वाच्याभेदनिर्णयोत्तरं यत्किंचित्प्रमेयान्तरनिष्ठभेदप्रतियोगित्वावगाहिज्ञानसंभव इत्याशयात् इति शङ्कते– न च साध्य इति। समाधत्ते–घटपटोभयत्वावच्छिन्नभेदस्येति। घटपटोभयभेदो हि प्रतियोगिनि घटे पटे च वर्तेत इति सुतरामितरेषु प्रमेयेषु वर्तते। अतः स एव भेदः प्रमेयत्वावच्छेदेन वर्तमानः प्रसिद्ध इति भावः। प्रमेयसाध्यकस्थले संशयान्तरस्य पक्षतात्वं दर्शयति तत्रेति। प्रमेयत्वावच्छिन्नवृत्तिकाभावः वाच्यत्वावच्छिन्नप्रतियोगिताकत्वतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वोभयवान्न वेति संशयस्तत्र पक्षता। प्रमेयत्वावच्छिन्नवृत्तिकाभावः गगनाद्यभावः प्रसिद्धः। वाच्यत्वावच्छिन्नप्रतियोगिताकत्वं संयोगसंबन्धावच्छिन्नवाच्याभावे प्रसिद्धम्, तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वं घटादिभेदे प्रसिद्धम्, अतस्तादृशसंशयः संभवतीति भावः। अत्र साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वतदभावकोटिकसंशयः कोट्यप्रसिद्ध्याऽप्रसिद्ध इति पृथक् प्रतियोगित्वोपादनम्। पक्षसाध्यवैशिष्ट्यावगाहित्वस्य संशयपदेन विवक्षणे केवलान्वयिस्थलविशेषे तादृशसंशया-

## गादाधरी

कोटिकसंशयस्यैव साध्यवत्तानिर्णयप्रतिबध्यतया पक्षतात्वमङ्गीकर्तव्यम्; तच्च न संभवति प्रमेयत्वावच्छेदेन वर्तमानभेदाप्रसिद्धचा कोटचप्रसिद्धेरिति वाच्यम्;—घटपटोभयत्वावच्छिन्नभेदस्य प्रतियोगिन्यपि प्रत्येकं वर्तमानतया तादृशभेदस्यैव पक्षतावच्छेदकावच्छेदेन वर्तमानस्य प्रसिद्धेः। तत्र पक्षतावच्छेदकावच्छिन्नवृत्तिकाभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वोभयत्वावच्छिन्नतदभावकोटिकसंशयस्य पक्षतात्वोपगमाच्च। एवमप्रसिद्धसाध्यकव्यतिरेक्यनुमानस्थले साध्यवैशिष्टचावगाहिसंशयानुपपत्तेस्तत्र साध्यात्मकाभावप्रतियोगिनि पक्षवृत्तित्वादिसंशयस्यैव पक्षतात्वस्योपगन्तव्यतया संशयपदेन साध्यपक्षवैशिष्टचावगाहित्वनिवेशनासम्भव इति।

---

## भावबोधिनी

संभवमुपपाद्य व्यतिरेक्यनुमानस्थलेऽपि तमुपपादयति एवमिति। पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यत्र पृथिवीतरभेदरूपसाध्याप्रसिद्ध्या पृथिवी इतरभिन्ना न वेति वा इतरभेदः पृथिवीवृत्तिर्नवेति वा पक्षसाध्यवैशिष्ट्यावगाही संशयो न संभवति। अतस्तत्र तदनवगाही इतरत् पृथिवीवृत्ति न वा, इतरत् पृथिवीनिष्ठभेदप्रतियोगि न वेति संशय एव पक्षता वाच्य इति भावः। साध्यात्मकाभावप्रतियोगिनीति। साध्यात्मकः अभावः इतरभेदः तत्प्रतियोगि पृथिवीतरत् तद्विशेष्यकस्य पृथिवीवृत्तित्वादिप्रकारकसंशयस्येत्यर्थः। आदिपदेन पक्षनिष्ठभेदप्रतियोगित्वं गृह्यते।

ननु पर्वतो वह्निव्याप्यवानित्यनुमितौ पर्वतो वह्निमान्न वेति संशयः पक्षता स्यात्। तस्यापि पर्वतो वह्निव्याप्यवानित्याकारकसाध्यवत्तानिश्चयनिवर्त्यत्वात्। पर्वतविशेष्यकवह्न्यभावप्रकारकबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयविधया पर्वतो वह्निव्याप्यवानिति निश्चयस्य प्रतिबन्धकत्वेन पर्वतविशेष्यकवह्नि—वह्न्यभावप्रकारकसंशयस्यापि पर्वतविशेष्यकवह्न्यभावप्रकारकबुद्धित्वरूपप्रतिबध्यतावच्छेदकाक्रान्ततया

## गादाधरी

अथ वह्निव्याप्यसाध्यकस्थले महानसीयवह्नित्वाद्यवच्छिन्नसाध्यकस्थले च 'वह्निमान्न वा पक्ष' इत्येतादृशसंशयस्य पक्षतात्वप्रसङ्गः, साध्यवत्तानिश्चयनिवर्त्यत्वात् । न च सिद्धसाधनस्थले अनुमितिवारणमेव पक्षताहेतुत्वकल्पनप्रयोजनम्, एवंचोक्तसंशयस्य पक्षतात्वोपगमेपि सिद्धिदशायामनुमित्यापत्त्यसम्भवात्तस्य पक्षतात्वमिष्टमेवेति वाच्यम्; साध्यतावच्छेदकावच्छिन्नसाध्यतदभावान्यतरस्मिन् पक्षसंबन्धावगाहिसंदेहस्यैव प्राचीनैः पक्षतात्वोपगमात्; अन्यथा बाधसाधारणरूपेण पक्षतात्वोपगमेपि सिद्धिकालेनुमितिवारणसम्भवाद्बाधवारकसंशयत्वनिवेशस्य निष्प्रयोजनकत्वापत्तेः । न च तादृशसंशयस्य वह्निव्याप्याद्यभाववत्तानिश्चयरूपबाधाप्रतिबध्यतया नातिव्याप्तिरिति वाच्यम्; वह्निव्याप्याभावाभाववान् पर्वतः (पर्वतो) वह्निमान्नवेति संशयस्य तादृशबाधनिश्चयप्रतिबध्यतया तावतापि तद्वारणासंभवात् ।

---

## भावबोधिनी

तादृशनिश्चयप्रतिबध्यत्वात् । एवं पर्वतो वह्निमान्न वेति संशये वह्न्यभावभानं प्रति पर्वतो महानसीयवह्निमानिति साध्यनिश्चयस्य प्रतिबन्धकतया तत्प्रतिबध्यस्य तादृशसंशयस्य पर्वतो महानसीयवह्निमानित्यनुमितौ पक्षतात्वापत्तिः इति शङ्कते— अथ वह्निव्याप्यसाध्यकस्थल' इत्यादिना । न च सिद्धसाधनस्थल इति । साध्यनिश्चयदशायामित्यर्थः । पर्वतो वह्निमानिति सिद्धिदशायाम् अनुमितिः कुतो न जायत इति शङ्कायाम् अनुमितौ साध्यसंशयरूपपक्षता कारणम् । सिद्धिदशायां च पर्वतो वह्निमान्नवेति संशयो न भवति, वह्न्यभावभाने सिद्धेः प्रतिबन्धकत्वादित्येवं सिद्धिदशायां अनुमितिवारणमेव पक्षतायाः अनुमितिहेतुत्वकल्पनस्य प्रयोजनम् । एवं च साध्यनिश्चयकाले यस्य संशयस्यासंभवात् अनुमितिर्न जायते स संशयः पक्षतेति पर्यवसितम् । पर्वतो वह्निव्याप्यवानिति निश्चयकाले वा पर्वतो महानसीयवह्निमानिति निश्चयकाले वा तयोर्निश्चययोः प्रतिबन्धकत्वात् पर्वतो वह्नि-

## गादाधरी

यत्तु-प्रकृतसाध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रतिबध्यतानिवेशान्नोक्तातिप्रसङ्गः, वह्न्यभावविशिष्टज्ञानत्वाद्यवच्छिन्नाया वह्निव्याप्यवत्तानिश्चयप्रतिबध्यताया अवच्छेदककोटौ वह्निव्याप्यत्वावच्छिन्नविषयताया अनन्तर्भावादिति

---

## भावबोधिनी

मान्नवेति संशयो न जायत इति तादृशसंशयवैकल्यादेव नानुमितिरित्यपि वक्तुं शक्यतेऽतस्तादृशानुमित्योः पर्वतो वह्निमान्न वेति संशयस्यापि पक्षतात्वमिष्टमेवेति न चेत्यादिवाच्यमित्यन्तस्य भावः । साध्यतावच्छेदकावच्छिन्नेत्यादि । साध्यतावच्छेदकावच्छिन्नसाध्ये तदवच्छिन्नसाध्याभावे वा पक्षसंबन्धावगाही संशय एव पक्षतेति प्राचीनानां मतम् । साध्यतावच्छेदकावच्छिन्नसाध्यविषयता - तदभावविषयता – एतदन्यतरनिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिसंदेहः पक्षतेति यावत् । पक्षः साध्यवान्न वा साध्यं पक्षे न वेत्यनयोः संग्रहाय प्रकारताविशेष्यते उपेक्ष्य विषयतेत्युक्तम् तथा च वह्निव्याप्यसाध्यकस्थले वह्निमान्न वेति संशयस्य वह्निव्याप्यतदभावान्यतरविषयकत्वाभावात् महानसीयवह्निसाध्यकस्थले तस्य संशयस्य महानसीयवह्नितदभावान्यतरविषयकत्वाभावात् न पक्षतात्वम् । वह्निव्याप्यवान्नवा महानसीयवह्निमान्नवेति संशययोरेव तथात्वात् तत्र तत्र पक्षतात्वमित्यर्थः । अन्यथेति । सिद्धिकाले यज्ज्ञानविरहात् अनुमितिर्न जायते तज्ज्ञानमेव पक्षतेति स्वीकारे पर्वतो वह्निमानिति सिद्धिकाले पर्वतो वह्न्यभाववानिति बाधनिश्चयाभावान्नानुमितिरित्येवं बाधनिश्चयस्यापि सिद्धिकालेऽनुमितिवारणप्रयोजनवशात् पक्षतात्वसंभवेन तस्य पक्षतात्ववारणाय संशयत्वनिवेशनं यत् कृतं तद्व्यर्थं स्यात् इति भावः ।

ननु पूर्वं साध्यवत्तानिश्चयनिवर्त्यः संशय इत्यत्र संशयपदेन बाधनिश्चयनिवर्त्यत्वमेव विवक्षितमित्युक्तम् । तेन साध्यवत्तानिश्चयप्रतिबध्यं बाधनिश्चयप्रतिबध्यं च ज्ञानं पक्षतेति पर्यवस्यति । वह्निव्याप्यसाध्यकस्थले पर्वतो वह्निमान्नवेतिसंश–

भावबोधिनी

यस्य पर्वतो वह्निव्याप्यवानिति साध्यनिश्चयप्रतिबध्यत्वेऽपि पर्वतो वह्निव्याप्याभाववानिति बाधनिश्चयप्रतिबध्यत्वं नास्ति। एवं महानसीयवह्निसाध्यकस्थले पर्वतो वह्निमान्न वेति संशयस्य पर्वतो महानसीयवह्निमानिति साध्यनिश्चयप्रतिबध्यत्वेऽपि पर्वतो महानसीयवह्न्यभाववानिति बाधनिश्चयप्रतिबध्यत्वं नास्ति। अतो न तस्य पक्षतात्वापत्तिरिति शङ्कते—न चेति। समाधत्ते— वह्निव्याप्याभावाभाववानिति। वह्निव्याप्यसाध्यकस्थले वह्निव्याप्याभावाभाववान् पर्वतः पर्वतो वह्निमान्न वेति संशयस्य पर्वतो वह्निव्याप्याभावाभाववानित्यंशे पर्वतो वह्निव्याप्याभाववानिति बाधनिश्चयप्रतिबध्यत्वम्, पर्वतो वह्न्यभाववानित्यंशे पर्वतः वह्निव्याप्यवानिति निश्चयप्रतिबध्यत्वं चास्तीति तस्य पक्षतात्वापत्तिः दुर्वारेति भावः।

अस्मिन्नाक्षेपे केषांचित् समाधानमनुवदति—यत्त्विति। तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रतिबध्यताशालिसंशयः पक्षता। पर्वतो वह्निमानित्यत्र पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपिता या पर्वतो वह्निमान्न वेति संशयनिष्ठा प्रतिबध्यता सा वह्नित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना भवति। तच्च बुद्धित्वं साध्यतावच्छेदकवह्नित्वावच्छिन्नविषयताघटितमिति तादृशप्रतिबध्यताशालिनः पर्वतो वह्निमान्न वेति संशयस्य पक्षतात्वम्। पर्वतो वह्निव्याप्यवानित्यत्र पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यत्वावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपिता पर्वतो वह्निमान्न वेति संशयनिष्ठा प्रतिबध्यता वह्न्यभावत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना न वह्निव्याप्यत्वरूपसाध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नेति न तस्य

## गादाधरी

तत्र । वह्न्यभावादिसाध्यकस्थले वह्निमान्न वेत्यादि संशयासंग्रहप्रसङ्गात्, वह्निविशिष्ट-बुद्धित्वाद्यवच्छिन्नाया वह्न्यभावादिनिश्चयप्रतिबध्यताया अवच्छेदकगर्भे वह्न्यभाव-वाद्यवच्छिन्नविषयताया अनिवेशात्; यत्र च वह्निव्याप्यत्वाद्यवच्छिन्नस्यैव पक्षत्वं-साध्यत्वं च तत्र वह्निव्याप्यो वह्निमान्न वेति संशयवारणस्याप्यशक्यत्वात् ।

---

## भावबोधिनी

संशयस्य पक्षतात्वम्, अपि तु पर्वतो वह्निव्याप्यवान्न वेति संशयस्य पक्षतात्वम् । तस्य वह्निव्याप्यत्वावच्छिन्नविषयताघटितो यो वह्निव्याप्यत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिबुद्धित्वरूपो धर्मः तदवच्छिन्नप्रतिबध्यताशालित्वात् इति भावः । नोक्तातिप्रसङ्गः इति । पर्वतो वह्निव्याप्यवानित्यत्र पर्वतो वह्निमान्न वेति संशयस्य न पक्षतात्वप्रसङ्गः इति भावः । वह्न्यभावविशिष्टज्ञानत्वावच्छिन्नाया इति । वह्नित्वावच्छिन्नविषयता-निरूपिताभावत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नाया इत्यर्थः । वह्निव्याप्यवत्तानिश्चयप्रतिबध्यताया इति । वह्निव्याप्यवत्ता-निश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताया इत्यर्थः ।

तत्रेत्यादि । ह्रदो वह्न्यभाववानित्यत्र ह्रदो वह्न्यभाववान्न वेति संशयस्येव ह्रदो वह्निमान्न वेति संशयस्यापि पक्षतात्वमिष्यते । ह्रदो वह्न्यभाववानिति साध्यनिश्चयस्य वह्निमानिति बुद्धौ वह्न्यभावाभाववानिति बुद्धौ च प्रतिबन्धकतया प्रकृतसाध्यनिश्चय-प्रतिबध्यताया उभयत्र सत्त्वात् । परं तु प्रतिबध्यतायां यदि साध्यतावच्छेदका-वच्छिन्नविषयताघटितधर्मावच्छिन्नत्वं निवेश्यते तदा ह्रदो वह्न्यभाववानिति निश्चय-निष्ठप्रतिबन्धकतानिरूपिताया ह्रदो वह्निमान्न वेति संशयनिष्ठायाः प्रतिबध्यतायाः वह्नि-त्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नायाः अव-

### गादाधरी

यत्तु—साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयताघटितधर्मावच्छिन्नत्वेन प्रतिबध्यतया विशेषणीयतया वह्निव्याप्यवत्ताज्ञानं प्रति वह्न्यभावादिनिश्चयत्वेनाप्रतिबन्धकतया तद्विषयतायाः साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वविरहेण नातिप्रसङ्ग इति; तदपि न—तावतापि महानसीयवह्निसाध्यकस्थले महानसीयवह्न्यभावाभाववान् पर्वतो वह्निमान्नवेतिसंशयवारणासम्भवात् ।

---

### भावबोधिनी

च्छेदककोटौ वह्न्यभावत्वरूपप्रकृतसाध्यतावच्छेदकावच्छिन्नविषयताया अघटकत्वात् तादृशसंशयस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रतिबध्यत्वविरहात् पक्षतात्वं न स्यादिति भावः । दोषान्तरमप्याह—यत्र चेति । तथा च वह्निव्याप्यो वह्निव्याप्यवानित्यत्र वह्निव्याप्यो वह्निव्याप्यवान्न वेति संशयस्यैव पक्षतात्वमिष्यते न तु वह्निव्याप्यो वह्निमान्न वेति संशयस्य । उक्तपरिष्कारे तु तस्यापि पक्षतात्वं स्यात् । तथाहि वह्निव्याप्यो वह्निव्याप्यवानिति निश्चयप्रतिबध्यत्वं वह्निव्याप्यो वह्निमान्नवेति संशयस्याप्यस्ति । तादृशसंशये वह्निव्याप्यो वह्न्यभाववानिति भाने तदभावव्याप्यवत्तानिश्चयविधया वह्निव्याप्यो वह्निव्याप्यवानिति निश्चयस्य प्रतिबन्धकत्वात् । एवं सा प्रतिबध्यता वह्न्यभावत्वावच्छिन्नविषयतानिरूपितवह्निव्याप्यत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना । तत्र धर्मे प्रकृतसाध्यतावच्छेदकवह्निव्याप्यत्वावच्छिन्नविषयताया अन्तर्भावात् पक्षतावच्छेदकसाध्यतावच्छेदकयोरैक्यात् साध्यतावच्छेदकावच्छिन्नविषयताघटिततादृशबुद्धित्वावच्छिन्नप्रतिबध्यताशालिनः वह्निव्याप्यो वह्निमान्न वेति संशयस्य पक्षतात्वापत्तिरिति भावः ।

यत्तु साध्यवत्ताज्ञानेत्यादि । तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपिता या

## गादाधरी

अत्रोच्यते-संशयत्वं स्वनिष्ठविषयताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपित-प्रतिबध्यताशालित्वम्; ज्ञानभेदेन विषयताभेदानभ्युपगमात्संशयनिष्ठवह्निमत्पर्वतनिरूपितविषयताया अपि प्रत्येकं निश्चयवृत्तित्वात्प्रतिबन्धकतावच्छेदकघटकत्वोपपत्तिः ।

---

## भावबोधिनी

पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि-बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताघटितधर्मावच्छिन्न-प्रतिबध्यता तच्छाली संशयः पक्षता । वह्निव्याप्यसाध्यकस्थले पर्वतो वह्निमान्न वेति संशयनिष्ठायाः प्रतिबध्यतायाः वह्न्यभावविषयतानिरूपितपर्वतविशेष्यताशालि-बुद्धित्वावच्छिन्नायाः वह्निव्याप्यवत्तानिश्चयप्रतिबन्धकतावच्छेदकविषयताघटितधर्माव-च्छिन्नत्वं नास्ति । पर्वतो वह्निव्याप्यवानिति निश्चयं प्रति पर्वतो वह्न्यभाववा-निति ज्ञानस्याप्रतिबन्धकतया वह्न्यभावविषयतायाः प्रतिबन्धकतावच्छेदकत्वाभावात् । अतो न पर्वतो वह्निव्याप्यवानित्यत्र पर्वतो वह्निमान्न वेति संशयस्य पक्षतात्वम् । तत्र पर्वतो वह्निव्याप्यवान्न वेति संशयस्यैव पक्षतात्वम् । पर्वतो वह्निव्याप्यवानिति-निश्चयनिष्टप्रतिबन्धकतानिरूपितायाः पर्वतो वह्निव्याप्यवान्न वेति संशयनिष्ठायाः प्रतिबध्यतायाः पर्वतो वह्निव्याप्यवानिति निश्चयप्रतिबन्धकतावच्छेदकवह्निव्याप्या-भावविषयताघटितधर्मावच्छिन्नत्वादिति भाव । नातिप्रसङ्ग इति । पर्वतो वह्नि-व्याप्यवानित्यत्र पर्वतो वह्निमान्न वेति संशयस्य न पक्षतात्वप्रसङ्ग इत्यर्थः । तावतापीति । साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयताघटितधर्मावच्छिन्नत्वेन प्रति-बन्धकताविशेषणेनापीत्यर्थः । महानसीयवह्निसाध्यकस्थल इति । पर्वतो महानसीय-वह्निमानित्यत्र महानसीयवह्न्यभावाभाववान् पर्वतः, पर्वतो वह्निमान्न वेति संशयस्य पर्वतो महानसीयवह्निमानिति निश्चयप्रतिबध्यत्वं वर्तते सा च प्रतिबध्यता वह्न्यभावत्वावच्छिन्न-विषयतानिरूपित-पर्वतत्वावच्छिन्नविषयताशालिबुद्धित्वावच्छिन्ना ।

भावबोधिनी

प्रतिबध्यतावच्छेदकतादृशबुद्धित्वघटकवह्न्यभावत्वावच्छिन्नविषयतायाः साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वम् अस्ति। 'पर्वतो महानसीय वह्निमान्' इति बुद्धिं प्रति 'पर्वतो महानसीयवह्न्यभाववान्' 'पर्वतः वह्न्यभाववान्' इति द्वयोरपि निश्चययोः प्रतिबन्धकत्वात् तत्साधारण्येन वह्न्यभावत्वावच्छिन्नविषयताघटितबुद्धित्वेनैव प्रतिबन्धकतायाः वक्तव्यतया साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकीभूता या वह्न्यभावत्वावच्छिन्नविषयता तद्घटितबुद्धित्वावच्छिन्ना प्रतिबध्यता 'पर्वतो वह्निमान् न वा' इति संशयस्यास्तीति तस्य पक्षतात्वापत्तिः। तस्य संशयस्य बाधनिश्चयनिवर्त्यत्वसंपत्त्यर्थं महानसीयवह्न्यभावाभावविषयकसमूहालम्बनरूपत्वं आश्रितम्।

अत्रोच्यत इत्यादि। पर्वतो वह्निमानित्यत्र पर्वतो वह्निमान्न वेति संशये लक्षणसमन्वय इत्थम्—स्वं तादृशसंशयः तन्निष्ठा विषयिता वह्निमत्पर्वतनिरूपितविषयिता वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यिता तद्घटितधर्मः वह्निमत्पर्वतनिरूपितविषयिताशालिनिश्चयत्वम् वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यिताशालिनिश्चयत्वम्। तदवच्छिन्नप्रतिबन्धकता पर्वतो वह्निमानिति निश्चयनिष्ठा प्रतिबन्धकता तन्निरूपितप्रतिबध्यता पर्वतो वह्निमान्न वेति संशये वह्न्यभावविषयेऽस्तीति। ननु संशयनिष्ठा वह्निमत्पर्वतनिरूपिता विषयिता निश्चये नास्तीति कथं निश्चयनिष्ठप्रतिबन्धकतावच्छेदकघटकत्वं संशयनिष्ठविषयितायाः? तथा च संशयनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकता अप्रसिद्धेत्यत आह—ज्ञानभेदेन विषयिताभेदानभ्युपगमादिति। स्वनिष्ठविषयितापदेन वह्न्यभाववत्पर्वतविषयितायाः ग्रहणे तद्घटितो यो धर्मः वह्न्यभाववत्पर्वतनिरूपितविषयिताशालिनिश्चयत्वरूपः तदवच्छिन्ना या पर्वतो वह्न्यभाववानिति निश्चयनिष्ठा प्रतिबन्धकता तन्निरूपितप्रतिबध्यताशालित्वं पर्वतो वह्निमान्न वेति

गादाधरी

वह्न्यादिसाध्यकस्थले वह्न्यभाववान् पर्वतो घटवान्नवेति संशयस्य तादृशधर्माक्रान्तस्य साध्यवत्तानिश्चयप्रतिबद्धचस्य च वारणाय साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वेन निरूपितसंशयत्वघटकप्रतिबध्यता निवेशनीया; घटादिमत्ताज्ञानत्वा-

---

भावबोधिनी

निश्चयनिष्ठा प्रतिबन्धकता तन्निरूपितप्रतिबध्यताशालित्वं पर्वतो वह्निमान्न वेति संशये वह्न्यंशभानेऽस्तीति लक्षणसमन्वयो बोध्यः। अत्र स्वनिष्ठविषयतेति पाठे निरूपकतासंबन्धेन स्वनिष्ठत्वं बोध्यम्। स्वनिष्ठविषयितेति पाठस्तु ऋजुः।

ननूक्तलक्षणस्य संशयस्य पक्षतात्वे तस्य लक्षणस्य सर्वसंशयसाधारणतया पर्वतो वह्निमान् धूमादित्यत्र पर्वतो घटवान्न वेति संशयस्यापि पक्षतात्वापत्तिः। एवं पर्वतो घटवान्न वेति संशयः तन्निष्ठा विषयिता घटत्वावच्छिन्नप्रकारताकत्वावच्छिन्ना पर्वतनिरूपिता विषयिता तद्घटितो धर्मः तादृशविषयिताशालिनिश्चयत्वं तदवच्छिन्ना या पर्वतो घटवानिति निश्चयनिष्ठा प्रतिबन्धकता तन्निरूपितप्रतिबध्यताशालित्वस्य पर्वतो घटवान्न वेति संशये सत्त्वात्। न च स्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वे सति साध्यवत्तानिश्चयनिवर्त्यत्वं पक्षतायाः लक्षणम्। उक्तस्थले पर्वतो घटवान्न वेति संशयस्य पर्वतो वह्निमानित्याकारकसाध्यवत्तानिश्चयनिवर्त्यत्वविरहान्न तस्य पक्षतात्वापत्तिरिति वाच्यम्। एवमपि पर्वतो वह्निमान् धूमात् इत्यत्र वह्न्यभाववान् पर्वतो घटवान्न वेत्याकारकसंशयस्य पक्षतात्वापत्तेः। तस्य संशयस्य वह्न्यभाववान् पर्वत इत्यंशे वह्निमान् पर्वत इति साध्यवत्तानिश्चयप्रतिबध्यत्वात्। घटवान्नवेत्यंशे स्वनिष्ठविषयिताघटितेत्यादिसंशयलक्षणाक्रान्तत्वाच्चेत्यत आह—वह्न्यादिसाध्यकस्थले इत्यादिना। तादृश-

## गादाधरी

वच्छिन्नप्रतिबध्यताया अतथात्वान्नातिप्रसङ्गः। तत्र पक्षः वह्न्यभाववान्नवेति संशयस्य पक्षतात्वमिष्टमेव, तस्य वह्निः पक्षनिष्ठाभावप्रतियोगी न वेति संशयसमशीलत्वात्। स्वनिष्ठविषयितायां बाधप्रतिबध्यतावच्छेदकत्वं निवेशनीयम्, तेन

---

## भावबोधिनी

धर्माक्रान्तस्येति। स्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वरूपधर्मविशिष्टस्येत्यर्थः। साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वेनेति।

साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालि-निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नत्वेनेत्यर्थं। तथा च स्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्ना प्रतिबध्यता तच्छालिज्ञानं पक्षतेति पर्यवसन्नम्। वह्न्यभाववान् पर्वतो घटवान्न वेति संशयनिष्ठा या घटवत्पर्वतविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता घटाभाववत्ताज्ञानत्वावच्छिन्ना प्रतिबध्यता या च घटाभाववत्पर्वतविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता घटवत्ताज्ञानत्वावच्छिन्ना प्रतिबध्यता तस्याः साध्यवह्निमत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकं यत् वह्न्यभाववत्ताज्ञानत्वं तदवच्छिन्नत्वविरहात् न तस्य पक्षतात्वापत्तिरिति भावः। अतथात्वादिति। साध्यवत्ताज्ञानप्रतिबध्यतावच्छेदकावच्छिन्नत्वाभावादित्यर्थः। नातिप्रसङ्गः इति। वह्न्यभाववान् पर्वतो घटवान्न वेति संशयस्य पक्षतात्वापत्तेरित्यर्थः।

नन्वेवमपि पर्वतो वह्निमान् धूमादित्यत्र पर्वतो वह्न्यभाववान् न वेति संशयस्य पक्षतात्वापत्तिः। एवं तादृशसंशयः स्वनिष्ठविषयिता वह्न्यभावाभावव-

गादाधरी

वह्निव्याप्यसाध्यकस्थले वह्निमान्न वा पक्ष इत्येतादृशसंशयस्य व्युदासः, तत्र वह्निव्याप्याभावाभावत्वेन व्याप्यस्य पृथग्भानेपि संशयत्वघटकीभूतस्तन्निष्ठवह्नि- मत्पक्षविषयताया वह्निव्याप्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वविरहात्। एवं च

---

भावबोधिनी

त्पर्वतविषयिता तद्धटितधर्मः वह्न्यभावाभावत्पर्वतविषयिताशालिनिश्चयत्वम्, तद- वच्छिन्नप्रतिबन्धकतानिरूपिता पर्वतो वह्न्यभाववान्न वेति संशयनिष्ठा वह्न्यभावव- त्पर्वतविषयकबुद्धित्वावच्छिन्नप्रतिबध्यता, सा च साध्यवह्निमत्पर्वतविषयकनिश्चय- त्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकं यत् वह्न्यभाववत्पर्वतविषयक- बुद्धित्वं तदवच्छिन्नापि भवतीति तादृशप्रतिबध्यताशालित्वस्य पर्वतो वह्न्यभाववान्न वेति संशये सत्वादित्याशङ्कामिष्टापत्त्या परिहरति—तत्रेति। वह्न्यादिसाध्यकस्थल इत्यर्थः। ननु कथमिष्टापत्तिः, साध्यतावच्छेदकावच्छिन्नसाध्यतदभावकोटिकसंशय- स्यैव पक्षतात्वाङ्गीकारादित्यत आह—तस्येति।

नन्वेवमपि पर्वतो वह्निव्याप्यवानित्यत्र पर्वतो वह्निमान्न वेति संशयस्य पक्ष- तात्वं दुर्वारम्। एवं पर्वतो वह्निमान्न वेति संशयः। तन्निष्ठविषयिता वह्नि- मत्पर्वतविषयिता तद्धटितधर्मः वह्निमत्पर्वतविषयिताशालिनिश्चयत्वं तदवच्छिन्नप्रति- बन्धकतानिरूपिता या पर्वतो वह्निमान्न वेति संशयनिष्ठा वह्न्यभाववत्पर्वत- विषयकबुद्धित्वावच्छिन्ना प्रतिबध्यता सा साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छि- न्नापि भवति। तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्येव तदभावव्याप्यवत्ता- निश्चयस्यापि प्रतिबन्धकत्वात् वह्न्यभाववत्ताबुद्धित्वावच्छिन्नं प्रति वह्न्यभावाभाव- व्याप्यवत्तानिश्चयस्येव वह्निव्याप्यवत्तानिश्चयस्यापि प्रतिबन्धकत्वमस्ति। वह्न्यभावा- भावस्य वह्निरूपत्वात्। तथा च साध्यवत्तानिश्चयः पर्वतो वह्निव्याप्यवानिति

भावबोधिनी

निश्चयः। तन्निष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतवह्न्यभाववत्पर्वतविषयिताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता पर्वतो वह्निमान्न वेति संशये इति तस्य पक्षतात्वापत्तिरित्यत आह—स्वनिष्ठविषयितायामिति। तथा च पर्वतो वह्निमान्न वेति संशयनिष्ठायां वह्निमत्पर्वतविषयितायां वह्न्यभाववत्पर्वतविषयितायां वा पर्व वह्निव्याप्याभाववानित्याकारकबाधनिश्चयप्रतिबध्यतावच्छेदकत्वं नास्ति। अतः स्वपदेन तादृशसंशयस्योपादातुमशक्यतया न तस्य पक्षतात्वमिति भावः। तथा च बाधनिश्चयप्रतिबध्यतावच्छेदकीभूता या स्वनिष्ठविषयिता—तद्घटितधर्मावच्छिन्न-प्रतिबन्धकतानिरूपितसाध्यतत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यताशालिज्ञानं पक्षतेति पर्यवसन्नम्।

नन्वेवमपि पर्वतो वह्निव्याप्यवानित्यत्र वह्निव्याप्याभावाभाववान् पर्वतो वह्निमान्न वेति संशयस्य पक्षतात्वापत्तिः। तादृशसंशयनिष्ठवह्निव्याप्याभावाभाववत्पर्वतविषयितायाः वह्निव्याप्याभाववान् पर्वत इत्याकारकबाधनिश्चयप्रतिबध्यतावच्छेदकत्वात् तद्घटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः वह्न्यभावांशे तादृशसंशये सत्त्वादित्याशङ्क्याह—तत्र वह्निव्याप्याभावाभावत्वेनेति। अयमत्राशयः। वह्निव्याप्याभावाभाववत्पर्वतविषयितायाः स्वनिष्ठविषयितापदेनोपादाने तस्याः बाधप्रतिबध्यतावच्छेदकत्वेऽपि तद्घटितवह्निव्याप्याभावाभाववत्पर्वतविषयिताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यता तादृशे संशये नास्ति। पर्वतो वह्न्यभाववानिति बुद्धिं प्रति वह्निव्याप्यत्वेन वह्निव्याप्यावगाहिज्ञानस्यैव प्रतिबन्धकत्वात्। स्वनिष्ठविषयितापदेन वह्निमत्पर्वतविषयिताया उपादाने तस्या बाधप्रतिबध्यतावच्छेदकत्व न संभवति। अतो नोक्तसंशयस्य पक्षतात्वापत्तिरिति।

## गादाधरी

वह्न्यभाववान् पर्वतो घटवान्नवेत्यादौ व्यावृत्त्यसंभवेपि शुद्धवह्नित्वावच्छिन्नसाध्यकस्थले वह्न्यभाववान् पक्ष इत्येतादृशबाधनिश्चयप्रतिबध्यस्य महानसीयवह्निमान्न वा पक्ष इत्येतादृशसंशयस्य पक्षतात्ववारणाय साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्व-निवेशनं सफलमिति ध्येयम्। एतेन अवच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदक-

---

## भावबोधिनी

ननु स्वनिष्ठविषयितायां बाधप्रतिबध्यतावच्छेदकत्वनिवेशे प्रतिबध्यतायां साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वविशेषणं व्यर्थम्। वह्निसाध्यकस्थले वह्न्यभाववान् पर्वतो घटवान्न वेति संशयस्य पक्षतात्ववारणाय हि तदुपात्तम्। तत्र स्वनिष्ठघटवत्पर्वतादिविषयितायाः पर्वतो वह्न्यभाववानिति बाधप्रतिबध्यतावच्छे-दकत्वविरहादेव स्वपदेन तादृशसंशयोपादानासंभवादित्यत आह— एवं चेत्यादिना। स्वनिष्ठविषयितायां बाधप्रतिबध्यतावच्छेदकत्वनिवेशे चेत्यर्थः। व्यावृत्त्यसंभवेऽपीति। पक्षतात्ववारणरूपप्रयोजनासंभवेऽपीत्यर्थः। शुद्धवह्नित्वावच्छिन्नेति। तथा च पर्वतो वह्निमानित्यत्र पर्वतो महानसीयवह्निमान्न वेति संशयस्य पक्षतात्वापत्तिवार-णाय संशयत्वघटकप्रतिबध्यतायां साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्व-निवेशः। तथा हि तादृशसंशयनिष्ठायाः महानसीयवह्निमत्पर्वतविषयितायाः पर्वतो वह्न्यभाववानित्याकारकबाधनिश्चयप्रतिबध्यतावच्छेदकतया सा विषयिता स्वनिष्ठविषयितापदेनोपादीयते। तद्घटितधर्मः महानसीयवह्निमत्पर्वतविषयिताशालि-निश्चयत्वम्, तदवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वं महानसीय-वह्न्यभावांशे पर्वतो महानसीयवह्निमान्न वेति संशयेऽस्तीति। तद्वारणाय प्रति-बध्यतायां साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वनिवेशे च महानसीयवह्न्य-भाववत्पर्वतविषयकबुद्धित्वस्य पर्वतो वह्निमानित्याकारकसाध्यवत्तानिश्चयप्रतिबध्यता-

## गादाधरी

सामानाधिकरण्यमात्रेण कोटिद्वयावगाहिनो निश्चयस्यावच्छेदकावच्छेदेन साध्यादिमत्ता-निश्चयप्रतिबध्यत्वेपि निरुक्तसंशयत्वाभावेन न पक्षतात्वमिति संक्षेपः ।

अथ अवच्छेदकावच्छेदेन कोटिमवगाहमानस्य कोटिद्वयसमुच्चयस्य पक्षतात्वापत्तिः, तस्याप्युक्तरूपाक्रान्तत्वात् । न च विरोधावगाहित्वनिवेशात्तद्वारणमिति वाच्यम्;

---

## भावबोधिनी

वच्छेदकत्वं नास्तीति तदवच्छिन्नप्रतिबध्यतामादाय प्रसक्तो दोषो वारयितुं शक्य इति भावः ।

एतेनेति । उक्तरीत्या संशयत्वपरिष्करणेनेत्यर्थः । यथाश्रुतदीधित्यनुसारेण बाधनिश्चयनिवर्त्यत्वे सति साध्यवत्तानिश्चयनिवर्त्यं ज्ञानं पक्षतेति स्वीकारे पर्वतत्वावच्छेदेन वह्निसाध्यकानुमितौ पर्वतत्वसामानाधिकरण्येन वह्नितदभावरूपकोटिद्वयावगाहिनः पर्वतो वह्निमान् वह्न्यभाववांश्चेत्याकारकसमुच्चयात्मकनिश्चयस्य पर्वतत्वावच्छेदेन वह्निमत्तानिश्चयात्मकसाध्यवत्तानिश्चयप्रतिबध्यत्वात् तस्य समुच्चयस्य पक्षतात्वापत्तिः । न च तत्रावच्छेदकावच्छेदेन बाधनिश्चयप्रतिबध्यत्वसत्त्वेऽपि सामानाधिकरण्येन बाधनिश्चयाप्रतिबध्यत्वात् कथं पक्षतात्वप्रसक्तिरिति वाच्यम् । सामानाधिकरण्येन वह्निकोटिकसंशयसंग्रहार्थं अवच्छेदकावच्छेदेन बाधनिश्चयनिवर्त्यत्वस्य निवेशनीयतया उक्तसमुच्चये पक्षतात्वापत्तेर्दुर्वारत्वात् । स्वनिष्ठविषयिताघटितेत्यादिरीत्या परिष्कारे तु धर्मितावच्छेदकव्यापकत्वावच्छिन्नसंसर्गतानिरूपिताया एव प्रकारतायाः प्रतिबध्यताप्रतिबन्धकत्वान्यतरावच्छेदकतया तस्या उक्तसमुच्चयनिष्ठत्वाभावान्न तस्य पक्षतात्वापत्तिरित्याशयः । समुच्चयो नाम एकस्मिन् धर्मिणि नानाधर्मावगाहिनिर्णयः । धर्मयोर्विरोधः समुच्चये न भासते संशयते तु भासत

## गादाधरी

कुत्रचित्किंचित्प्रतियोगिकविरोधभानस्य समुच्चयेऽप्यक्षतत्वात्; साध्यतदभावादिविरोधावगाहित्वस्य प्रत्येकं सकलसंशयसाधारण्यासम्भवादिति चेन्न; संयोगादेरव्याप्यवृत्तिताज्ञानदशायां तद्वत्त्वग्रहविषयीभूतधर्मिणि तदभावादिग्रहोत्पत्त्या तद्वत्ताज्ञानस्य तदभाववत्ताज्ञानप्रतिबन्धकतायां अव्याप्यवृत्तित्वज्ञानस्योत्तेजकतामपेक्ष्य व्याप्यवृत्तित्वागाहित्वेनैव

---

## भावबोधिनी

इत्यनयोर्विशेषः । अत एव समुच्चयः चशब्दोनोल्लिख्यते चशब्देन कोट्योरविरोधः सूच्यते ।

अथेत्यादि । पर्वतत्वावच्छेदेन वह्निरूपकोटिं वह्नितदभावरूपकोटिद्वयं वा अवगाहमानस्य समुच्चयस्य या प्रकारता वह्निनिष्ठा वह्न्यभावनिष्ठा वा तस्याः पर्वतत्वव्यापकत्वावच्छिन्नसंयोगनिष्ठसंसर्गतानिरूपिततया तस्याः प्रतिबध्यतावच्छेदकत्वं प्रतिबन्धकतावच्छेदकत्वं चास्तीति स्वनिष्ठविषयिताघटितेत्यादिसंशयत्वसत्वात् पक्षतात्वापत्तिरित्यर्थः । कुत्रचिदिति । पर्वतो वह्निमानित्यनुमितौ पर्वतो वह्निमान् वह्न्यभाववांश्च भूतलं च घटविरुद्धघटाभाववदित्याकारकसमुच्चयस्य घटतदभावयोर्विरोधावगाहित्वेन विरोधावगाहित्वनिवेशेऽपि तादृशसमुच्चयस्य पक्षतात्वं दुर्वारमिति भावः । कुत्रचित्- घटाभावे किंचित्प्रतियोगिकविरोधभानस्य–घटप्रतियोगिकविरोधभानस्य । ननु साध्यतद्भावविरोधावगाहित्वे सति निरुक्तसंशयत्वं पक्षतात्वम् । उक्तसमुच्चयस्य घट–तदभावविरोधावगाहित्वेऽपि प्रकृतसाध्यवह्नितदभावविरोधावगाहित्वाभावान्न पक्षतात्वापत्तिरित्यत आह–साध्यतदभावेति । आदिपदेन पक्षवृत्तित्वतदभावविरोधावगाहित्वं पक्षनिष्ठाभावप्रतियोगित्वतदभावविरोधावगाहित्वं च गृह्यते । तथा च साध्यतदभावविरोधावगाहित्वनिवेशे पक्षवृत्तित्वतदभावविरोधावगाहिनः साध्यं पक्षवृत्ति न वेत्याकारकसंशयस्य पक्षनिष्ठाभावप्रतियोगित्वतदभावविरोधावगाहिनः साध्यं पक्षनिष्ठा-

भावबोधिनी

भावप्रतियोगि न वेत्याकारकसंशयस्य पक्षतात्वं न स्यादिति भावः। **संयोगादेरित्यादि।** अयमाशयः—तद्वत्ताबुद्धिं प्रति तदभाववत्ताज्ञानं प्रतिबन्धकमिति सामान्यतः वक्तुं न शक्यते, कपिसंयोगः अव्याप्यवृत्तिरिति ज्ञानकाले वृक्षः कपिसंयोगाभाववानिति ज्ञाने सत्यपि वृक्षः कपिसंयोगीति ज्ञानोत्पत्तेः। किन्तु अनवच्छिन्नाधारतासंबन्धेन तदभावप्रकारकज्ञानत्वेनैव प्रतिबन्धकत्वमिति वक्तव्यम्। कपिसंयोगाभावस्तु अवच्छिन्नाधारतासंबन्धेनैव प्रकार इति न तस्य ज्ञानस्य प्रतिबन्धकत्वम्। न चाव्याप्यवृत्तित्वज्ञानाभावविशिष्टतदभाववत्ताज्ञानत्वेन प्रतिबन्धकत्वमस्तु, अतोऽव्याप्यवृत्तित्वज्ञानकालीनतदभाववत्तानिश्चयस्य न प्रतिबन्धकत्वमिति वाच्यम्। तदभाववत्ताज्ञानेऽव्याप्यवृत्तित्वज्ञानाभावविशिष्टत्वनिवेशापेक्षया व्याप्यवृत्तित्वविषयकत्वनिवेशे लाघवात्। तथा च तद्वत्ताबुद्धिं प्रति तदभावनिष्ठप्रकारतानिरूपितव्याप्यवृत्तित्वनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यताशालिज्ञानं प्रतिबन्धकमिति फलितम्। व्याप्यवृत्तित्वं च निरवच्छिन्नाधारताकत्वम्। सर्वत्र प्रतिबन्धकज्ञाने तत् संसर्गतया भासते। इत्थं च व्याप्यवृत्तित्वनिष्ठसांसर्गिकविषयतानिरूपिततदभावनिष्ठप्रकारताया एव प्रतिबन्धकतावच्छेदकत्वम्। समुच्चये च कोट्योः धर्मिणश्च मध्ये व्याप्यवृत्तित्वं संसर्गतया न भासते। अतः स्वपदेन समुच्चयो नोपादातुं शक्यते, तन्निष्ठायाः कोटिविषयतायाः प्रतिबन्धकतानवच्छेदकतया तद्घटितधर्मावच्छिन्नायाः प्रतिबन्धकताया अप्रसिद्धेः। अतः समुच्चये नातिव्याप्तिरिति। **अपेक्ष्येति।** अप्रामाण्यज्ञानाभावादिभिः विशेषणविशेष्यभावे विनिगमनाविरहेण गौरवादित्यर्थः। **व्याप्यवृत्तित्वविषयत्वानिरूपितत्वादिति।** कोट्योरव्याप्यवृत्तित्वज्ञानकाल एव समुच्चयोत्पत्तेरिति भावः। संशये तु कोट्योर्व्याप्यवृत्तित्वं भासत इति विशेषः।

व्याप्यवृत्तित्वविशिष्टकोटिद्वयावगाहिज्ञानं संशय इति संशये समुच्चयव्यावृत्तविषयतां प्रदर्श्य एकधर्मिकविरुद्धनानाकोट्यवगाहिज्ञानं संशय इति मते संशयत्वं निर्वक्ति—**अथ वेति।** अत्रैवं लक्षणसमन्वयः—पर्वतो वह्निमान्न वेति संशये वह्नि-

गादाधरी

प्रतिबन्धकतोपेयते; व्याप्यवृत्तित्वञ्च अनवच्छिन्नाधारकत्वम्, सर्वत्र प्रतिबन्धकज्ञाने तादृशाधारतया अन्ततः कोटयोस्संसर्गविधयैव भानमुपेयते; एवं च समुच्चयनिष्ठकोटिविषयता न विपरीतज्ञानप्रतिबन्धकतावच्छेदिका व्याप्यवृत्तित्वविषयत्वानिरूपितत्वात्; अत्र उक्तसंशयत्वनिरुक्तौ स्वपदेन समुच्चयोपादानासम्भवेन तस्य पक्षतात्वापत्तिविरहात्

---

भावबोधिनी

निष्ठप्रकारतानिरूपितप्रकारिता वह्न्यभावनिष्ठप्रकारतानिरूपितप्रकारितेति प्रकारिताद्वयमस्ति । एव वह्नेः विरोधसंबन्धेन वह्न्यभावे, वह्न्यभावस्य विरोधसंबन्धेन वह्नौ च प्रकारतया भानमुपेयते । तथा च स्वं वह्निनिरूपिता प्रकारिता तद्घटितधर्मः वह्निनिरूपितप्रकारिताशालिनिश्चयत्वम् । तदवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदिका वह्न्यभावनिरूपिता प्रकारिता, एवं स्वं वह्निनिरूपितप्रकारिता तन्निरूपकतावच्छेदकं वह्नित्वं तदवच्छिन्ननिरूपितः तदवच्छिन्नप्रतियोगिको यो विरोधः तन्निष्ठसांसर्गिकविषयतानिरूपिता च सा वह्न्यभावनिरूपितप्रकारिता सामानाधिकरण्यसंबन्धेन तद्विशिष्टप्रकारिता च वह्निनिरूपिता प्रकारिता तद्वत्त्वं पर्वतो वह्निमान्न वेति संशयेऽस्तीति । विरोधविषयतानिरूपितप्रकारितेति । विरोधनिष्ठसांसर्गिकविषयतानिरूपितवह्निनिष्ठप्रकारतानिरूपितप्रकारितेत्यर्थः । समुच्चये कोट्योः विरोधो न संसर्गतयापि भासते । अत एव चशब्देनाभिलापः समुच्चयस्य । सकलसंशयसंग्रह इति । वह्निः पर्वतवृत्तिर्नवेति संशये पर्वतवृत्तित्वनिरूपितप्रकारितां पर्वतवृत्तित्वाभावनिरूपितप्रकारितां चादाय समन्वयः कार्यः । वह्निः पर्वतनिष्ठात्यन्ताभावप्रतियोगी न वेति संशये पर्वतनिष्ठात्यन्ताभावप्रतियोगित्वतदभावनिरूपितप्रकारिते आदाय समन्वयः कार्यः । अतः सकलसंशयसंग्रह इति भावः । नन्वेवमपि पर्वतो वह्निमान् वह्न्यभाववांश्च भूतलं च घटवन्निरुद्धघटाभाववदिति समुच्चयेऽतिव्याप्तिरित्य-

## गादाधरी

अथ वा स्वघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता स्वनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपितविरोधविषयतानिरूपितप्रकारिता सामानाधिकरण्यसंबन्धेन तद्विशिष्टप्रकारितैव संशयत्वम्; तच्च ससुच्चयव्यावृत्तम्, समुच्चये वरोधाभानेन कोटिद्वयविषयतयोर्विरोधविषयत्वानिरूपितत्वात्, संशये चान्तत कोटयोः संसर्गतयापि परस्परविरोधभानोपगमेन सकलसंशयसंग्रहः, यदंशे

---

## भावबोधिनी

त्राह—यदंशे संशयत्वमिति। वह्नितदभावांशे संशयत्वमापाद्यम्। तत्र च न विरोधभानमिति नातिव्याप्तिरिति भावः।

केचित्त्विति। साध्यप्रकारकनिश्चयसाध्याभावप्रकारकनिश्चययोः प्रतिबध्यतावच्छेदिका या विशेष्यता तन्निरूपकज्ञानं पक्षतेत्यर्थः। पर्वतो वह्निमान्न वेति संशये पर्वतो विशेष्यः तन्निष्ठा विशेष्यता वह्निनिष्ठप्रकारतानिरूपिता वह्न्यभावनिष्ठप्रकारतानिरूपिता च। तस्याः वह्निनिष्ठप्रकारतानिरूपितविशेष्यतात्वेन वह्न्यभावप्रकारकनिश्चयप्रतिबध्यतावच्छेदकत्वं, वह्न्यभावनिष्ठप्रकारतानिरूपितविशेष्यतात्वेन वह्निप्रकारकनिश्चयप्रतिबध्यतावच्छेदकत्वं चास्ति इति तादृशसंशये लक्षणसमन्वयः। पर्वतो वह्निमान् वह्न्यभाववांश्चेति समुच्चये तु वह्निनिष्ठप्रकारतानिरूपिता पर्वतनिष्ठा विशेष्यता अन्या। वह्न्यभावनिष्ठप्रकारतानिरूपिता पर्वतनिष्ठा विशेष्यता अन्याः। नैका विशेष्यता उभयनिष्ठप्रकारताद्वयनिरूपिता। तथा च एकस्याः विशेष्यताय साध्यनिश्चयसाध्याभावनिश्चयोभयप्रतिबध्यतावच्छेदकत्वं नास्तीति नातिव्याप्तिः। संशये समुच्चये च कोटिद्वयभानसाम्येऽपि एकस्या एव विशेष्यतायाः कोटिद्वयनिष्ठप्रकारताद्वयनिरूपितत्वं संशये, भिन्नभिन्नविशेष्यतायाः एकैककोटिनिष्ठैकैकप्रकारता-

## गादाधरी

संशयत्वं तत्कोटिविरोधस्यैवोक्तरूपेणोपादानसम्भवात् न वस्त्वन्तरविरोधभानमादायातिसङ्ग इति ।

केचित्तु– साध्यनिश्चयसाध्याभावनिश्चयप्रतिबध्यतावच्छेदकविशेष्यताशालित्वं समुदितार्थः, संशये च धर्मिणि उभयप्रकारतानिरूपितैकविलक्षणविषयता समुच्चयवैलक्षण्यायोपगम्यत इति तादृशविषयताया विभिन्नरूपेण उभयनिश्चयप्रतिबध्यतावच्छेदकतया नासम्भव इत्याहुः । तच्चिन्त्यम् ।

---

## भावबोधिनी

निरूपितत्वं समुच्चये इति तयोर्वैलक्षण्यार्थमेव स्वीक्रियत इति भावः । तादृशविषयताया इति । पर्वतनिष्ठायाः एकस्या विशेष्यतायाः इत्यर्थः । विभिन्नरूपेणेति । वह्निनिष्ठप्रकारतानिरूपितत्वेन वह्न्यभावनिष्ठप्रकारतानिरूपितत्वेन चेत्यर्थः । तच्चिन्त्यमिति । चिन्ताबीजं च विलक्षणविषयतायाः अनुमितिग्रन्थादौ निरास एव । निरुक्तरूपेणेति । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयनिवर्त्यत्वेन रूपेणेत्यर्थः । अनुगम इति । प्रातिस्विकरूपेण कारणत्वे सतीत्यर्थः । फलस्याविलक्षणतयेति । अनुमितिरूपकार्यस्यैकतयेत्यर्थः । व्यभिचारेणेति । व्यतिरेकव्यभिचारेणेत्यर्थः । तथा चोक्तसंशयानामनुमितिं प्रति प्रातिस्विकरूपेण कारणत्वेन यत्र पर्वतो वह्निमान्न वेति संशयात् पर्वतो वह्निमान् इत्यनुमितिः तत्र वह्निः पर्वतवृत्तिर्नवेति संशयं विनाप्यनुमितेरुत्पत्त्या व्यतिरेकव्यभिचारः, यत्र वह्निः पर्वतवृत्तिर्नवेति संशयादनुमितिः तत्र पर्वतो वह्निमान्न वेति संशयं विनापि अनुमितेरुत्पत्त्या व्यतिरेकव्यभिचार इति रीत्या व्यभिचारो द्रष्टव्यः । साध्यवद्भेदकोटिकसंशयः पर्वतो वह्निमद्भिन्नो न वेत्याकारकः ।

अप्रसिद्धिरिति । पर्वतः संयोगेन वह्निमान्न वा इति संशयस्य पर्वतः संयोगेन वह्नि-

दीधितिः

## न वा संबन्धान्तरेण सन्देहे निर्णीतसंबन्धेन पक्षत्वम्, न वा तमः

---

गादाधरी

प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतदभावकोटिकज्ञानत्वादिकमुपेक्ष्य निरुक्तरूपेण संशयनिवेशप्रयोजनं दर्शयति —तेन न पक्षेति। पक्षविशेष्यकस्य पक्षस्साध्यवान्न वेत्यस्य साध्यविशेष्यकस्य साध्यं पक्षवृत्ति न वेत्यस्य संशयस्याननुगमः, तथा सति फलस्याविलक्षणतया व्यभिचारेण कारणता भज्येतेति भावः। इदमुपलक्षणम्; साध्यवद्भेदादिकोटिकसंशयाननुगमोऽपि बोध्यः।

---

भावबोधिनी

मान् इति निर्णयनिवर्त्यत्वेपि साध्यनिर्णयसामान्यान्तर्गतपर्वतः समवायेन वह्निमानिति निर्णयनिवर्त्यत्वाभावात् साध्यनिर्णयसामान्यनिवर्त्यसंशयाप्रसिद्धिरित्यर्थः। यत्किंचिन्निर्णयनिवर्त्यत्वमिति। संयोगसंबन्धेन वह्न्यनुमितिं प्रति यत्किंचित्संसर्गकसाध्यनिर्णयनिवर्त्यः संशयः पक्षतेति विवक्षायां समवायसंसर्गकवह्निनिर्णयनिवर्त्यस्य पर्वतः समवायेन वह्निमान्नवेति संशयस्यापि पक्षतात्वं स्यादिति भावः। धर्मत्वांशनिवेशप्रयोजनमिति। संदिग्धसाध्यधर्मा धर्मी पक्ष इति मणिग्रन्थात् धर्मपदघटितात् संदेहप्रकारीभूतं साध्यनिष्ठाधेयतानिरूपिताधिकरणत्वं वा पक्षनिष्ठाधिकरणतानिरूपिताधेयत्वं वा पक्षतेति लभ्यते। तत्र दोष उच्यते न वा तमःप्रभृतिषु इत्यादिदीधितौ। तमः समवायसंबन्धेनाकाशवदित्यत्र आकाशनिष्ठाधेयताया अप्रसिद्ध्या तन्निरूपिताधिकरणत्वस्य, तमोनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वस्य चाप्रसिद्ध्या धर्मत्वांशं परित्यज्य पक्षता निरुक्तेति भावः। घटपक्षकस्थलमुपेक्ष्य तमःपक्षकस्थलानुधावने बीजमाह स्वधर्मत्वविषयेत्यादि। स्वपदं पक्षपरम्। पक्षनिरूपिताधेयत्वप्रकारकसंशय-

दीधितिः

प्रभृतिषु समवायेनाकाशादिसाधने तद्वैकल्यम् । संशययोग्यतां

---

गादाधरी

विशिष्य संबन्धनिवेशप्रयोजनं दर्शयति - न वेति । संबन्धान्तरेण-तत्संबन्धातिरिक्तसंबन्धेन; सन्देहे- सन्देहदशायाम्; निर्णीतसंबन्धेन-पक्षांशे साध्यीयसंसर्गविधया तत्कालीननिर्णयविषयीभूततत्संबन्धेन । एतदनन्तरं 'अनुमिता' विति पूरणीयम् । तत्संबन्धेन संशयासत्त्वेपि तत्संबन्धेन सिद्धिशून्यकाले इष्टापत्तिसंभवान्निर्णीतेत्युक्तम् ।

---

भावबोधिनी

विशेष्यीभूतसाध्यकत्वं पक्षत्वमित्युक्ते घटः समवायेन गगनवानित्यत्र नाप्रसिद्धिः । घटनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य घटसमवेतत्वस्य घटत्वादौ प्रसिद्धत्वात् गगनं घटसमवेतं न वेति संशयस्य संभवात् । अतः तमःपक्षकस्थलेऽप्रसिद्धिरुक्ता । ननु तमःपक्षकस्थलेऽपि नाप्रसिद्धिः, तमोनिरूपिताधेयत्वस्य तमस्त्वादौ प्रसिद्धस्य गगने संशयसंभवादित्यत आह—तथा च साध्य इति । पर्वतः संयोगसंबन्धेन वह्निमानिति निर्णयकाले पक्षताविरहान्नानुमितिरिति वक्तुं न शक्यते, तादृशनिर्णयकाले वह्निः समवायेन पर्वतवृत्तिर्नवेति संशयसंभवात् । अतः तादृशनिर्णयकालेऽनुमितिवारणाय पक्षनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नाधेयत्वप्रकारकसंशयविषयसाध्यकत्वमेव पक्षतेति वाच्यम् । पर्वतः संयोगेन वह्निमानिति निर्णयकाले तु वह्निः पर्वतसंयुक्तो न वेति संशयः न संभवति । तस्य निर्णयस्य तं संशयं प्रति प्रतिबन्धकत्वात् । अतः पक्षताविरहान्न तादृशनिर्णयकालेऽनुमित्यापत्तिः । इत्थं च तमः समवायेनाकाशवदित्यत्र तमोनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य तमस्त्वादौ प्रसिद्धत्वेऽपि तमःसमवेत-

तत्त्वचिन्तामणिः

नाप्युपलक्षणम्; अव्यावर्तकत्वापत्तेः। नापि साधकबाधकमानाभावः;

दीधितिः

निरस्यति—नापीति। साधकबाधकमाने - सिद्धिबाधौ।

गादाधरी

संबन्धमनिवेश्य साध्यनिर्णयसामान्यनिवर्त्यत्वनिवेशेऽप्रसिद्धिप्रसङ्गः यत्किंचिन्निर्णयनिवर्त्यत्वं यत्किंचित्संसर्गकनिश्चयसामान्यनिवर्त्यत्वं वा यदि निवेश्यते? तदाऽयमतिप्रसङ्गो बोध्यः धर्मत्वांशानिवेशनप्रयोजनमाह – तमःप्रभृतिष्विति। स्वधर्मत्वसंशयविषयसाध्यकत्वं पक्षत्वमित्युक्तौ धर्मत्वनिवेशेऽप्यवृत्तिसाध्यकघटादिपक्षकस्थले न पक्षतावैकल्यम्, घटादिसमवेतत्वस्य प्रसिद्ध्या गगनादौ तत्संशयसम्भवादिति तमःप्रभृतिपर्यन्तानुधावनम्;

भावबोधिनी

स्वरूपस्य तमोनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य कुत्राप्यप्रसिद्धतया तत्प्रकारकसंशयरूपपक्षता तत्र न संभवतीति भावः। तमः आकाशनिष्ठाधेयतानिरूपिताधिकरणतावन्नवेति संशयोऽपि न संभवति, आकाशनिष्ठाधेयतायां अप्रसिद्धत्वात् गगनादौ तत्संशयसंभवादिति। गगनादिविशेष्यकघटसमवेतत्वप्रकारकसंशयसंभवादित्यर्थः। स्ववृत्तित्वसंशयस्येति। पक्षवृत्तित्वसंशयस्येत्यर्थः। आद्ययापीति। अपिना पक्षः साध्याधिकरणं न वेति संशयः समुच्चीयते। दीधितौ समवायेनाकाशसाधने इत्यत्र समवायेनेत्युक्तेः प्रयोजनमाह–स्वरूपसंबन्धेनेति। वृत्तिमतः पदार्थस्य साध्यत्वमुपेक्ष्यावृत्तेराकाशस्य साध्यत्वाङ्गीकारे बीजमाह–पक्षे साध्येयेति। पक्षविशेष्यकसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यनिष्ठाधेयतानिरूपिताधिकरणत्वप्रकारकसंशयस्येत्यर्थः।

पक्षतायाः अनुमितिं प्रति स्वातन्त्र्येण कारणत्वम्; पक्षताविशिष्टधर्मिवृत्तित्व-

## गादाधरी

तथा च साध्ये संबन्धान्तरेण पक्षवृत्तित्वसंशयदशायां निर्णीतसंबन्धेनानुमितिवारणाय प्रकृतसाध्यतावच्छेदकसंबन्धेन स्ववृत्तित्वसंशयस्यावश्यं निवेशनीयतया तमःप्रभृतिसमवेतत्वस्याप्रसिद्धया साध्ये पक्षवृत्तित्वसन्देहमादायापि न तत्र पक्षत्वोपपत्तिरिति भावः। स्वरूपसंबन्धेन तमोवृत्तित्वस्य प्रसिद्धया तेन संबन्धेन अनुमितौ नानुपपत्तिः, अतस्समवायेनेति। पक्षे साध्यीयसाध्यतावच्छेदकसंबन्धावच्छिन्नधर्मितासंशयस्य पक्षतात्वे तमःप्रभृतिषु वृत्तिमत्साधने नानुपपत्तिः अत आकाशादीति। तद्वैकल्यम्—पक्षतावैकल्यम्।

---

## भावबोधिनी

ज्ञानस्यानुमितिकारणतया तादृशकारणतायां विशेषणविधया अवच्छेदकत्वं, पक्षतोपलक्षितधर्मिवृत्तित्वज्ञानस्यानुमितिहेतुतया उपलक्षणविधया कारणतावच्छेदकत्वमिति त्रयः पक्षाः। इमे त्रयोऽपि पक्षाः संशयस्य पक्षतात्वे न संगच्छन्त इति दूषणं कर्तव्यम्। तत्र मणिग्रन्थात् विशेषणोपलक्षणपक्षयोरेव दूषणं लभ्यते, स्वातन्त्र्येण कारणतापक्षस्य तन्न लभ्यते। अतः न्यूनतापरिहाराय पक्षत्रयदूषणपरं तथा मणिग्रन्थं योजयति—संदेहोऽनुमितौ हेतुरित्यादिना। संदेहो न विशेषणमिति मणिः संदेहस्य स्वातन्त्र्येण कारणतापक्षस्य विशेषणविधया कारणतावच्छेदकत्वपक्षस्य च दूषणपरः। तथा हि यत्र आदौ साध्यसंदेहः ततः लिङ्गदर्शनं ततो व्याप्तिस्मरणं ततः परामर्शः ततोऽनुमितिः तत्र लिङ्गदर्शनेन संदेहस्य परामर्शपूर्वक्षणे व्याप्तिस्मरणक्षणे नाशः। यत्र च साध्यसंदेहानन्तरं व्याप्तिस्मरणं ततो लिङ्गदर्शनं ततः परामर्शः ततोऽनुमितिः तत्र व्याप्तिस्मरणेन परामर्शपूर्वं लिङ्गदर्शनकाले संदेहस्य विनाशः। तथा च तादृशस्थलद्वये अनुमित्यव्यवहितप्राक्क्षणेऽविद्यमानस्य साध्यसंदेहस्यानुमितिहेतुत्वं वा विशेषणविधया अनुमितिकारणतावच्छेदकत्वं वा न संभवतीति भावः। यथाश्रुतमणिग्रन्थात् लिङ्गदर्शनव्याप्तिस्मरणयोरुभयोरेकत्र स्थले

गादाधरी

सन्देहोनुमितौ हेतुः ? विशेषणतया पक्षधर्मताज्ञाननिष्ठायां तज्जनकतायां अवच्छेदकः? अथ वा उपलक्षणतया तादृशजनकतायामवच्छेदकः? तत्राद्यं पक्षद्वयं दूषयति–मूले सन्देह] इति । विशेषणम्–अपेक्षणीयानुमित्यव्यवहितप्राक्सत्ताकं अनुमिति-कारणं विशेषणविधया कारणतावच्छेदकं वेति । यावत् ।परामर्शपूर्वं तस्य संशयस्य नाशादि-त्यन्वयः । यत्रादौ लिङ्गदर्शनं ततो व्याप्तिस्मरणं तदभिप्रायेण लिङ्गदर्शनस्य यत्र

---

भावबोधिनी

संदेहनाशकत्वमवगम्यते । तन्न संगच्छते । ज्ञानयोर्यौगपद्याभावेन उभयोर्नाश-कत्वायोगात् । अतः स्थलभेदेन तयोर्नाशकत्वपरतया व्याचष्टे– यत्रादौ लिङ्गदर्शन-मित्यादिना । व्याप्तिस्मरणानुगुणज्ञानान्तरेति । व्याप्तिप्रविष्टपदार्थज्ञानेत्यर्थः । नोप-लक्षणमित्यस्य न अनुमित्यव्यवहितप्राक्क्षणेऽविद्यमानं सत् पक्षधर्मताज्ञाननिष्ठानुमिति-कारणतावच्छेदकमित्यर्थः । तत्र हेतुःउक्तो मणौ अव्यावर्तकतापत्तेरिति । उपलक्षण-स्यापि व्यावर्तकत्वात् कथमेतदित्यतो व्याचष्टे - सिद्धिकालेऽनुमित्यवारकतापत्तेरिति । साध्यनिश्चयकालेऽनुमितिवारणाय हि पक्षतायाः कारणतावच्छेदकत्वस्वीकारः कारणत्व-स्वीकारो वा । सिद्धिकालिकपरामर्शस्यापि कालान्तरीणसंदेहविषयत्वोपलक्षित-धर्मिवृत्तित्वावगाहितया उपलक्षणीभूतपक्षताबलात् सिद्धिकालेऽप्यनुमित्यापत्तिरित्यर्थः ।

साध्यसंदेहः स्वातन्त्र्येणानुमितौ हेतुरिति पक्षमवलम्ब्य आक्षिपति- अथ साध्यसंदेहोनुमितौ हेतुरेवेत्यादिना । एवकारेण विशेषणतया उपलक्षणतया वा कारणतावच्छेदकत्वपक्षव्यवच्छेदः । यत्र क्रमेण संशयलिङ्गदर्शनव्याप्तिस्मरणपरा-मर्शानुमितयो भवन्ति तत्र अनुमित्यव्यवहितपूर्वपरामर्शक्षणे संशयस्य नष्टत्वात् । साध्यस्यानुमितिहेतुत्वं न संभवतीति यदुक्तं, तन्न तत्रापि व्याप्तिस्मरणानन्तरं

## गादाधरी

तयोर्विपरीतक्रमः, तदभिप्रायेण व्याप्तिस्मरणस्य नाशकत्वमभिहितम्; अत एकत्रोभयोर्नाशकत्वासम्भवेऽपि न क्षतिः। आदिपदेन यत्र संशयानन्तरक्षणे व्याप्तिस्मरणाद्यनुगुणज्ञानान्तरोत्पादः तदनन्तरमेव व्याप्तिस्मरणादिः तत्रत्यतादृशज्ञानसङ्ग्रहः।

द्वितीयं दूषयति–नोपलक्षणमिति। अव्यावर्तकतापत्तेः–सिद्धिकाले अनुमित्य-वारकतापत्तेः। तत्कालीनपरामर्शस्यापि कालान्तरीणसंशयविषयधर्मवृत्तित्वावगाहितया सामग्र्या अक्षतत्वादिति भावः।

---

## भावबोधिनी

परामर्शाव्यवहितपूर्वक्षणे संशयान्तरं जायते, तच्चानुमितिपूर्वक्षणेऽप्यस्तीति संशयस्य हेतुत्वसंभवादिति प्रश्नः। न चानुत्पन्न इति। तथा च यत्र संशयेऽनुत्पन्न एव परामर्श-सामग्रीबलात् परामर्शो जायते तत्र परामर्शात् पूर्वं संशयासंभवः, परामर्शोत्तरं तु संशयो न संभवति संशयं प्रति व्याप्यवत्ताज्ञानस्य विशेषदर्शनात्मकस्य प्रति-बन्धकत्वात् परामर्शस्यापि विशेषदर्शनरूपतया प्रतिबन्धकत्वात्। तथा च तत्र संशयं विनाप्यनुमित्युत्पत्त्या व्यतिरेकव्यभिचारेण साध्यसंशयस्य न हेतुत्वमिति भावः। स्वसामग्री –परामर्शसामग्री लिङ्गदर्शनादिः। एकतरकोटिव्याप्यवत्ताज्ञान विशेषदर्शनमित्युच्यते। फलानुरोधेनेत्यादि– अनुमितिरूपं कार्यं तत्रापि भवति, कार्यं तु कारणं विना न भवितुमर्हति। अतः सर्वत्रापि परामर्शपूर्वक्षणे संशयो-त्पादः कल्प्यते। अतो न व्यतिरेकव्यभिचार इति भावः। प्रत्यक्षनिश्चय एवेति। साध्यविषयकप्रत्यक्षरूपः निश्चय इत्यर्थः। एवकारेणानुमितिर्व्यवच्छिद्यते। ननु तत्रानुमित्यभावे वह्न्यर्थिनः प्रवृत्तिः कथम्? प्रवृत्तिं प्रति वह्निनिश्चयस्य कारणत्वात् इत्यत आह–तत एवेति। प्रत्यक्षात्मकनिश्चयादेवेत्यर्थः। ननु तत्रानुमितिर्न जायते

## गादाधरी

अथ साध्यसन्देहोऽनुमितौ हेतुरेव, लिङ्गदर्शनव्याप्तिस्मरणादिना पूर्वोत्पन्न-संशयनाशेऽपि तदनन्तरं परामर्शाव्यवहितप्राक्क्षणजातसंशयान्तरादेव अनुमितिरिति कल्प्यते; न चानुत्पन्न एव संशये यत्र स्वसामग्रीवशात्परामर्शोत्पत्तिस्तत्र अनुमित्यनुत्पादप्रसङ्गः परामर्शकाले तदुत्तरं च विशेषदर्शनरूपप्रतिबन्धकवशेन संशयोत्पादासम्भवादिति वाच्यम्; फलानुरोधेन सर्वत्रैवानुमित्युपधायकपरामर्शाव्यवहितप्राक्क्षणे संशयोत्पादकल्पनात् यत्र संशयोत्पादप्राक्क्षणे परामर्शसामग्री प्रामाणसिद्धा यत्र वा परामर्शसामग्रीपूर्वक्षणे संशय-

---

## भावबोधिनी

चेत् अनुमिनोमीत्यनुव्यवसायः कथम्? पश्यामीत्यनुव्यवसायस्यैव प्राप्तेरित्यत आह-तत्रेति अनुमितित्वाभाववति प्रत्यक्षेऽनुमितित्वावगाहितया अनुमिनोमित्यनुव्यवसायस्य भ्रमत्व-मित्यर्थः। ननु कुत एतावन्तं क्लेशमूद्वा संशयस्य पक्षतात्वं स्वीक्रियते? सिषाधयिषा-विरहविशिष्टसिद्धयभावस्यैव पक्षतात्वमस्त्वित्यत आह-अनुगताननुगतेति। साध्यविशिष्ट-पक्षविषयकानुमितिर्जायतामित्यादयः अनुगतसिषाधयिषाः। एतत्क्षणानन्तर-क्षणेऽनुमितिर्जायतामित्यादयः अननुगतसिषाधयिषाः। लाघवान्तरमाह- संशयहेतु-त्वोपगम इति। साध्यसंशयः पक्षतेत्यभ्युपगमे साध्यनिश्चयकाले साध्यसंशयरूप-पक्षताया असंभवादेवानुमितिवारणसंभवात् सिद्धयभावस्य यथा नानुमितिहेतुत्वं कल्प्यते तथा साध्याभावनिश्चयकालेऽपि साध्यवान्नवेति संशयाभावादेवानुमितिवारण-संभवात् साध्याभावनिश्चयरूपबाधाभावस्य अनुमितिहेतुत्वं न कल्प्यत इति लाघवम्। सिद्धयभावस्य हेतुत्वे तु बाधनिश्चयकालेऽनुमितिवारणाय बाधनिश्चयाभावस्यापि हेतुत्वं कल्पनीयमिति गौरवमिति भावः। नानाविधबाधेति। पक्षः साध्याभाव-वानिति; साध्यं पक्षावृत्ति इति, साध्यं पक्षनिष्ठाभावप्रतियोगीति चैवमादयो निश्चया नानाविधबाधाः तेषामभावस्येत्यर्थः। लाघवान्तरमाह- अनुमितिसामग्रीप्रतिबन्धकता-

गादाधरी

जनकधर्मिज्ञानाद्यभावः प्रामाणिकस्तत्र परामर्शानन्तरं साध्यस्य प्रत्यक्षनिश्चय एवोपगम्यते, तत एव प्रवृत्त्याद्युपपत्तेः; तत्रानुमिनोमित्यनुव्यवसायस्याप्यगत्या भ्रमत्वमेव कल्प्यते; अनुगताननुगतसिषाधयिषाभावकूटविशिष्टसिद्ध्यभावस्याऽनुमितिहेतुत्वापेक्षया संशयहेतुतायां लाघवात्, संशयहेतुत्वोपगमे बाधनिश्चयदशायां संशयाभावादेवानुमितिवारणसंभवात् नानाविधबाधाभावस्य अनुमितिहेतुत्वाकल्पनेनानुमितिसामग्रीप्रतिबन्धक

---

भावबोधिनी

यामिति। बाधाभावस्यानुमितिहेतुत्वे भिन्नविषयकप्रत्यक्षं प्रति अनुमितिसामग्र्याः प्रतिबन्धकत्वात् अनुमितिसामग्र्यन्तर्गतस्य बाधाभावस्यापि प्रतिबन्धकत्वं वाच्यमिति गौरवम्। साध्यसंशयस्यानुमितिहेतुत्वे तु बाधाभावस्यानुमित्यहेतुतया भिन्नविषयकप्रत्यक्षं प्रति अनुमितिसामग्रीप्रतिबन्धकतायां बाधाभावस्यानिवेशेन लाघवमिति भावः।

ननु बाधनिश्चयाभावस्यानुमित्यहेतुत्वे बाधस्य हेत्वाभासत्वानुपपत्तिः, अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयस्यैव हेत्वाभासत्वादित्यत आह—जनकज्ञानविरोधित्वेनेति। अनुमितितत्कारणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वं हि हेत्वाभासत्वम्। बाधनिश्चयस्यानुमितिकारणसंशयप्रतिबन्धकतया तद्विषयस्य बाधस्य हेत्वाभासत्वमुपपद्यत इति भावः।

ननु संशयस्य पक्षतात्वे तस्य पक्षः साध्यवान्न वा, साध्यं पक्षवृत्ति न वा, साध्यं पक्षनिष्ठाभावप्रतियोगि न वेत्येवं नानारूपतया प्रत्येकं तेषामनुमितिहेतुत्वं वक्तव्यम्। तथा च एकविधसंशयात् यत्रानुमितिर्जायते तत्र संशयान्तरं विनापि तदुत्पत्त्या व्यतिरेकव्यभिचारः। न च सर्वेषां संशयानां अनुगतरूपेण हेतुत्वान्न व्यभिचार इति वाच्यम्। अनुगतरूपस्य दुर्वचत्वात्। स्वनिष्ठ-

गादाधरी

तायां तदनिवेशेन च लाघवात् जनकज्ञानविरोधितयैव च बाधादीनां हेत्वाभासत्वोपपत्तेः। संशयस्य च कार्यतावच्छेदककोटौ कारणवैशिष्ट्यं निवेश्य विशिष्य तादृशतादृशसंशयत्वेनैव हेतुता वाच्या, अतो दीधितिकारदर्शितरूपस्य स्वत्वघटिततया उक्तयुक्त्या आवश्यकत्वात् प्रतिबध्यतादीनां स्वस्वावच्छेदकभेदेन भिन्नानामननुगमाच्च शब्दानुगममात्रपर्यवसानेऽपि न क्षतिः। संशयस्य बाधसाधारणतदभाववत्ताज्ञानत्वेन कारणत्वम् न तु

---

भावबोधिनी

विषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वादेः स्वत्वघटितत्वेनाननुगतत्वादित्याशङ्क्य उक्तसंशयानां प्रत्येकरूपेणैव हेतुत्वम्, कार्यतावच्छेदकशरीरेऽव्यवहितोत्तरत्वनिवेशान्न व्यभिचार इति समाधत्ते— संशयस्य कार्यतावच्छेदककोटावित्यादिना। पक्षः साध्यवान्न वेत्याकारकसंशयाव्यवहितोत्तरानुमितिं प्रति पक्षः साध्यवान्न वेति संशयः कारणम्, साध्यं पक्षवृत्ति नवेत्याकारकसंशयाव्यवहितोत्तरानुमितिं प्रति साध्यं पक्षवृत्ति न वेत्याकारकसंशयः कारणमित्येवं कार्यकारणभावः। साध्यं पक्षवृत्ति न वेत्याकारकसंशयोत्तरं यानुमितिः तस्याः पक्षः साध्यवान्न वेत्याकारकसंशयाव्यवहितोत्तरत्वरूपकार्यतावच्छेदकानाक्रान्ततया तस्याः तादृशसंशयं विनोत्पत्तावपि न व्यतिरेकव्यभिचारः। कार्यतावच्छेदकावच्छिन्नस्य तत्कारणं विनोत्पत्तावेव व्यतिरेकव्यभिचारात् इति भावः। कारणवैशिष्ट्यमिति। वैशिष्ट्यं चाव्यवहितोत्तरत्वसंबन्धेन। उक्तयुक्त्येति। वह्निव्याप्यसाध्यके वह्निमान्नेत्यादिसंशयवारणानुरोधेनेत्यर्थः। ननु संशयत्वं विषयताविशिष्टप्रतिबध्यत्वम्। वैशिष्ट्यं च स्वावच्छिन्नप्रतिबन्धकतानिरूपितत्वस्वसामानाधिकरण्योभयसंबन्धेन। अतो नाननुगम इत्यतः प्रकारान्तरेणाननुगममाह— प्रतिबध्यतादीनामिति। आदिपदेन प्रतिबन्धकतादि गृह्यते। प्रतिबन्धकतावच्छेदकभेदेन प्रतिबन्धकतायाः प्रतिबध्यतावच्छेदकभेदेन प्रतिबध्यतायाश्च भेदात्

गादाधरी

पक्षधर्मिकसाध्यतदभावोभयप्रकारकज्ञानत्वरूपसंशयत्वेन; गौरवात्। बाधनिश्चयदशायां च नानुमित्यापत्तिः, प्रत्यक्षादिसाधारणालौकिकविशिष्टबुद्धित्वावच्छिन्नं प्रति बाधनिश्चयप्रतिबन्धकतया आवश्यकत्वादिति तु न श्रद्धेयम्; बाधनिश्चये अप्रामाण्यग्रहसत्त्वे अनुमित्यापत्तेः। अप्रामाण्यग्रहाभावस्य संशयजनकतायां प्रयोजनविरहेणानिवेशात् साध्यसन्देहे अप्रामाण्यग्रहसत्त्वेऽप्यनुमित्युपगमे क्षतिविरहात्, संशये अप्रामाण्यनिश्चयसत्त्वे अनुमित्यनुत्पादेपि संशये विषयसंशायकस्य अप्रामाण्यसंशयस्याकिंचि-

---

भावबोधिनी

प्रतिबन्धकतादिघटितं पूर्वनिरुक्तं संशयत्वमननुगतमिति भावः। शब्दानुगममात्रेति। शब्दैक्यमात्रेत्यर्थः। मात्रपदेन अर्थैक्यव्यवच्छेदः। न क्षतिरिति। न व्यतिरेकव्यभिचार इत्यर्थः।

मतविशेषमनुवदति—संशयस्य बाधसाधारणेत्यादिना। पक्षः साध्यवान्न वेति संशयस्य पक्षधर्मिकसाध्यतदभावोभयप्रकारकज्ञानत्वेन न हेतुत्वम्; अपि तु पक्षधर्मिकतदभावप्रकारकज्ञानत्वेन। न च पक्षधर्मिकसाध्याभावप्रकारकज्ञानत्वस्य पक्षः साध्यभाववानित्याकारकबाधनिश्चयसाधारणतया बाधनिश्चयकालेऽप्यनुमित्यापत्तिरिति वाच्यम्। लौकिकसन्निकर्षजन्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति तदभाववत्तानिश्चयत्वावच्छिन्नस्य प्रतिबन्धकतया बाधनिश्चयकालेऽनुमित्यसंभवादिति भावः। ननु पक्षधर्मिकसाध्यतदभावोभयप्रकारकज्ञानत्वेन हेतुत्वे बाधनिश्चयस्य तादृशज्ञानत्वरूपकारणतावच्छेदकानाक्रान्तत्वादेव तत्काले नानुमित्यापत्तिः। तदभाववत्ताज्ञानत्वेन संशयस्य हेतुत्वे तु बाधनिश्चयस्यापि कारणतावच्छेदकाक्रान्ततया तत्कालेऽनुमित्यापत्तिः। तद्वारणाय च बाधनिश्चयस्यानुमितिप्रतिबन्धकत्वं कल्प-

गादाधरी

स्करतया तत्र अप्रामाण्यनिश्चयत्वावच्छिन्नाभावस्यैव निवेशनीयतया अप्रामाण्यशङ्का-स्कन्दितबाधनिश्चयादनुमितेर्दुर्वारत्वात् इति चेन्न—प्रत्यक्षादिना निर्णीतस्यापि साध्यस्य अनुमित्सया अनुमितेरानुभाविकत्वात्, संशयस्य पक्षतात्वे तदनुपपत्तेः। अनुभवा-पलापे विशेषदर्शनमूलकप्रत्यक्षादेव सर्वत्र प्रवृत्त्यादिसम्भवे अनुमानप्रामाण्यस्यैव विलोपापत्तेः। पक्षधर्मताप्रत्यक्षस्मरणयोरविरलक्रमेणोत्पत्त्यनन्तरं यत्र परामर्शः तत्र व्याप्तिस्मरणकालीनपक्षधर्मताज्ञानस्यापि विशेषदर्शनतया तस्य पूर्वं सत्त्वेन तत्र

---

भावबोधिनी

नीयमिति गौरवं इत्यत आह—प्रत्यक्षादिसाधारणेति। बाधनिश्चयकाले लौकिक-सन्निकर्षाजन्यतद्वत्ताप्रत्यक्षस्यानुत्पत्त्या तादृशं प्रत्यक्षं प्रति बाधनिश्चयस्य प्रति-बन्धकत्वे कल्पनीये लौकिकसन्निकर्षाजन्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकता कल्प्यते। तच्च बुद्धित्वं प्रत्यक्षानुमित्युभयसाधारणम्। अतः अनुमितिं प्रति पृथक्प्रतिबन्धकत्वं न कल्प्यत इति न गौरवमिति भावः।

उक्तं मतविशेषं दूषयति इति तु न श्रद्धेयमिति। तदभाववत्तानिश्चयात्मके बाधनिश्चये अयं निश्चयः अप्रमा इति अप्रमात्वज्ञाने सति अनुमितिः स्यात्। अप्रामाण्यज्ञानाभावविशिष्टबाधनिश्चयस्यैव तद्वत्ताबुद्धिं प्रति प्रतिबन्धकतया अप्रमात्व-ज्ञानविशिष्टस्य बाधनिश्चयस्याप्रतिबन्धकत्वात्। तदभाववत्ताज्ञानत्वरूपानुमिति-कारणतावच्छेदकाक्रान्ततया तादृशनिश्चयकालेऽनुमित्यापत्तिरित्यर्थः।

ननु साध्यसंशयेऽप्रमात्वग्रहकालेऽनुमितिवारणाय अप्रामाण्यज्ञानाभावविशिष्ट-तदभाववत्ताज्ञानत्वेनैवानुमितिकारणत्वं वक्तव्यम्, अतोऽप्रामाण्यज्ञानविशिष्टबाध-निश्चयकाले नानुमित्यापत्तिरित्यशंक्याह—अप्रामाण्यग्रहाभावस्येति। तदभाववत्ताज्ञाने-

### गादाधरी

व्याप्तिस्मरणानन्तरं संशयाभावात्। एवमप्रसिद्धसाध्यकस्थले संशयासंभवादनुमित्यनुपपत्तेः, संशयानन्तरजातसिद्ध्यात्मकपरामर्शादनुमित्यापत्तेश्चेति संक्षेपः।

संशयनाशेपि यावन्न निर्णयस्तावत्पर्यन्तं संशययोग्यताया अनपायात्तस्या एव पक्षतात्वं संभवतीति तदनिराकरणे मूलस्य न्यूनता, अतो नापीति मूलमेव संशययोग्यता-

---

### भावबोधिनी

प्रामाण्यग्रहाभावस्याविशेषणत्वे किम् साध्यसंशयेऽप्रामाण्यसंशयसत्त्वेऽनुमितिरापाद्यते? किं वा अप्रामाण्यनिश्चयसत्त्वे? तत्र आद्ये आह—संशय इति। यदि पर्वतो वह्निमान्न वेति साध्यसंशये अयं संशयः अप्रमा न वेति अप्रामाण्यसंशयः स्यात् तदा तस्य अप्रामाण्यसंशयस्य वह्निरूपविषयसंशये पर्यवसन्नतया तत्कालेऽनुमित्युत्पत्तेरिष्टतया अप्रामाण्यज्ञानाभावनिवेशोऽनावश्यक इत्यर्थः। द्वितीय आह— संशये अप्रामाण्यनिश्चयसत्त्व इति। तथा च पर्वतो वह्निमान्न वेति संशयः अप्रमेत्याकारकसाध्यसंशयधर्मिकाप्रामाण्यनिश्चयकाले तु नानुमितिरुत्पद्यत इति तद्वारणाय अप्रामाण्य निश्चयाभावविशिष्टतदभाववत्ताज्ञानमेवानुमितिहेतुरित्यङ्गीकरणीयम्। इत्थं च पर्वतो वह्न्यभाववानितिबाधनिश्चये अप्रमा न वेत्याकारकसंशयदशायामनुमित्यापत्तिः। तस्य बाधनिश्चयस्य अप्रामाण्यनिश्चयाभावविशिष्टतदभाववत्ताज्ञानत्वरूपं यत् कारणतावच्छेदकं तदाक्रान्तत्वात् अप्रामाण्यज्ञानाभावविशिष्टतदभाववत्तानिश्चयत्वरूपं यत् तद्वत्ताबुद्धिप्रतिबन्धकतावच्छेदकं तदनाक्रान्तत्वाच्चेत्यर्थः। इदमत्राकूतम्। संशयनिश्चयसाधारणज्ञानत्वावच्छिन्नस्य कारणत्वे अप्रामाण्यनिश्चयाभावविशिष्टत्वमेव विशेषणम् अप्रमात्वसंशयालीढविषयसंशयहेतुताया इष्टत्वात्। तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वे तु संशयनिश्चयसाधारणाप्रामाण्यज्ञानत्वावच्छिन्नाभाव एव

भावबोधिनी

विशेषणम् अप्रामाण्यसंशयालीढस्यापि बाधनिश्चयस्याप्रतिबन्धकत्वादिति। तथा च संशयनिश्चयसाधारणतदभाववत्ताज्ञानत्वेनानुमितिहेतुत्वमिति पक्षो न युक्त इति स्थितम्। तथा च साध्यसंशयोऽनुमितौ हेतुरेवेति पूर्वपक्षं निगमयति–इति चेदिति।

समाधत्ते—नेत्यादिना। पर्वतो वह्निमानित्याकारकप्रत्यक्षात्मकसाध्यनिश्चयदशायां पर्वते वह्निमनुमिनुयामित्यनुमित्सायां सत्यां पर्वतो वह्निमानित्यनुमितिर्जायते। साध्यसंशयस्यानुमितिहेतुत्वे तु सा न स्यात्, तदा साध्यसंशयाभावादित्यर्थः। ननु साध्यनिश्चयकाले सत्यामप्यनुमित्सायां नानुमितिर्जायते, तथानुभवाभावादित्यत्राह–अनुभवापलाप इति। तदानीमनुमितिर्जायत इति सर्वेषामनुभवोऽस्ति। तस्यानुभवस्य चेदपलापः क्रियते, तर्हि वह्निव्याप्यधूमवानिति परामर्शानन्तरं पर्वतो वह्निमानिति प्रत्यक्षमेव जायते तत एव वह्न्यर्थिनः प्रवृत्तिश्चोपपद्यत इति अनुमित्युत्पत्तिविषयकमनुभवमपलप्य प्रवृत्त्यादेरुपपादानसंभवात् अनुमानप्रामाण्यस्य भङ्गः स्यात्। अनुमित्याख्यविलक्षणप्रमितौ सत्यां हि तत्करणस्य विलक्षणस्य प्रमाणस्यावश्यकतेति भावः। ननु यत्र साध्यनिर्णयानन्तरं अनुमित्सा तत्रापि साध्यसंशयोत्पत्तिपूर्वकमेवानुमितिरुत्पद्यते अतो न साध्यसंशयहेतुतायां व्यतिरेकव्यभिचार इत्यत्राह-पक्षधर्मताप्रत्यक्षेत्यादिना। तथा च यत्रादौ पर्वतो धूमवानित्याकारकं प्रत्यक्षात्मकं पक्षधर्मताज्ञानं ततः धूमो वह्निव्याप्य इत्याकारकं व्याप्तिस्मरणं ततो वह्निव्याप्यधूमवान् पर्वत इत्याकारकः परामर्शः तत्र परामर्शानन्तरं साध्यसंशयः न भवति संशयं प्रति एकतरकोटिव्याप्यवत्ताज्ञानात्मकस्य विशेषदर्शनस्य प्रतिबन्धकत्वात्। परामर्शात् पूर्वमपि न साध्यसंदेहो भवितुमर्हति। व्याप्तिस्मरणविशिष्टपक्षधर्मताज्ञानस्यापि विशेषदर्शनरूपत्वेन प्रतिबन्धकत्वात्। तथा च संशयं विनापि अनुमितेरुत्पत्त्या व्यतिरेकव्यभिचारः सुस्थ इति भावः।

## गादाधरी

निराकरणपरतया व्याचष्टे—संशययोग्यतामिति । साधकबाधकमानपदस्य सिद्धिबाधहेतुरूपयथाश्रुतार्थपरत्वे सर्वदैवानुमित्यनुपपत्तिः, अनुमितिपूर्वं सिद्धिहेतुभूतचक्षुरादेस्सिद्धिहेतुभूतपरामर्शस्य च सर्वत्रैव सत्त्वात्, अतस्तत्पदं सिद्धिबाधपरतया व्याचष्टे—साधकेति। यद्यपि बाधकमानपदस्य बाधजनकसामग्रीपरत्वेपि न क्षतिः, बाधसामग्र्यनन्तरक्षणे कदाप्यनुमितेरनुत्पादात्; तथापि बाधजनकतामात्रेण तत्सामग्रीपरत्वे

---

## भावबोधिनी

साध्यसंशयस्यानुमितिहेतुत्वे दोषान्तरमाह-एवमप्रसिद्धसाध्यक इति । पृथिवीतरेभ्यो भिद्यत इत्यादौ साध्यस्यान्यत्राप्रसिद्धत्वात् साध्यवान्न वेति संशयो न संभवतीत्यर्थः। तत्र पृथिवीतरत् पृथिवीनिष्ठभेदप्रतियोगि न वेत्याकारकसंशयादेवानुमितिरित्यङ्गीकारे त्वाह—संशयानन्तरेति। तथा च यत्रादौ पर्वतो वह्निमान्न वेति संशयः ततः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति। सिद्ध्यात्मकपरामर्शः तत्र तदनन्तरमनुमित्यापत्तिः। साध्यसंशयरूपपक्षतासद्भावादिति भावः। यत्र संशयसिद्धिपरामर्शाः क्रमेण भवन्ति तत्र परामर्शकाले संशयस्य नष्टत्वात् पक्षताविरहात् तदनन्तरं नानुमित्यापत्तिरिति सिद्ध्यात्मकपरामर्शेत्युक्तम्। एवं च साध्यसंशयो नानुमितिहेतुरिति स्थितम्।

यत्र साध्यसंशयानन्तरं लिङ्गदर्शनव्याप्तिस्मरणपरामर्शानुमितयः क्रमेण भवन्ति, तत्रानुमितेः पूर्वक्षणे साध्यसंशयाभावात् संशयं विनाप्यनुमितेरुत्पत्त्या व्यतिरेकव्यभिचारात् साध्यसंशयो न पक्षताविधया हेतुरिति पूर्वमुक्तम्। अत्र केचिदाहुः साध्यसंशययोग्यता पक्षता। संशययोग्यता नाम संशयानन्तरं यावता कालेन निर्णयो न जायते तावान् कालः। स चोक्तस्थले परामर्शपर्यन्तः कालः। तथा च तावत्कालात्मकसंशययोग्यतायाः अनुमितेः पूर्वं सद्भावान्न व्यतिरेकव्यभिचार इति। यदा संशयप्रतिबन्धकयोः साध्यवत्तानिश्चयसाध्याभाववत्तानिश्चययोरभावः संशययोग्यता तेषां पक्षस्यानिराकरणे न्यूनता

गादाधरी

तदवच्छिन्नाभावस्य हेतुता लभ्यते, तत्र चोक्तैवानुपपत्तिः बाधसामग्रीत्वेन तत्परत्वं च विना लक्षणां न निर्वहतीति लक्षणाया आवश्यकत्वे बाध एव लक्षणोचितेत्यभिप्रायेण इदम् ।

ननु पक्षे साध्याभावनिश्चयस्य बाधतया केवलान्वयिनि साध्याभावाप्रसिद्ध्या बाधाप्रसिद्धिरिति तदभावघटितपक्षतावैकल्यम्, अत आह– केवलान्वयिनि चेति । पक्षनिष्ठेति । "साध्ये" इत्यादिः । धीः–निर्णयः । सुलभो बाध इति । तथा च

---

भावबोधिनी

स्यादिति मत्वा नापि साधकबाधकमानाभाव इति मणिग्रन्थः संशययोग्यतायाः पक्षतात्ववादिमतनिराकरणपरतया व्याख्यातो दीधितौ–संशययोग्यतां निरस्यति नापीति ग्रन्थेन । तदाह–संशयनाशेऽपीत्यादिना । मूलस्थं साधकबाधकमानाभावपदं सिद्ध्यभावबाधाभाववत्कालपरम् । अन्यथा कालात्मकयोग्यतानिराकरणालाभात् । अथ वा संशययोग्यता नाम साध्यनिश्चयाभाव–साध्याभावनिश्चयाभाववत्त्वम् इति पक्षे मूलस्य यथाश्रुतपरत्वमेव । साधकबाधकमानपदस्येत्यादि कर्तरिण्वुलन्तौ साधकबाधकशब्दौ सिद्धहेतुबाधहेतू भूतः । सिद्धिः साध्यनिश्चयः, बाधः साध्याभावनिश्चयः । तथा च साध्यनिश्चयहेत्वभावः साध्याभावनिश्चयहेत्वभावश्च पक्षतेति यथाश्रुतमूलाल्लभ्यते । स चार्थोऽनुपपन्नः । अनुमितेः पूर्वं सिद्धिबाधयोर्हेतुभूतस्य चक्षुरादेः अनुमित्यात्मकसिद्धिहेतोः परामर्शस्य च सत्त्वेन तदभावासंभवात् । अतः सिद्धिबाधपरतया साधकबाधकमानपदे व्याख्याते इत्यर्थः । यद्यपीत्यादि । साधकमानपदस्य सिद्धिसामग्रीपरत्वेऽप्यनुमितेः पूर्वमनुमित्यात्मकसिद्धिसामग्रीसद्भावस्यावश्यकत्वात् सिद्धिसामग्र्यभावासंभवरूपा क्षतिररित । अतो बाधकमानपदस्येत्युक्तम् । तथा च बाधकमानपदस्य बाध-

तत्त्वचिन्तामणिः

नाप्युपलक्षणम्; अव्यावर्तकत्वापत्तेः। नापि साधकबाधकमानाभावः, उभयाभावस्य प्रत्येकं सत्त्वेपि सत्त्वात्। नाप्यभावद्वयं तथा, बाधकमानाभावस्य व्यर्थत्वात्। ह्रदादेः पक्षत्वेपि बाधहेत्वसिद्ध्यादेरावश्यकत्वेनानुमित्यनुत्पादात्। नापि साधकमाना-

---

दीधितिः

केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभो बाधः।

---

गादाधरी

तादृशबाधाभावस्यैव पक्षताघटकत्वाज्ञानुपपत्तिरिति भावः। सुलभ इत्यनेन तत्राभावांशे साध्यप्रकारकज्ञानात्मकबाधस्यापि कदाचित्कस्यचित्पुरुषस्य प्रसिद्ध्या तदभावघटितत्वमपि पक्षतायास्सम्भवतीति सूचितम्।

---

भावबोधिनी

सामग्रीपरत्वेऽनुमितेः पूर्वं बाधजनकस्य कस्यचिच्चक्षुरादेः सत्त्वेऽपि बाधजनकसमुदायरूपा सामग्री न संभवति। तत्सामग्रीसत्त्वे साध्याभावनिश्चयरूपबाधस्यैवोत्पत्त्या साध्यनिश्चयात्मकानुमितेरेवासंभवात्। तथा चानुमितेः पूर्वं बाधसामग्र्यभावसंभवात् बाधकपदं यथाश्रुतार्थपरमेवास्त्विति शङ्का। बाधकपदेन बाधजनकत्वेन बाधसामग्र्युच्यते वा बाधसामग्रीत्वेन वा? आद्ये बाधजनकत्वावच्छिन्नाभावः पक्षतेति लभ्यते। तत्र अनुमितेः पूर्वं बाधजनकचक्षुरादेः नियमेन सत्त्वेन बाधजनकत्वावच्छिन्नाभावो न संभवति। द्वितीये बाधसामग्रीत्वावच्छिन्नाभावः पक्षतेति लभ्यते। अनुमितेः पूर्वं यद्यपि स संभवति तथापि

हेतुशक्तस्य पदस्य सामग्रीपरत्वं सामग्र्यां लक्षणां विना न संभवतीति लक्षणाया आवश्यकत्वे लाघवात् बाध एव लक्षणोचिता । तत्संनियोगात् साधकमानपदमपि सिद्धिपरमिति समाधानम् । **बाधजनकतामात्रेणेत्यत्र मात्रपदेन** बाधसामग्रीत्वव्यवच्छेदः । **तदवच्छिन्नाभावस्येति ।** बाधजनकत्वावच्छिन्नभावस्येत्यर्थः । **उक्तैवानुपपत्तिरिति ।** सिद्धिबाधहेतुभूतचक्षुरादेरित्यादिनोक्तानुपपत्तिरित्यर्थः । **साध्य इत्यादिरिति ।** साध्यविशेष्यकपक्षनिष्ठाभावप्रतियोगित्वप्रकारकनिश्चयः केवलान्वयिसाध्यकस्थले बाध इत्याशयः । **अभावांश इति ।** इदं वाच्यत्वाभाववदिति भ्रमात्मकः साध्याभावनिश्चयः बाधः । तस्य भ्रमत्वं च प्रतियोगितासंबन्धेन वाच्यत्वाभाववति अभावे तेन संबन्धेन वाच्यत्वावगाहितयेति भावः ।

उभयाभावस्येत्यादिमणिग्रन्थस्यायमर्थः—

साधकबाधकमानाभावपदेन सिद्धिबाधोभयाभावविवक्षायां यत्र सिद्धिमात्रं बाधमात्रं वा वर्तते तत्रापि एकसत्त्वेऽपि द्वयं नास्तीति न्यायेन सिद्धिबाधोभयाभावसत्त्वात् पक्षताप्रसङ्गात् सिद्धिदशायां बाधदशायां वा अनुमित्यापत्तिः । सिद्ध्यभावबाधाभावोभयविवक्षायां सिद्धिमात्रसत्त्वे बाधमात्रसत्त्वे वा सिद्ध्यभावस्य बाधाभावस्य वा एकतरस्य सत्त्वेऽपि अभावद्वयं नास्तीति पक्षताप्रसङ्गावारणेऽपि सिद्ध्यभावमात्रस्य पक्षतात्वसंभवे पक्षताशरीरे बाधाभावस्य प्रवेशो व्यर्थः । न च साध्याभावनिश्चयरूपबाधदशायामनुमित्यापत्तिरिति वाच्यम् । बाधनिश्चयकाले सिद्ध्यभावरूपपक्षतासत्त्वेऽपि बाधज्ञानस्य हेत्वाभासज्ञानविधयानुमितिप्रतिबन्धकतया तद्दशायामनुमित्यनापत्तेः । ननु तर्हि सिद्ध्यभावमात्रं पक्षतास्त्विति चेन्न । श्रुतिवाक्यजन्यशाब्दबोधात्मकस्यात्मविषयकनिश्चयस्य सत्त्वेऽपि आत्मविषयकानुमित्यात्मक मननोत्पत्त्या तत्र सिद्ध्यभावरूपपक्षताविरहात् । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इति श्रुत्या श्रवणात्मकनिश्चयानन्तरं अनुमित्यात्मकमननस्य संपादनीयत्वाभिधानात् । अपि च प्रत्यक्षदृष्टेऽपि विषयेऽनुमितेर्दर्शनेन तत्र

तत्त्वचिन्तामणिः

भाव:; "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्या समानविषयश्रवणानन्तरं मननबोधनात्, प्रत्यक्षदृष्टेऽप्यनुमानदर्शनात्, एकलिङ्गावगतेपि लिङ्गान्तरेण तदनुमानाच्च। 'श्रोतव्यश्श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः' इति स्मरणात्। अथ

---

दीधितिः

ननु तत्रापि पुनरनुमित्सा ततः परामर्शान्तरं स्मरणात्मकाद्वा परामर्शादनुमितीष्टसाधनत्वाविषयकादनुमित्सा ततोनुमितिरिति फल-

---

गादाधरी

व्याप्तिस्मरणादिना पूर्वानुमित्सानाशस्थले अनुमितिमुपपाद्य सिषाधयिषाविरहेपीत्यादिग्रन्थमवतारयति–नन्विति। तत्रापि–परामर्शपूर्वं अनुमित्सानाशस्थलेपि। पुनरनुमित्सा–परामर्शानन्तरं अनुमित्सान्तरम्। ननु परामर्शानन्तरोत्पन्नेच्छाजनकज्ञानेनेच्छाजननसमकालं परामर्शस्य नाशात् तादृशेच्छातः कथमनुमितिरित्यतः आह-ततः परामर्शान्तरमिति। विनश्यदवस्थापन्नानुमित्सयानुमितिमुपपाद्य अविनश्यदवस्थयाप्यु-

---

भावबोधिनी

सिद्ध्यभावविरहात्। अपि च धूमेन वह्न्यनुमितौ सत्यामपि आलोकेन वह्न्यनुमितिर्दृश्यते। तत्र एकलिङ्गकानुमित्यात्मकासिद्धेरेव सत्त्वेन तदभावरूपपक्षताविरहात् तथा चोक्तोदाहरणैः शाब्दबोधप्रत्यक्षानुमित्यात्मकासिद्धिसत्त्वेऽपि अनुमितेरुदयेन व्यतिरेकव्यभिचारेण सिद्ध्यभावस्य न पक्षतात्वमिति। ह्रदादेः पक्षत्वेऽपि इति। सिद्ध्यभावरूपपक्षतावत्त्वेऽपि इत्यर्थः। ननु बाधस्य हेत्वाभासविधया पृथक्प्रति-

### गादाधरी

पपादयति स्मरणात्मकाद्वेति । चाक्षुषादिपरामर्शस्यानुमित्यंशे इष्टसाधनताप्रकारकसमूहालम्बनरूपत्वं न संभवति, स्वायोग्यमुख्यविशेष्यकज्ञानजनने इन्द्रियस्याऽसामर्थ्यात् अतस्तस्य तथात्वमुपेक्ष्य तन्मूलकव्याप्यवत्पक्षगोचरसंस्कारात्पूर्वानुमित्साजनकेष्टसाधनताज्ञानाहितसंस्कारसहकृतात् समूहालम्बनस्मरणात्मकपरामर्शान्तरस्य अनुसरणम् । स्मरणेत्युपलक्षणम्; तथाविधमानसपरामर्शोपि बोध्यः ।

---

### भावबोधिनी

वन्धकतया तदभावस्य पृथक्कारणत्वकल्पनामपेक्ष्य सिद्धिबाधान्यतराभावत्वेन पक्षताविधया एककारणत्वमेव लघु इत्याशङ्कायामुक्तं— बाधहेत्वसिद्ध्यादेरावश्यकत्वेनेति । सर्वेषामपि वाधासिद्ध्यादीनां पक्षताकुक्षिनिक्षेपेण सिद्धिबाधासिद्धिविरोधाद्यन्यतमाभावत्वेन हेतुत्वप्रसङ्गात् असिद्ध्याद्यभावस्य पृथग्धेतुत्वभङ्गः स्यादिति भावः ।

अथ सिषाधयिषितसाध्यधर्मा धर्मी पक्षः इत्यादिना मणिग्रन्थेन साध्यानुमितीच्छारूपासिषाधयिषा पक्षतेति मतमनूद्य निरस्यते । तथा हि साध्यश्चासौ धर्मश्च साध्यधर्मः सिषाधयिषितः साध्यधर्मो यस्य स सिषाधयिषितसाध्यधर्मा । सन्नन्तधातोः अनुमितीच्छा अर्थः । क्तप्रत्ययस्य विषयतावानर्थः । तस्याभेदेन साध्यधर्मेऽन्वयः । यन्निरूपिताधेयतावत् साध्यमनुमितीच्छाविषयः इति विग्रहवाक्यात् बोधः । अनुमितीच्छाविषयसाध्यनिष्ठाधेयतानिरूपकः समासार्थः । विशेष्यतासंबन्धेन साध्यप्रकारकानुमितीच्छा पक्षतेति पर्यवस्यति । एवं च श्रवणात्मके आत्मविषयकनिश्चयेऽपि आत्मविषयकानुमितीच्छाबलादेव मननात्मिकानुमितिर्जायते । अतस्तत्र सिषाधयिषारूपा पक्षता अक्षता । सिद्धेऽपि

### गादाधरी

ननु कल्पकाभावान्नैतादृशकल्पनासम्भव इत्याशंकां परिहरति- फलबलादिति। सिषाधयिषारूपकारणं विना अनुमित्यात्मककार्यानुदयबलादित्यर्थः। सिषाधयिषाविरहेपीति मूलस्य "अनुमातु" रित्यादिः; तेनेश्वरस्य सिषाधयिषायास्तत्राक्षतत्वेपि न क्षतिः। इच्छारूपपक्षताया आत्मनिष्ठप्रत्यासत्त्यैव हेतुतेत्यभिप्रायेणेदम्।

---

### भावबोधिनी

विषयेऽनुमित्साबलादनुमित्युत्पत्तौ वाचस्पतिवचनमुपष्टम्भकतयोपात्तम्।

अस्य मतस्य खण्डनं कृतं सन्देहवत्परामर्शपूर्वमित्यादिना। यत्र सिषाधयिषासिद्धिलिङ्गदर्शनव्याप्तिस्मरणपरामर्शानुमितयः सिद्धिसिषाधयिषालिङ्गदर्शनव्याप्तिस्मरणपरामर्शानुमितयो वा तत्र परामर्शात् पूर्वमेव सिषाधयिषायाः नाशात् तस्याः नानुमितिहेतुत्वमिति भावः।

ननु सिषाधयिषायोग्यता पक्षता। उक्तस्थले सिषाधयिषः नाशेऽपि सिषाधयिषायोग्यता वर्तते। सिषाधयिषायायोग्यता नाम सिषाधयिषानन्तरं यावता कालेन परामर्शो जायते तावान् कालः विवक्षितः। अतो न दोष इत्याशंक्योक्तम्, योग्यतायाश्च अनिरूपणात् इति। कालविशेषरूपा योग्यता निरूपयितुं न शक्यत इति दीधितिकारैः अग्रे स्पष्टीकरिष्यते। सिषाधयिषाविरहेपीति मणिग्रन्थं अवतारयति दीधितौ- ननु तत्रापीति। यत्र सिषाधयिषासिद्धिलिङ्गदर्शनव्याप्तिस्मरणपरामर्शानुमितयः तत्रापि परामर्शानन्तरं अन्या अनुमित्सा जायते। ततः अनुमितिः। तथा चानुमितेः पूर्वं अनुमित्सारूपसिषाधयिषायाः सत्त्वात् सिषाधयिषायाः अनुमितिहेतुत्वं संभवतीत्याशयः। ननु परामर्शानन्तरं अनुमित्सान्तरं न संभवति।

भावबोधिनी

अनुमित्सां प्रति अनुमितिः मदिष्टसाधनम् इत्याकारकज्ञानस्य हेतुत्वात्। अतः परामर्शानन्तरं अनुमितिविशेष्यकइष्टसाधनत्वप्रकारकज्ञानम्, तदनन्तरं अनुमित्सा, तदनन्तरं अनुमितिः इति वक्तव्यम्। तत्र च अनुमित्साकाले परामर्शस्य नाशात् तदनन्तरक्षणे अनुमितिः न संभवति। तथा च अनुमित्सान्तरकल्पनेऽपि न निर्वाहः इत्यत आह—ततः परामर्शान्तरमिति। ततोऽनुमितिरित्यत्रास्यान्वयः। तथा चानुमितिपूर्वक्षणे सिषाधयिषापरामर्शयोः सत्त्वान्नानुमित्यनुपपत्तिरिति भावः। स्मरणात्मकाद्वा इति। तथा च परामर्शपूर्वं सिषाधयिषानाशस्थले परामर्शः समूहालम्बनात्मकः अङ्गीक्रियते। पर्वतः वह्निव्याप्यधूमवान्, पर्वतो वह्निमानित्यनुमितिः मदिष्टसाधनं च इत्याकारकः परामर्शः अस्य परामर्शस्य अनुमितिविशेष्यकेष्टसाधनताप्रकारकज्ञानरूपत्वात् अनन्तरक्षणे अनुमित्सा भवितुमर्हति। तदनन्तरक्षणे च अनुमितिः। एवं च अनुमितेः पूर्वक्षणे सिषाधयिषापरामर्शयोः द्वयोरपि सत्त्वात् नानुपपत्तिः। एवं कल्पने वीजमाह—फलबलादिति। अनुमित्याख्यकार्यबलादित्यर्थः। कार्यं हि कारणं विना न संभवतीति कारणमंपत्यर्थं पुनरनुमित्सान्तरकल्पनं न दोषावहमिति भावः। सिषाधयिषानाशस्थले उक्तरीत्या सिषाधयिषान्तरेण अनुमितेः निर्वाहेऽपि विनापि सिषाधयिषां घनगर्जितेन मेघानुमितेः उत्पत्त्या व्यतिरेकव्यभिचारात् सिषाधयिषायाः अनुमितिहेतुत्वं न संभवतीति सिषाधयिषाविरहेपीति मणिग्रन्थस्याशयः। गादाधर्यां-परामर्शपूर्वमिति। परामर्शात् पूर्वमित्यर्थः। परामर्शानन्तरोत्पन्नेति। परामर्शाव्यवहितोत्तरक्षणे उत्पन्नं यत् इच्छायाः जनकं ज्ञानम् इष्टसाधनताज्ञानमित्यर्थः। विनश्यदवस्थेति। अनुमितिक्षणे विनश्यन्ती अवस्था स्वरूपं यस्यास्तयेत्यर्थः। अनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वं विनश्यदवस्थत्वम्। स्मरणात्मकादिति परामर्शविशेषणस्य प्रयोजनमाह-चाक्षुषादीपरामर्शस्येति। अनु

## गादाधरी

न च तत्रापि पूर्ववत् फलबलात् अनुमित्सां कल्पयित्वा अनुमितिः शक्योपपत्तिका, तत्र तदभावस्यानुभवसिद्धतया कल्पनाऽसम्भवात् पूर्वं कदापि यस्य मेघानुमितिर्नासीत्तेन तत्रेष्टसाधनताया अगृहीतत्वेन तद्गोचरस्मरणस्य तदनुभावकस्य च तदानीमभावेन तद्गोचरानुभवस्य चासम्भवेन तदनुमित्सासामग्र्या एव दुर्घटत्वाच्च ।

---

## भावबोधिनी

मितिविशेष्यकेष्टसाधनताप्रकारकचाक्षुषपरामर्शो न संभवति । अनुमितेः चक्षुरयोग्यतया तद्विशेष्यकपरामर्शजनकतायाः चक्षुरादौ असंभवात् । इन्द्रियाणां स्वयोग्यविशेष्यकज्ञानजनन एव समर्थत्वात् । अतः समूहालम्बनपरामर्शस्य अनुमितिविशेष्यकेष्टसाधनत्वप्रकारकत्वसंपत्तये स्मरणात्मकत्वमुक्तमित्यर्थः । तस्य तथात्वमिति । परामर्शस्य चाक्षुषादिप्रत्यक्षरूपत्वमुपेक्ष्येत्यर्थः । स्मरणे संस्कारस्य हेतुत्वात् उक्तसमूहालम्बनस्मरणेन साध्यव्याप्यवत्पक्षस्य अनुमितीष्टसाधनत्वस्य च संस्कारं विना भानासंभवात् तदुभयविषयको संस्कारो संपादयति —तन्मूलकव्याप्यवत्पक्षेति । चाक्षुषादिपरामर्शहेतुकः यः व्याप्यवत्पक्षविषयकः संस्कारः तस्मादित्यर्थः । पूर्वानुमित्सेति । पूर्वमुत्पन्ना यानुमित्सा तस्याः जनकं यत् इष्टसाधनताज्ञानं तज्जन्यसंस्कारसहकृतादित्यर्थः । तथाविधमानसेति । साध्यव्याप्यवत्पक्षानुमितीष्टसाधनत्वोभयविषयकमानसपरामर्श इत्यर्थः ।

ननु घनगर्जितेन मेघानुमितिस्थले ईश्वरीयसिषाधयिषायाः सत्त्वात् सिषाधयिषाविरहेऽपीति मूलमसंगतमित्यतः शेषं पूरयति-अनुमातुरित्यादिरिति । तथा च समवायसंबन्धेनानुमितिं प्रति समवायसंबन्धेन सिषाधयिषा हेतुरिति आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभाव इष्यते । ईश्वरस्य सिषाधयिषासत्त्वेऽपि समवायेन मेघानुमितिमति पुरुषे समवायसंबन्धेन सिषाधयिषाविरहात् व्यतिरेकव्यभिचारो

भावबोधिनी

दुर्वार इति मणिकाराशयः। तदाह- इच्छारूपपक्षताया इति। न च तत्रापीति। घनगर्जितेन मेघानुमानस्थलेऽपि अनुमितिरूपकार्यबलात् अनुमित्सारूपं कारणं कल्प्यते। अतो न व्यतिरेकव्यभिचारः इति आशंका। समाधानं तु तत्र अनुमित्साभावस्य अनुभवसिद्धतया अनुमित्सायाः कल्पनं न संभवति। किञ्च यस्य पुरुषस्य नूतनतया घनगर्जनश्रवणेन मेघानुमितिः तस्य अनुमितेः पूर्वं मेघानुमितिर्भवतु इति इच्छा न संभवति। तादृशेच्छां प्रति मेघानुमितिः मदिष्टसाधनम् इत्याकारकस्य इष्टसाधनताज्ञानस्य कारणत्वात् तस्य पुरुषस्य पूर्वं कदापि मेघानुमितेः अजातत्वेन तत्र इष्टसाधनताया अपि अननुभूतत्वेन स्मरणात्मकस्य इष्टसाधनताज्ञानस्यासंभवात्। अनुभवसामग्रीविरहेण अनुभवरूपस्य तस्यासंभवात्। अनुमितिसामग्र्याः अभावात् अनुमित्सा कल्पयितुं न शक्यते। मेघानुमितौ तदेहदाह-तत्र तदभावस्येत्यादिना। अनुमित्सायाः अभावस्येत्यर्थः। तत्रेति। इत्यर्थः। अगृहीतत्वेनेति। अननुभूतत्वेनेत्यर्थः। तद्गोचरस्मरणस्येति। इष्टसाधनत्वानुभवहेतोः इत्यर्थः।

ननु अनुमित्सारूपायाः सिषाधयिषायाः विषयनिष्ठप्रत्यासत्त्या हेतुत्वं अङ्गीक्रियते। विषयतासंबन्धेन अनुमितिं प्रति स्वविषयतावच्छेदकविषयतासंबन्धेन इच्छा हेतुः। वह्निमत्पर्वतविषयकानुमितिः जायताम् इति इच्छायाः आकारः। तन्निरूपिताविषयता अनुमितिनिष्ठा विषयता तदवच्छेदकीभूता विषयता पर्वतनिष्ठा। तथा च स्वविषयतावच्छेदकविषयतासंबन्धेन पर्वतो वह्निमान् इति अनुमितिः वर्तते। अतः कार्यकारणयोः विषये समावेशः। यत्र कार्यकारणयोः संबन्धविशेषाभ्यां विषये समावेशः तत्र विषयनिष्ठा प्रत्यासत्तिः इत्युच्यते। एवं च घनगर्जितेन मेघानुमितिस्थले अनुमितेः पूर्वं अनुमातरि अनुमित्सायाः अभावेऽपि ईश्वरनिष्ठायाः सर्वविषयिण्याः इच्छायाः मेघानुमितिविषयकत्वेन स्वविषयतावच्छेदकविषयतासंबन्धेन मेघे वर्तमानतया तत्र विषयतासंबन्धेन अनुमातृनिष्ठायाः अनुमितेः सत्त्वात् न

तत्त्वचिन्तामणिः

सिषाधयिषितसाध्यधर्मा धर्मी पक्षः, तथा हि; मुमुक्षोश्शब्दादात्मावगमेपि मननस्य मोक्षोपयोगित्वेन सिद्धिविषयानुमितीच्छयात्मानुमानम्; अत एव "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" "न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेनुमातारः" इति वाचस्पतिमिश्रवचनयोरविरोधः अनुमित्सातद्विरहाभ्यां तदुप-

दीधितिः

बलात्कल्पनीयमित्यत आह सिषाधयिषेति । न चानुमितिजनकेच्छैव पक्षता, सा च क्वचित्स्वनिष्ठेव सर्वत्रेश्वरनिष्ठैव सुलभेति-वाच्यम्; तस्या नित्यत्वेन सिद्धौ सत्यामपि पक्षताप्रसङ्गात् । न च तस्यास्तदानीं न तज्जनकत्वम् तद्धि न योग्यता, अनपायात्;

गादाधरी

विषयनिष्ठप्रत्यासत्त्यैवानुमित्साया हेतुता वक्ष्येत्यभिप्रायेण उक्तस्थले पक्षतोपपत्तिं दीधितिकृदाशङ्कते—न चेति । इच्छैव- समानाधिकरणव्यधिकरणसाधारणेच्छामात्रमेव । स्वनिष्ठेव-अनुमातृसमवेतेव । तस्याः ईश्वरेच्छायाः । पक्षताप्रसङ्गादिति ।

भावबोधिनी

अनुमित्सां विना मेघानुमितिः इत्याशयेन शङ्कते दीधितिकारः—न च अनुमितिजनकेच्छैव पक्षतेति । एवकारेण अनुमातृनिष्ठा अनुमातृभिन्ननिष्ठा च सर्वापि इच्छा पक्षतेति अभिप्रेतम् । स्वनिष्ठा इत्यस्य समवायसंबन्धेन अनुमातृपुरुषनिष्ठेत्यर्थः । समाधत्ते—तस्याः नित्यत्वे इत्यादिना । अयमाशयः यत्र अनु-

तत्त्वचिन्तामणिः

पत्तेरिति चेन्न;—सन्देहवत्परामर्शपूर्वं सिषाधयिषाया अभावात् योग्यतायाश्चानिरूपणात् सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात्, स्वकारणाधीनतृतीयलिङ्गपरामर्शबलेन अनपेक्षितानुमानाच्च। उच्यते;—सिषाधयिषाविरहसहकृतसाधकमानाभावो यत्र स पक्षः।

---

गादाधरी

तथा च सिद्ध्यनन्तरमनुमित्यापत्तिरित्यर्थः। तदानीम्—सिद्धिदशायाम्। न तज्जनकत्वमिति। तथाचानुमितिजनकत्वविशिष्टेच्छात्वेनैव हेतुता वाच्या; कारणतावच्छेदकविशिष्टस्य प्राक्सत्त्वमेव फलोपधाने तन्त्रमिति नातिप्रसङ्ग इति भावः।

---

भावबोधिनी

मित्सां विना अनुमितिः तत्र ईश्वरेच्छामादाय पक्षतायाः उपपादने यस्य पुरुषस्य अनुमित्सां विना साध्यनिश्चयः वर्तते तस्यापि ईश्वरेच्छारूपपक्षताबलात् अनुमितिप्रसङ्गः। न च अनुमितिजनकत्वविशिष्टा इच्छैव पक्षता। सिद्धिकाले ईश्वरेच्छायाः न अनुमितिजनकत्वम्। तथा च अनुमितिजनकत्वविशिष्टेच्छारूपपक्षताविरहात् सिद्धिकाले नानुमितिः इति वाच्यम्। अनुमितिजनकत्वस्य अनुमितिजनकतावच्छेदकत्वे आत्माश्रयात्। अपि च अनुमितिजनकत्वम् अनुमितिस्वरूपयोग्यता वा अनुमितिवैशिष्ट्यं वा। आद्ये कारणतावच्छेदकधर्मरूपायाः स्वरूपयोग्यतायाः इच्छायां सर्वदैव सत्त्वात् सिद्धिदशायामपि ईश्वरेच्छाबलात् अनुमितिप्रसङ्गः। द्वितीये अनुमितिविशिष्टा सिषाधयिषा कारणमिति वक्तव्यम् अनुमितेः पूर्वं तु सिषाधयिषायां अनुमितिवैशिष्ट्याभावात् अनुमितिविशिष्ट इच्छा—

## गादाधरी

जनकत्वेन जनकत्वे आत्माश्रयसत्त्वेऽपि स्फुटत्वात्तमुपेक्ष्य दूषणान्तरमाह । तद्धीति । योग्यता । स्वरूपयोग्यता । अनपायादिति । कारणतावच्छेदकधर्मरूपयोग्यतायाः सर्वदैव सत्त्वादित्यर्थः । तदुपधानम् । तद्वैशिष्ट्यम् । तदभावात् ।

---

## भावबोधिनी

रूपपक्षताविरहात् अनुमितेरेव अनुपपत्तिः । किञ्च यत्र परामर्शसिषाधयिषानुमितयः तत्र अनुमितिक्षणे सिषाधयिषाविशिष्टायाः अनुमितेः सत्त्वात् अनुमित्युत्पत्त्यनन्तरमपि अनुमित्यापत्तिः । न च अनुमितिसामग्रीसमवधानविशिष्टेच्छा अनुमितिहेतुः । अनुमित्यव्यवहितप्राक्क्षणे एव तादृशी इच्छा भवति । अतो नातिप्रसङ्ग इति वाच्यम् । परामर्शादिरूपस्य कारणस्यापि पक्षताशरीरे निवेशप्रशङ्गात् परामर्शासत्त्वदशायां परामर्शघटितानुमितिसामग्रीविशिष्टेच्छारूपपक्षताविरहादेव अनुमितिवारणसंभवात् परामर्शादीनां स्वातन्त्र्येण हेतुतायाः भङ्गप्रसङ्गात् । किञ्च अनुमितिसामग्र्याः एव पक्षतात्वसंभवेन इच्छारूपविशेष्यभागस्य वैयर्थ्यं प्रसज्यते । न चेष्टापत्तिः । परामर्शसमवहितसिद्धिदशायाम् अनुमितिसामग्रीविरहात् नानुमितिः इति वक्तव्यम् । तत्र अनुमितिसामग्री कुतो नास्ति इति प्रश्ने समग्र्यन्तर्गतं किञ्चित् कारणं नास्ति इति समाधानं वक्तव्यम् । तादृशकारणं तु सिषाधयिषाविरहविशिष्टसिध्यभाव एव । एवञ्च तस्यैव तक्षतात्वमस्तु । किं पक्षताकुक्षौ कारणान्तरस्य प्रवेशेन इति दीधितिग्रन्थस्य प्रघट्टकार्थः । स्वकारणाधीनतृतीयलिङ्गपरामर्शबलेन अनपेक्षितानुमानदर्शनाच्च इति मणिग्रन्थः । अनेन सिषाधयिषायाः पक्षतात्वे दूषणान्तरमुच्यते । यत्र लिङ्गदर्शनव्याप्तिस्मरणाभ्यां परामर्शः, सिद्धिश्च नास्ति तत्र सिषाधयिषां विनापि अनुमितेः उत्पत्त्या व्यतिरेकव्यभिचारात् सिषाधयिषायाः नानुमितिहेतुत्वम् इति

### तत्त्वचिन्तामणिः

उच्यते-सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्रास्ति स पक्षः । तेन सिषाधयिषाविरहसहकृतं साधकप्रमाणं यत्रास्ति स न पक्षः । यत्र साधकप्रमाणे सति असति वा सिषाधयिषा

---

### दीधितिः

न तदुपधानम्, अनुमितेः पूर्वं तदभावात् । न तत्सामग्रीसमवधानम्, कारणमात्रस्य पक्षताकुक्षिनिक्षेपप्रसङ्गात्, शेषवैयर्थ्यात् । तदानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रयोगिनः कारणस्य वक्तव्य-

---

### गादाधरी

अनुमितिवैशिष्ट्याभावात् । तथा चानुमित्युत्पादनियामिकाया अनुमितिविशिष्टेच्छायाः प्रागसत्त्वादनुमितेरेवानुपपत्तिः । इदमुपलक्षणम्, अनुमित्यनन्तरमनुमित्यापत्तिरपि द्रष्टव्या ।

नन्वनुमितिजनकतावच्छेदका यावन्तो धर्माः प्रत्येकं तदवच्छिन्नकूटविशिष्टत्वरूपतत्सामग्रीसमवधानमेव इच्छाविशेषणं देयं, तच्च कार्याव्यवहितप्राक्क्षण एव, इति नातिप्रसङ्ग इति शङ्कां परिहरति – न तत्सामग्रीति । कारणमात्रस्येति । तथा च

---

### भावबोधिनी

मणिग्रन्थस्यार्थः । स्वकारणं परामर्शकारणं-व्याप्तिस्मरणं पक्षधर्मताज्ञानं च । तदधीनः तृतीयलिङ्गपरामर्शः तद्बलेनेत्यर्थः । आदौ महानसे दृष्टान्ते धूमरूपस्य लिङ्गस्य दर्शनम् । ततः पर्वते धूमदर्शनम्, अनन्तरं वह्निव्याप्यधूमवानिति परामर्शः । अस्य लिङ्गविषयकपरामर्शस्य तृतीयत्वात् तृतीयलिङ्गपरामर्श इति, व्यपदेशः । अनपेक्षितानुमान-

तत्त्वचिन्तामणिः

यत्र वा उभयाभावस्तत्र विशिष्टाभावात् पक्षत्वम्। यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वं, तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम्।

॥ इति चिन्तामणौ पक्षताप्रकारणम् ॥

---

दीधितिः

त्वापाताच्च। सिषाधयिषेति। यत्र अनुमित्सानन्तरं साध्यतद्व्याप्यवत्त्वविशिष्टपक्षस्मरणम्, अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा, अनुमित्सापूर्वकालोत्पन्नविशेषणस्मरणाद्वा अनु-

---

गादाधरी

परामर्शाद्यसत्त्वदशायामीदृशपक्षताविरहादेवानुमितिवारणसम्भवात् परामर्शादीनां हेतुताविलयप्रसङ्ग इति भावः।

ननु सामग्रीसमवहितेच्छात्वेन न पक्षताया हेतुत्वमुपेयते। सामग्रीघटकहेतूनां मिथो विशेष्यविशेषणभावे विनिगमनाविरहात् तेषां स्वतन्त्रकारणतयैवातिप्रसङ्गस्य वारितत्वात्। किन्तु ईश्वरेच्छामादाय सिद्धिकाले पक्षताव्यवहारवारणाय पक्षपदप्रवृत्तिनिमित्तत्वमेव ताद्रूप्येण उपेयते अतो नायं दोष इति दूषणान्तरमाह—शेषेति। अनुमिति-

---

भावबोधिनी

दर्शनादित्यस्य इच्छायां अविषयीभूता या अनुमितिः तस्याः दर्शनात्। यद्वा- इच्छायाम् अविषयस्य साध्यस्य अनुमितेः दर्शनात् इत्यर्थः। सिषाधयिषां विनाप्यनुमितेर्दर्शनादिति यावत्।

### दीधितिः

मित्साकालोत्पन्नेन्द्रियसन्निकर्षसहितात् साध्यतद्व्याप्यविशिष्टपक्ष-प्रत्यक्षं तदनन्तरं च अनुमितिस्तत्र पक्षतासम्पत्तये सहकृतान्तं साधकमानविशेषणम् ।

---

### गादाधरी

सामग्र्या एव पक्षतात्वसम्भवेन इच्छारूपविशेष्यभागनिवेशस्य निष्प्रयोजनकत्वादित्यर्थः। अत्रेष्टापत्तौ दूषणान्तरमाह–तदानीमिति । तदानीम् । परामर्शादिसमवहितसिद्धिदशा-याम्, अन्वयश्चास्य सामग्रीविरहेत्यनेन । वक्तव्यतापातात् । सामग्रीमध्यनिवेशा-पातात् । तथा च तादृशकारणं सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव । एवञ्च तस्यैव पक्षतात्वमस्तु अलङ्कारणान्तरस्य पक्षताकुक्षिनिवेशेनेति सिद्धान्तलक्षण एव पर्यव-सानमिति भावः ।

सिद्धान्तलक्षणे सिद्ध्युत्तरक्षणें सिषाधयिषाधीनानुमितेरुपपादनाय सहकृतान्तं

---

### भावबोधिनी

गाधादर्यां–अनुमितिजनकतावच्छेदका यावन्तो धर्माः इत्यादि । अनुमितिसामग्री अनुमितिकारणसमुदायः = अनुमितिकारणतावच्छेदकावच्छिन्नसमुदायः । अनुमिति-कारणानां कतिपयानां समुदायेन विशिष्टायामिच्छायां सत्यामप्यनुमितेरनुदयेन अनुमितेर्यावन्ति कारणानि भवन्ति तावतां समुदायेन विशिष्टायाः इच्छायाः पक्षतात्वं वक्तव्यम् । तदेवोच्यते गादाधर्याम् । अनुमितिकारणतावच्छेदका यावन्तो धर्मा व्याप्तिज्ञानत्वपरामर्शत्वबाधाभावत्वादयः तावद्धर्मविशिष्टस्यैकस्या-प्रसिद्ध्या प्रत्येकं तदवच्छिन्नेत्युक्तम् ।

सामग्रीघटकहेतूनामिति । सामग्री हि कारणसमुदायः । समुदायत्वं चैक-

भावबोधिनी

विशिष्टापरत्वम्। तथा च अनुमितिकारणपरामर्शविशिष्टव्याप्तिज्ञानविशिष्टबाधाभावविशिष्टा इच्छा इति वा अनुमितिकारणव्याप्तिज्ञानविशिष्टपरामर्शविशिष्टबाधाभावविशिष्टा इति वा निवेश्यत इत्यादिरूपेण विनिगमनाविरहात् तेषां परामर्शादीनां स्वातन्त्र्येणैवानुमितिहेतुत्वम न पक्षतायामन्तर्भावेण। तथा च सामग्रीसमवहितेच्छा न अनुमितिहेतुभूता पक्षता। अपि तु इच्छैव। किन्तु ईश्वरेच्छामादाय सिद्धिकाले पक्षता इति व्यवहारवारणाय सामग्रीसमवहितेच्छायाः पक्षपदप्रवृत्तिनिमित्तत्वमुपेयते। सिद्धिकाले सिद्ध्यभावरूपकारणाभावात् अनुमितिसामग्रीसमवहितेच्छा नास्तीति न पक्षताव्यवहार इति भावः। ताद्रूप्येणेति। सामग्रीसमवहितेच्छात्वेनेत्यर्थः।

अथ सिद्धान्तपक्षता

मणौ सिषाधयिषाविरहविशिष्टेत्यादि। साधकमानशब्दस्य साध्यनिश्चयरूपा सिद्धिरित्यर्थः। सिषाधयिषाविरहविशिष्टा या सिद्धिः तस्या अभावः पक्षता। यत्र सिद्धिरस्ति सिषधयिषा नास्ति, तत्र सिषाधयिषाविरहविशिष्टायाः सिद्धेरेव सत्त्वेन तदभावरूपा पक्षता नास्तीति नानुमितिः। यत्र सिषधयिषा नास्ति सिद्धिश्च नास्ति तत्र सिषाधयिषाविरहरूपविशेषणसत्त्वेपि सिद्धिरूपविशेष्यस्याभावात् विशिष्टाभावरूपपक्षता भवति। यत्र सिद्धिरस्ति सिषाधयिषा चास्ति, तत्र सिद्धिरूपविशेष्यसत्त्वेऽपि सिषाधयिषाविरहरूपविशेषणस्याभावात् विशिष्टाभावरूपा पक्षता। यत्र च सिषाधयिषा अस्ति सिद्धिश्च नास्ति तत्र सिषाधयिषाविरहरूपस्य विशेषणस्य सिद्धिरूपविशेष्यस्य चाभावात् विशेणषविशेष्योभयाभावप्रयुक्तविशिष्टाभावरूपा पक्षता भवति। अतस्तादृशस्थलेष्वनुमितिर्भवति परामर्शादिसत्त्वे। एतादृशी पक्षता यस्यास्ति स पक्षः। स न पक्ष इति। सिषाधयिषाविरहविशिष्टसिद्धेरेव सत्त्वादिति भावः। सत्यसति वेति। सिषाधयिषायां सत्यां सधकप्रमाणे सति

गादाधरी

साधकमानविशेषणमुपात्तम्, तच्च तदैवोपपद्यते यदि सिद्धिसिषाधयिषापरामर्शानां त्रयाणां अनुमित्यव्यवहितप्राक्क्षणेऽवस्थितिः सम्भवति, न चैवमुपपद्यते, आत्मसमवेतयोग्यविशेषगुणानां द्विक्षणमात्रस्थायितया त्रयाणां युगपदनवस्थानात् ।

---

भावबोधिनी

विशेषणाभावात्, असति विशेषणविशेष्योभयाभावात् पक्षतेत्यर्थः । यत्र वा उभयाभाव इति । यत्र सिषाधयिषायाः सिद्धेश्चोभयोरभावः तत्र विशेष्याभावप्रयुक्तः विशिष्टाभावः इति भावः । पक्षतारूपस्यास्य पक्षलक्षणस्य इतरव्यावर्तकत्वं न संभवति सर्वस्यापि पक्षत्वेन पक्षेतरस्याप्रसिद्धेरित्याशङ्क्य नेदं पक्षस्य व्यावर्तकं लक्षणम् अपि तु पक्षपदव्यवहारनिमित्तभूतं व्यावहारिकं लक्षणमिति समाधत्ते-यद्यपीत्यादिना ।

'यत्रानुमित्सानन्तरम्' इत्यादिदीधितिग्रन्थेन समूहालम्बनसिद्ध्यात्मकपरामर्शस्थले सिषाधयिषविरहविशिष्टत्वस्य सिद्धिविशेषणस्य प्रयोजनमुक्तम् । तेन सिद्ध्यनात्मकासमूहालम्बनपरामर्शस्थले तस्य विशेषणस्य प्रयोजनं न संघटत इति लभ्यते । तदुपपादयति गादाधर्याम् सिद्धान्तलक्षण इत्यादिना । सिद्ध्यभावमात्रस्य पक्षतात्वे यत्र सिद्धिरस्ति सिषाधयिषा चास्ति । तत्र पक्षता न स्यादिति सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेत्युक्तम् । तत्र सिषाधयिषाविशिष्टा सिद्धिरेवास्ति न तु सिषाधयिषाविरहविशिष्टा सिद्धिरिति सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपा पक्षता अक्षतैवेति वक्तव्यम् एतत्तु तदैव वक्तुं शक्यते यदि अनुमित्यव्यवहितपूर्वक्षणे सिद्धिसिषाधयिषापरामर्शानां त्रयाणामवस्थितिः स्यात् नान्यथा । तथा हि यत्र सिद्धिसिषाधयिषापरामर्शाः क्रमेण भवन्ति ततोऽनुमितिः तत्र परामर्शक्षणे सिद्धेर्नाशात् सिद्ध्यभावरूपा पक्षतास्तीति सिषाधयिषाविरहविशिष्टत्वरूपं विशेषणं व्यर्थम् । यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः क्रमेण भवन्ति तत्र

## गादाधरी

न च यत्रापेक्षाबुद्धयात्मकस्य परामर्शस्य साध्यनिश्चयस्य वा प्रथममुत्पादस्तत्रैव तृतीयक्षणे त्रयाणामेवावस्थानं सम्भवति इति वाच्यम् । अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वमङ्गीकुर्वाणैस्तदव्यवहितोत्तरक्षणे तदधिकरणे विशेषगुणोत्पादानभ्युपगमात् । अन्यथा स्वसमानाधिकरणस्वनन्तरोत्पन्नविशेषगुणात्मकनाशकबलात् तस्या अपि तृतीयक्षणे विनाशापत्तेरित्याशङ्कापरिजिहीर्षया सिद्धयात्मकसमूहालम्बनपरामर्शस्थले-

---

## भावबोधिनी

परामर्शक्षणे सिषाधयिषायाः नाशात् सिषाधयिषाविरहविशिष्टसिद्धेरेव सत्त्वेन विशिष्टाभावरूपपक्षतायाः अनिर्वाहात् विशेषणे दत्तेऽपि नेष्टसिद्धिः । यत्र परामर्शसिषाधयिषासिद्धयनुमितयः यत्र वा परामर्शसिद्धिसिषाधयिषानुमितयः तत्रानुमितिपूर्वक्षणे पक्षतारूपकारणसत्त्वेऽपि परामर्शविरहात् कथमनुमितिर्भविष्यति । न चैतेषु कश्चित् गुणः त्रिक्षणस्थायी, आत्मविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वेन द्विक्षणमात्रस्थायित्वाभ्युपगमात् । न च आदौ अपेक्षाबुद्धिरूपः परामर्शो वा सिद्धिर्वा अपेक्षाबुद्धयात्मिका जायते, ततः सिद्धिसिषाधयिषयोर्वा परामर्शसिषाधयिषयोर्वा उत्पादक्रमेण अनुमितिर्भवति, तत्रानुमितिपूर्वक्षणे सिद्धिसिषाधयिषापरामर्शानां स्थितिर्भवतीति तत्रैव सिषाधयिषाविरहविशिष्टत्वस्य प्रयोजनमिति वाच्यम् । अपेक्षाबुद्धिः त्रिक्षणावस्थायिनीति वदद्भिः तदव्यवहितोत्तरक्षणे आत्मनि विशेषगुणान्तरोत्पत्तिर्नाङ्गीक्रियते । एवं च प्रथमम् अपेक्षाबुद्धिरूपः परामर्शः तदनन्तरक्षणे न कोऽपि गुणः जायते, ततः क्रमेण सिद्धिसिषाधयिषानुमितयो जायन्ते इति वक्तव्यम् । तत्रानुमितिपूर्वक्षणे अपेक्षाबुद्धिरूपस्यापि परामर्शस्य नाशात् तदभावादेव नानुमितिः । अपेक्षाबुद्धयनन्तरक्षणे गुणान्तरोत्पत्तौ तेन तृतीयक्षणेऽपेक्षाबुद्धिर्नाश एव स्यादिति

भावबोधिनी

त्रिक्षणस्थायित्वं तस्या भज्येतेति। तथा चासमूहालम्बनस्थले प्रयोजनं न निर्वहतीत्याशयः। तदधिकारण इति। अपेक्षाबुद्ध्यधिकरणे आत्मनीत्यर्थः। स्वसामानाधिकरणेत्यादि। प्रतियोगितासंबन्धेन योग्यविभुविशेषणनाशं प्रति स्वसामानाधिकरण्यस्वाव्यवहितपूर्ववृत्तित्वोभयसंबन्धेन योग्यविभुविशेषगुणः कारणमिति कार्यकारणभावोऽत्राभिप्रेतः। आत्मनिष्ठस्य ज्ञानस्य अनन्तरोत्पन्नया इच्छया ज्ञानान्तरेण वा नाशः भवति। प्रतियोगितासंबन्धेन ज्ञाननाशः ज्ञानेऽस्ति, तत्रैव अनन्तरोत्पन्ना इच्छा स्वाव्यवहितपूर्वत्वस्वसामानाधिकरण्योभयसंबन्धेनास्ति। ज्ञानस्य इच्छाव्यवहितपूर्ववृत्तित्वात् इच्छाधिकरणात्मवृत्तित्वाच्च। कार्यतावच्छेदककोटौ विशेषणगुणे योग्यत्वविशेषणानुपादाने प्रायश्चित्तजन्यादृष्टनाशेऽन्वयव्यभिचारः तथा हि अदृष्टोत्पत्त्यव्यवहितोत्तरक्षणे उत्पन्नमपि ज्ञानादिकं नादृष्टनाशकम्, किन्तु प्रायश्चित्तमेव। तथा चादृष्टे स्वाव्यवहितपूर्वत्वस्वसामानाधिकरण्योभयसंबन्धेन-ज्ञानादिरूपविशेषगुणसत्त्वेऽपि प्रतियोगितासंबन्धेन नाशरूपकार्यानुत्पत्त्या अन्वयव्यभिचारः। अतः योग्यत्वनिवेशः। तन्निवेशे च अदृष्टस्य प्रत्यक्षायोग्यतया अदृष्टनाशस्य योग्यविशेषगुणनाशत्वरूपकार्यतावच्छेदकानाक्रान्ततया तदनुत्पत्तावपि न क्षतिः। कारणसत्त्वे कार्यतावच्छेदकावच्छिन्नानुत्पत्तावेवान्वयव्यभिचारात्। कार्यतावच्छेदकशरीरे विभु इति विशेषणानुपादाने रूपनाशे व्यतिरेकव्यभिचारः। घटादौ रूपोत्पत्त्यनन्तरक्षणे आत्मादौ विभुपदार्थे योग्यस्य ज्ञानादिविशेषगुणस्योत्पत्तावपि स स्वसामानाधिकरण्यसंबन्धेन रूपे नास्ति। तथा च तादृशसंबन्धेन योग्यविशेषगुणरूपनाशस्य रूपादौ सत्त्वेन व्यतिरेकव्यभिचारः। विभुपदोपादेन च रूपस्य विभुविशेषगुणत्वाभावेन रूपनाशे विशेषगुणनाशत्वरूपकार्यतावच्छेदकानाक्रान्तत्वात्, कारणं विना कार्यतावच्छेदकाक्रान्तोत्पत्तावेव व्यतिरेकव्यभिचारप्रसक्तेर्न क्षतिः। तत्रैव विशेषपदानुपादाने योग्यविभुगुणस्य आत्मघटसंयोगस्य नाशे

भावबोधिनी

तदनन्तरोत्पन्नेन ज्ञानादिना अजन्ये व्यतिरेकव्यभिचारः। कारणतावच्छेदकशरीरे योग्यत्वस्यानुपादाने अपेक्षाबुद्ध्यनन्तरोत्पन्नेन अदृष्टेन विभ्वात्मविशेषगुणेन तृतीयक्षणे अपेक्षाबुद्धेर्नाशानुत्पत्त्या अन्वयव्यभिचारः। एवं, विशेषत्वानुपादाने अपेक्षाबुद्ध्यनन्तरक्षणोत्पन्नेन आत्मघटसंयोगादिना तृतीयक्षणे अपेक्षाबुद्धिनाशानुत्पत्त्या अन्वयव्यभिचारः। अतः योग्यत्वविशेषत्वयोरुपादानम्। अदृष्टस्य योग्यत्वविरहात् संयोगादेः विशेषगुणत्वविरहाच्च कारणतावच्छेदकानाक्रान्ततया नान्वयव्यभिचारः। योग्यविशेषगुणस्य रूपादेः स्वसामानाधिकरण्यसंबन्धेनाभावेऽपि प्रतियोगितासंबन्धेन ज्ञानादौ नाशोत्पत्त्या व्यतिरेकव्यभिचारस्य वारणाय कारणतावच्छेदकशरीरे विभ्विति विशेषणम्। स्वाव्यवहितपूर्वत्वसंबन्धेन ज्ञानानन्तरोत्पन्नशब्दादेः ज्ञाने सत्त्वेऽपि तत्र प्रतियोगितासंबन्धेन नाशानुत्पत्त्या अन्वयव्यभिचारवारणाय सामानाधिकरण्यसंबन्धनिवेशः। ज्ञाने सामानाधिकरण्यसंबन्धेन ज्ञानाव्यवहितपूर्वोत्पन्नेच्छायाः सत्त्वेऽपि नाशानुत्पत्त्या अन्वयव्यभिचारवारणाय स्वाव्यवहितपूर्वत्वसंबन्धनिवेश इति।

दीधितौ यत्रानुमित्सानन्तरम् इत्यादिना त्रिषु स्थलेषु सिद्धौ सिषाधयिषाविरहविशिष्टत्वविशेषणस्य प्रयोजनमुच्यते। आदौ पर्वते वह्निमनुमिनुयामित्याकारिका अनुमित्सा, ततः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च इत्याकारकं सिद्धिरूपं परामर्शरूपं च स्मरणम्, तदनन्तरम् अनुमितिरिति प्रथमं स्थलम्। अत्र सिद्ध्यभावरूपा पक्षता न संभवति अनुमितेः पूर्वक्षणे सिद्धेरेव सत्त्वात्। सिद्धौ सिषाधयिषाविरहविशिष्टत्वनिवेशे तु अनुमितेः पूर्वं सिषाधयिषाया अपि सत्त्वेन सिषाधयिषाविरहरूपविशेषणाभावात् तद्विशिष्टसिद्ध्यभावरूपा पक्षता निर्वहति। अत्र सिद्ध्यात्मकप्रत्यक्षरूपपरामर्शः अनुमित्सोत्तरं न संभवति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया विशेषणज्ञानानन्तरमेव विशिष्टप्रत्यक्षस्य वक्तव्यतया प्रत्यक्ष-

गादाधरी

तादृशविशेषणप्रयोजनं दर्शयति- यत्रेत्यादिना । अनुमित्साव्यवहितोत्तरक्षणे विशिष्ट-पक्षप्रत्यक्षं न संभवति, इच्छोत्पत्तिकाले ज्ञानानुत्पत्त्या विशेषणज्ञानघटितसामग्रीविरहात् इच्छापूर्वक्षणे तादृशसामग्रीसमवधाने प्रत्यक्षसामग्र्या इच्छासामग्र्यपेक्षया बलवत्त्वेन तस्या एवोत्पादासम्भव इत्यतो विशिष्टस्मरणानुधावनम् । न्यूनताभङ्गाय परामर्शं पूर्वोत्पन्नेच्छास्थले प्रयोजनमुक्त्वा तदनन्तरोत्पन्नेच्छास्थले तद्दर्शयति । – अनुमितीति

---

भावबोधिनी

काले सिषाधयिषायाः नाशेन सिषाधयिषाविरहविशिष्टसिद्धेरेव सत्त्वेन तदभाव-रूपपक्षताया अनिर्वाहेण विशेषणवैयर्थ्यात् । न च आदौ विशेषणज्ञानम्, ततोऽ-नुमित्सा ततः सिद्ध्यात्मकपरामर्शरूपं प्रत्यक्षं ततोऽनुमितिरिति विशेषणसार्थक्य-मिति वाच्यम् । अनुमित्सापूर्वक्षणे विशेषणज्ञानादिघटितप्रत्यक्षसामग्रीसत्त्वे इच्छा-सामग्र्यपेक्षया प्रत्यक्षसामग्र्याः बलवत्त्वेन प्रत्यक्षस्यैवोत्पत्त्या इच्छाया उत्पत्तिरेव न स्यादिति । न चानुमित्सा विशेषणज्ञानं च युगपत् ततो विशिष्टप्रत्यक्षं ततोऽ-नुमितिरिति वाच्यम् । ज्ञानेच्छयोर्यौगपद्यानङ्गीकारात् इत्यालोच्य स्मरणात्मक-समूहालम्बनपरामर्श उक्तः । स्मरणस्थले विशेषणस्मरणपूर्वकमेव विशिष्टस्मरणमिति निर्बन्धो नास्तीत्याशयः । अथ वा इच्छापूर्वक्षणे विशेषणस्मरणसत्त्वेऽपि विशिष्ट-स्मरणसामग्र्यपेक्षया इच्छासामग्र्या बलवत्त्वमित्याशयः ।

आदौ अनुमितिर्मदिष्टसाधनम् पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्या-कारकं समूहालम्बनस्मरणम्, ततः अनुमित्सा ततोऽनुमितिरिति द्वितीयं स्थलम् । अत्रानुमित्साक्षणे सिद्धेरेव सत्त्वात् सिद्ध्यभावरूपपक्षता न निर्वहति । सिद्धौ सिषाधयिषाविरहविशिष्टत्वे निविष्टे तु विशेषणाभावप्रयुक्तविशिष्टाभावरूपा पक्षता निर्वहति । पूर्वस्थले अनुमित्सानन्तरं सिद्ध्यात्मकपरामर्शः । अत्र तु सिद्ध्या-

गादाधरी

यत्रेत्यनुषज्यते । इच्छासामग्रीसम्पत्तयेऽनुमितीष्टसाधनताविषयकेति । तादृशस्मरणात् । साध्यतद्व्याप्यविशिष्टपक्षस्मरणात । पूर्वोक्तयुक्त्या चाक्षुषादिपरामर्शस्यानुमिताविष्ट-साधनतागाहित्वासम्भवात्, यत्र परामर्शाव्यवहितपूर्वक्षणे इष्टसाधनताज्ञानं तत्र तत्पूर्वक्षण एव फलेच्छासम्भवेन तस्याः परामर्शोत्पत्तिसमये नाशात् तदुत्तरमनुमित्साया असम्भवेनेष्टसाधनताविषयकपरामर्शस्याऽऽवश्यकत्वात् स्मरणानुधावनम् । न्यूनता-

---

भावबोधिनी

त्मकपरामर्शानन्तरमनुमित्सेति विशेषः । अत्र परामर्शस्य चाक्षुषादिप्रत्यक्षरूपत्वे तस्य अनुमितीष्टसाधनताविषयकत्वं न संभवति, स्वायोग्यमुख्यविशेष्यकज्ञाने चक्षु-रादेरसामर्थ्यात् । अतः आदाविष्टसाधनताज्ञानं ततः परामर्शः ततोऽनुमितीच्छा ततोऽनुमितिरिति क्रमो वाच्यः । तत्रापि अनुमित्सारूपोपायेच्छां प्रति फले-च्छायाः कारणत्वात् इष्टसाधनताज्ञानात् पूर्वं फलेच्छेत्युक्तौ तस्याः परामर्शकाले नाशात् अनन्तरमनुमित्सा न स्यात् । इष्टसाधनताज्ञानानन्तरं फलेच्छेत्युक्तौ परामर्शकाले इष्टसाधनताज्ञाननाशात् तदनन्तरमनुमित्सा न स्यात् । अतः परामर्शस्यैवेष्टसाधनताविषयकत्वं वक्तव्यम् । तच्च प्रत्यक्षरूपस्य परामर्शस्य न संभवति इति स्मरणरूपत्वमुक्तम् । तथा चादौ फलेच्छा ततः अनुमितिर्मदि-ष्टसाधनम् पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकः स्मरणरूपः समूहालम्बना-त्मकः परामर्शः ततोऽनुमितिरिति क्रमोऽत्रानुसन्धेयः । फलेच्छा नामात्र साध्य-संशयाहितदुःखनिवृत्तीच्छा साध्यनिश्चयाधीनसुखेच्छा वा ।

ज्ञानेच्छयोर्युगपदुत्पत्तिनये प्रत्यक्षात्मकपरामर्शस्थलेऽपि प्रयोजनकथनाय तृतीयस्थलानुधावनम् ' आदौ फलेच्छा अनुमितिर्मदिष्टसाधनमिति इष्टसाधनताज्ञानं

गादाधरी

परिहाराय प्रत्यक्षात्मकपरामर्शस्थले प्रयोजनमाह अनुमित्सापूर्वेति । अत्रापि यत्रेत्यनुषज्यते । प्रत्यक्षात्मकधूमत्वादिविशेषणज्ञानस्थले तज्जनकसन्निकर्षादितस्तदुत्तरक्षणे

भावबोधिनी

च, ततः साध्यतद्व्याप्यादिरूपविशेषणस्मरणम्, ततोऽनुमित्सा इन्द्रियसन्निकर्षश्च ततः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति प्रत्यक्षम्, तदनन्तरमनुमितिरिति-क्रमः। अत्र सिद्धेरेव सत्त्वेन सिद्धयभावरूपा पक्षता न निर्वहतीति सिद्धौ सिषाधयिषाविरहविशिष्टत्वरूपविशेषणदानम्। विशेषणप्रत्यक्षमुपेक्ष्य विशेषणस्मरण-कथनं तु विशेषणप्रत्यक्षजनकसन्निकर्षात् अनन्तरक्षणे विशिष्टप्रत्यक्षमेव स्यान्न त्विच्छेत्याशयेन ।

गादाधर्यां–तस्या एवेति । इच्छाया एवेत्यर्थः । इच्छासामग्रीसंपत्तय इति । इच्छायाः हेतुभूतं यदिष्टसाधनताज्ञानं तत्संपत्तय इत्यर्थः । पूर्वोक्तयुक्त्येति । चक्षुरादेः स्वायौग्यमुख्यविशेष्यकज्ञानाजनकत्वमिति युक्त्येत्यर्थः । तत्पूर्वक्षण इति । इष्टसाधनताज्ञानात् पूर्वक्षणे इत्यर्थः । फलेच्छासंभवेनेति । उपायेच्छां प्रति उपायविशेष्यकेष्टसाधनताप्रकारकज्ञानवत् फलेच्छाया अपि कारणत्वादिति भावः । न त्विच्छेति । ननु विशेषणप्रत्यक्षस्य अनुमितीष्टसाधनताविषयकत्वं न संभवति, उक्तयुक्तेः । तत्पूर्वक्षणे इष्टसाधनताज्ञानोक्तौ च तत्पूर्वक्षणे फलेच्छेति विशेष-णप्रत्यक्षदशायां नेच्छासमग्रीति तत एवेच्छावारणाय प्रत्यक्षसामग्र्या बलवत्त्वकथन-मयुक्तम् । इच्छासामग्र्यभावान्नेच्छेति तु न वक्तुं शक्यम् । विनश्यदवस्थसंनि-कर्षादित्यनेन प्रत्यक्षसामग्रीविगमप्रदर्शनानुपपत्तेरिति चेत्–न । ज्ञानेच्छयोर्यौग-पद्यमभिप्रेत्य तथोक्तेः । यद्वा अनुमितौ सुखत्वभ्रमाधीनेच्छा धर्तव्या । सन्निकर्ष-सामान्याधीनविशेषणप्रत्यक्षस्थलपरित्यागात् प्रयासः ।

## दीधितिः

सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिका अनुमितिविषयिणीच्छा। यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वे अनुमित्यनुत्पादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादाच्च।

---

## गादाधरी

विशिष्टप्रत्यक्षमेव भविष्यति, न त्विच्छा, विनश्यदवस्थसन्निकर्षाद्विशेषणप्रत्यक्षानुधावने च प्रयासगौरवमतो विशेषणस्मरणपर्यन्तानुधावनम्। अनुमित्सापूर्वकाले परामर्शजनकसन्निकर्षसत्त्वे तस्या एव अनुपपत्तिरतोऽनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहितादिति। सहकृतान्तम्। सहकृतान्तभागोपस्थाप्यसिषाधयिषाविरहवैशिष्ट्यम्। तस्य अभावविशेषणत्वे सिषाधयिषादशायां तदभावविशिष्टस्य सिद्ध्यभावस्यासम्भवात् सिद्धौ सत्त्यामसत्त्याञ्चानुमित्यनुपपत्तिः अतः साधकमानविशेषणमिति।

---

## भावबोधिनी

'सिषाधयिषा च' इत्यादिदीधितिग्रन्थमवतारयति—सिषाधयिषापदस्येत्यादिना। साधयितुमिच्छा सिषाधयिषेति व्युत्पत्त्या साध्यनिश्चयरूपसिद्धिविषयकेच्छासामान्यं सिषाधयिषापदार्थः। तस्यार्थस्य प्रकृते विवक्षायां यत्र सिद्ध्यात्मकपरामर्शदशायां पर्वते वह्निप्रत्यक्षं जायतामित्याकारिका प्रत्यक्षत्वप्रकारिका इच्छा तस्याः साध्यनिश्चयविषयकेच्छारूपतया उत्तेजकत्वापत्त्या तदनन्तरमनुमित्यापत्तिः। इयं चापत्तिः प्रत्यक्षसामग्र्यसत्त्वे। तत्सत्त्वे तु समानविषये प्रत्यक्षसामग्र्याः बलवत्त्वेन प्रत्यक्षस्यैव संभवेन अनुमित्यापत्त्यसंभवः। न च

## गादाधरी

सिषाधयिषापदस्य सिद्धीच्छासामान्यपरत्वे प्रत्यक्षत्वादिप्रकारकेच्छाबला-दसत्त्यां प्रत्यक्षादिसामग्र्यां सिद्धिदशायामनुमित्यापत्तिः अनुमितिगोचरेच्छापरत्वे यत्कि-ञ्चिद्गोचरं ज्ञानं जायतामितीच्छाबलात् सिद्धिकालेऽनुमित्यापत्तिः। न चानुमित्युत्पत्त्यापि

---

## भावबोधिनी

सिषाधयिषापदस्य अनुमितिविषयकेच्छेत्यर्थः। प्रत्यक्षं जायतामितीच्छायाः प्रत्यक्ष-विषयकत्वेनानुमितिविषयकत्वाभावान्नोत्तेजकत्वमिति वाच्यम्। तथापि सिद्धिसत्त्वे यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छाबलात् अनुमित्यापत्तेः। तस्या ज्ञानत्वेन रूपेणानुमितिविषयकतया उत्तेजकत्वात्। न च तस्या उत्तेजकत्वमिष्टमेवेति तद्दशायामनुमित्यापत्तिरिष्टैवेति वाच्यम्। प्रकृतानुमित्युत्पत्त्यैव यादृशेच्छायाः विषयसिद्धिस्तस्या एवोत्तेजकत्वात्। यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छायाः अनुमित्यतिरिक्तज्ञानोत्पत्त्यापि विषयसिद्ध्या उत्तेजकत्वविरहेणेष्टापत्त्ययोगात्। अतः सिषाधयिषापदार्थं प्रकारान्तरेणाह दीधितिकार इति अवतरणग्रन्थार्थः। उपस्थित-पदार्थविषयकचाक्षुषादिकं सन्निकर्षविरहे न संभवतीत्याशयेन—अन्ततः उपस्थित-पतार्थगोचरमानसज्ञानेनापीत्युक्तम्। अकिंचित्करत्वादिति। अनुत्तेजकत्वादित्यर्थः।

घटविशिष्टेत्यादि। तथा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिका अनु मितिविशेष्यिका इच्छा सिषाधयिषापदार्थः। सैव सिद्धिसत्त्वेऽनुमितिप्रयोजकतया उत्तेजिका। वह्निविशिष्टपर्वतविषयकप्रत्यक्षं जायतामितीच्छायाः तत्साध्यविशिष्ट-तत्पक्षविषयकत्वकारकत्वेऽपि अनुमितिविशेष्यकत्वं नास्ति, प्रत्यक्षविशेष्यकत्वादिति तस्या नोत्तेजकत्वप्रसङ्गः। यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छायाः ज्ञानत्वेन-रूपेण अनुमितिविशेष्यकत्वेऽपि यत्किंचिद्विषयकत्वप्रकारकत्वमेवास्ति, न तत्साध्य-विशिष्टतत्पक्षविषयकत्वप्रकारकत्वमिति न तस्या उत्तेजकत्वापत्तिः। वह्निविशिष्ट-

## गादाधरी

तादृशेच्छाविषयसिद्धेस्तत्रानुमितिरिष्टैवेति वाच्यम्। प्रकृतानुमित्युत्पत्त्यैव यादृशेच्छाया विषयसिद्धिस्तादृशेच्छासत्त्वे एव सिद्धिकालेऽनुमितेरानुभविकत्वात् उक्तेच्छायाश्चान्तत उपस्थितपदार्थगोचरमानसज्ञानेनापि विषयसिद्ध्या अकिञ्चित्करत्वादित्यतः सिषाधयिषापदार्थं व्याचष्टे—सिषाधयिषा चेति।

---

## भावबोधिनी

पर्वतविषयकानुमितीर्जायतामितीच्छायास्तु तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वम् अनुमितिविशेष्यकत्वं चास्तीति तस्या उत्तेजकत्वम्।

अत्र तत्साध्यविशिष्टेत्यनुक्तौ तत्पक्षविषयकत्वप्रकारकानुमितिविशेष्यकेच्छा सिषाधयिषेति स्यात्। तथा सति पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति सिद्ध्यात्मकपरामर्शदशायां घटविशिष्टपर्वतविषयकानुमितिर्जायतामितीच्छासत्त्वे पर्वतो वह्निमानित्यनुमित्यापत्तिः। तस्या इच्छायाः पर्वतरूपतत्पक्षविषयकत्वप्रकारकानुमितिविशेष्यकतयोत्तेजकत्वात्। अतस्तद्वारणाय तत्साध्यविशिष्टेत्युक्तम्। प्रकृतसाध्यतावच्छेदकसंबन्धेन प्रकृतसाध्यतावच्छेदकावच्छिन्नविशिष्टेति तदर्थः। कालिकसंबन्धेन वह्निमत्पर्वतविषयकानुमितिर्जायतामितीच्छाया अपि साध्यविशिष्टपक्षविषयकत्वप्रकारकत्वेन सिद्ध्यात्मकपरामर्शसत्त्वे तादृशेच्छाबलात् पर्वतो वह्निमानित्यनुमितिवारणाय तत्साध्यतावच्छेनकसंबन्धेन इत्युक्तम्। संयोगसंबन्धेन द्रव्यविशिष्टपर्वतविषयकानुमितिर्जायतामितीच्छाया अपि साध्यतावच्छेदकसंबन्धेन द्रव्यत्वेन वह्निरूपसाध्यविशिष्टपक्षविषयकत्वप्रकारकत्वात् तादृशेच्छायाः सिद्धिसत्त्वे उत्तेजकत्ववारणाय तत्साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टेत्युक्तम्। उक्तेच्छायाः द्रव्यत्वावच्छिन्नवह्निविषयकत्वेऽपि वह्नित्वावच्छिन्नवह्निविषयकत्वाभावान्नोत्तेजकत्वापत्तिः।

तत्साध्यतावच्छेदकसंबन्धेन तत्साध्यतावच्छेदकावच्छिन्नतत्साध्यविशिष्ट-

### गादाधरी

घटविशिष्टपर्वतविषयकानुमितिर्जायतामित्येतादृशेच्छासत्त्वे सिद्धिसत्त्वे वह्न्यनुमित्यनुत्पादात्तत्साध्यविशिष्टेति। तत्संबन्धेन तत्साध्यतावच्छेदकावच्छिन्नविशिष्टेत्यर्थः। तेन कालिकसंबन्धेन वह्निविशिष्टपर्वतविषयकानुमितिर्जायतां द्रव्यत्वावच्छिन्नविशिष्टपर्वतविषयकानुमितिर्जायतामित्येतादृशेच्छासत्त्वेऽपि सिद्धिकाले संयोगादिना न वह्नित्वावच्छिन्नस्यानुमितिः। वह्निविशिष्टमहानसविषयकानुमितिर्जायतां वह्निविशिष्ट-

---

### भावबोधिनी

विषयकत्वप्रकारकानुमितिविशेष्यकेच्छायाः सिषाधयिषापदार्थत्वे संयोगसंबन्धेन वह्निविशिष्टमहानसविषयकानुमितिर्जायतामितीच्छाबलात् पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति सिद्ध्यात्मकपरामर्शदशायां पर्वतो वह्निमानित्यनुमित्यापत्तिः। तस्यां अपि तत्साध्यवह्निविशिष्टविषयकत्वप्रकारकत्वेनोत्तेजकत्वप्रसक्तेः। अतस्तद्वारणाय तत्पक्षविषयकत्वनिवेशः। उक्तेच्छायाः महानसविषयकत्वप्रकारकत्वेऽपि पक्षभूतपर्वतविषयकत्वप्रकारकत्वाभावात् नोत्तेजकत्वापत्तिः। तत्पक्षपदं तत्पक्षतावच्छेदकावच्छिन्नपरम्। अन्यथा संयोगसंबन्धेन वह्निविशिष्टद्रव्यविषयकानुमितिर्जायतामितीच्छायां अपि द्रव्यत्वेन पर्वतविषयकत्वात् तद्बलात् सिद्ध्यात्मकपरामर्शदशायां पर्वतो वह्निमानित्यनुमित्यापत्तेः। तत्पक्षतावच्छेदकावच्छिन्नेत्युक्तौ तु पर्वतत्वावच्छिन्नविषयकत्वप्रकारकत्वं तस्याः नास्तीति न दोषः।

न च यत्किंचिद्गोचरं ज्ञानमित्यादि। अयमत्र शङ्काग्रन्थभावः—यत्र आलोकवान् पर्वतः इत्यनुमितेः वह्निमान् पर्वत इत्यनुमितेश्च हेतुभूतः परामर्शः वर्तते वह्न्यंशे सिद्धिश्च वर्तते, अर्थात् पर्वतः वह्निमान् वह्निव्याप्यधूमवान् आलोकव्याप्यालोकसंयोगवांश्च इति सिद्ध्यात्मकपरामर्शो वर्तते, वह्निमत्पर्वतविषयकानुमितिर्जायतामितीच्छा च वर्तते तत्र पर्वतो वह्निमानित्यनुमित्यापत्तिः। न

गादाधरी

द्रव्यत्वावच्छिन्नविषयकानुमितिर्जायतामितीच्छाबलात् सिद्धिसत्त्वे पर्वतो वह्निमानित्यनुमित्युत्पादात् तत्पक्षेति । तत्पक्षतावच्छेदकावच्छिन्नेत्यर्थः ।

न च यत्किञ्चिद्‌गोचरं ज्ञानं जायतामितीच्छाबलादिव आलोकवान् पर्वत इत्याद्यनुमितिसामग्रीदशायां वह्निमत्पर्वतविषयकानुमितिर्जायतामितीच्छाबलादपि सिद्धिसत्त्वे वह्निविधेयकानुमितिर्न जायते तत्कालीनसिद्धयप्रतिबध्यालोकाद्यनुमित्युत्पत्त्यैव

---

भावबोधिनी

चेष्टापत्तिरिति वाच्यम् । पर्वतो वह्निमानित्यनुमितेः सिद्धिप्रतिबध्यतया सिद्धयप्रतिबध्यायाः आलोकवान् पर्वत इत्यनुमितेरुत्पत्त्यैव तादृशेच्छाविषयसिद्धेः । यथा हि सिद्धिसत्त्वे यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छासत्त्वे न वह्न्यनुमितिः सिद्धयप्रतिबध्यघटादिविषयकमानसाद्युत्पत्त्यैव विषयसिद्धेस्तद्वत् । न च तादृशेच्छायाः वह्निमत्पर्वतविषयकानुमितिरेव विषयः, कथं अलोकवान् पर्वत इत्यनुमित्युत्पत्त्या तस्या विषयसिद्धिरिति वाच्यम् । आलोकवान् पर्वत इत्यनुमितेरपि वस्तुतो वह्निमान् यः पर्वतः तद्विषयकत्वेन इच्छायां विषयत्वात् । तथा च प्रकृतसाध्यविशिष्टपक्षविषयकत्वप्रकारकानुमितिविषयकेच्छायाः सिषाधयिषापदार्थत्वेऽप्युक्तापत्तिर्दुर्वारेति ।

अलोकवान् पर्वत इत्याद्यनुमितिसामग्रीदशायामिति । पर्वतो वह्निमानित्यनुमितिसामग्र्या अप्युपलक्षणमेतत् । अन्यथा परामर्शाभावेन वह्निविधेयकानुमित्यापत्त्यसंभवात् । उक्तरूपेणापीति । तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकानुमितिविषयकेच्छात्वेनेत्यर्थः । समाधत्ते - साध्यविशिष्टपक्षनिरूपितेति । साध्यविशिष्टपक्षनिरूपितविलक्षणविषयिताप्रकारकानुमितिविशेष्यकेच्छैवोत्तेजिका । वह्निविशिष्टपर्वतनिरूपितविषयिता च पर्वते वह्निमवगाहमानायां पर्वतो वह्निमानित्यनु-

## गादाधरी

तादृशेच्छाविषयवास्तववह्निमत्पर्वतविषयकानुमितिसिद्धेरित्युक्तरूपेणापि इच्छाया उत्तेजकत्वं न सम्भवतीति वाच्यम्। साध्यविशिष्टपक्षनिरूपितविलक्षणविषयिताप्रकारकत्वेनैवेच्छाया उत्तेजकत्वोपगमात्। आलोकवान् पर्वत इत्याद्यनुमितेर्वह्निविशिष्टपक्षनिरूपितविलक्षणविषयिताशून्यत्वेन तदुत्पत्त्या तादृशविषयिताप्रकारकेच्छाविषयसिद्ध्यभावात्। साध्यविशिष्टपक्षनिरूपितत्वञ्च साध्यावच्छिन्नपक्षनिष्ठनिरूपक-

---

## भावबोधिनी

मितावेवास्ति। अलोकवान् पर्वत इत्यनुमितौ च वह्न्याश्रयपर्वतनिरूपिता विषयितैव वर्तते। न तु वह्निविशिष्टपर्वतनिरूपिता। तथा च पूर्वोक्तसामग्रीदशायां वह्न्याश्रयपर्वतविषयकानुमितिर्जायताम् इति इच्छासत्त्वे अलोकवान् पर्वतः इत्यनुमितिः इष्टैव। वह्निविशिष्टपर्वतनिरूपितविषयिताशाल्यनुमितिर्जायतामितीच्छासत्त्वे तु अलोकवान् पर्वतः इत्यनुमितिर्जायते। तस्याः वह्निविशिष्टपर्वतनिरूपितविलक्षणविषयिताशून्यत्वेनेच्छायामविषयत्वात्; किं तु पर्वतो वह्निमानित्यनुमितिरेव जायते। तस्या एव वह्निविशिष्टपर्वतनिरूपितविषयिताशालित्वेन इच्छायां विषयत्वात् इति भावः।

ननु साध्यविशिष्टपक्षनिरूपितविलक्षणविषयिताप्रकारेण अनुमितिविषयकेच्छाया उत्तेजकत्वस्वीकारे ह्रदो वह्निमानित्यत्र वह्निविशिष्टह्रदस्याप्रसिद्ध्या तन्निरूपितविषयिताया अप्रसिद्धेः तत्प्रकारकेच्छाया अप्रसिद्ध्या तद्विरहविशिष्टसिद्ध्यभावरूपपक्षताया असंभव इत्याशङ्क्याह—साध्यविशिष्टपक्षनिरूपितत्वं चेति। तथा च साध्यावच्छिन्ना या पक्षनिष्ठा निरूपकता तत्कविषयिताप्रकारकानुमितिविषयकेच्छा सिषाधयिषा। ह्रदो वह्निमानित्याकारकभ्रमात्मकानुमितौ यद्यपि वह्निविशिष्टह्रदनिष्ठनिरूपकताकविषयिता नास्ति, तथापि वह्न्यवच्छिन्नह्रदनिष्ठनिरूप-

## गादाधरी

तात्कत्वमतो ह्रदो वह्निमानित्यादौ साध्यविशिष्टपक्षाप्रसिद्धावपि न तादृशविषयितायास्तत्प्रकारकानुमित्सायाश्चाप्रसिद्धिः। ह्रदादिनिष्ठस्य तादृशभ्रमवृत्तिविषयितानिरूपकत्वस्यापि ह्रदाद्यंशे प्रकारीभूतवह्न्याद्यवच्छिन्नत्वात्।

वस्तुतस्तु तत्साध्यविशिष्टतत्पक्षविषयकत्वेत्यनेन तत्साध्यतावच्छेदकावच्छिन्न-

---

## भावबोधिनी

कताकविषयिता वर्तते। अनुमितिनिष्ठविषयितानिरूपकतायाः ह्रदनिष्ठायाः ह्रदांशे प्रकारीभूतो यो वह्निः तदवच्छिन्नत्वात्। अतः वह्न्यवच्छिन्नह्रदनिष्ठनिरूपकताकविषयिताशाल्यनुमितिर्जायतामितीच्छा संभवतीति न तत्र पक्षताया अनुपपत्तिरित्यर्थः। तादृशभ्रमेति। ह्रदो वह्निमानित्याकारकभ्रमवृत्तिर्या विषयिता तन्निरूपकत्वस्येत्यर्थः। तथा च साध्यसमानाधिकरणपक्षनिष्ठनिरूपकताकविषयिताप्रकारकेच्छाया उत्तेजकत्व एव ह्रदो वह्निमानित्यत्र तादृशेच्छायाः असंभवः न तु साध्यावच्छिन्नपक्षनिष्ठनिरूपकताकविषयिताप्रकारकेच्छायाः उत्तेजकत्व इत्याशयः।

नन्वेवमपि यत्र 'वह्निमान् पर्वतः घटव्याप्यघटसंयोगवान् वह्निव्याप्यधूमवांश्च' इति परामर्शः 'वह्निविशिष्टपर्वतविषयकानुमितिर्जायताम्' इतीच्छा च वर्तते तत्र पर्वतो वह्निमानित्यनुमित्यापत्तिः। तादृशेच्छायां वह्निविशिष्टपर्वतनिरूपितविषयिताप्रकारिकायां तादृशविषयिताश्रयस्य पर्वतो वह्निमानित्यनुमितेरपि विषयत्वात्। वह्निमान् पर्वत इति सिद्ध्यप्रतिबध्यायाः वह्निमान् पर्वतो घटवानित्यनुमितेरुत्पत्त्यैव इच्छाया विषयसिद्ध्या इष्टापत्त्यसंभवात् तस्या अपि वह्न्यवच्छिन्ननिरूपकताकविशेष्यिताख्यविषयिताशालितादृशानुमितिविषयकत्वादित्यत आह-वस्तुतस्त्वित्यादिना। तथा च तत्साध्यतावच्छेदकावच्छिन्नतत्संसर्गावच्छिन्नविधेयतानिरू-

गादाधरी

तत्संसर्गावच्छिन्नविधेयतानिरूपिततत्पक्षतावच्छेदकावच्छिन्नोद्देश्यताकत्वं विवक्षितं, अतो वह्निमान पर्वतो घटवानित्याद्यनुमितिसामग्रीदशायां पूर्वोक्तयुक्त्या वह्निमत्पर्वतविषयकानुमितीर्जायतामित्याकारकेच्छाबलात् पर्वतादिपक्षकवह्न्यादिविधेयकानुमित्यनुत्पादेऽपि न क्षतिः। तादृशोद्देश्यतात्वेन च तादृशोद्देश्यताकत्वप्रकारकत्वं विवक्षणीयं, तेन केवलपर्वतत्वाद्यवच्छिन्नोद्देश्यतात्वेन तादृशोद्देश्यताकत्वप्रकारकानुमित्सादशायां

---

भावबोधिनी

पिततत्पक्षतावच्छेदकावच्छिन्नोद्देश्यताकत्वप्रकारकानुमितिविशेष्यकेच्छा उत्तेजिका। वह्नित्वावच्छिन्नसंयोगसंबन्धावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यतानिरूपकानुमितिर्जायतामितीच्छाया आकारः। उक्तस्थले एतादृशेच्छासत्त्वे पर्वतो वह्निमानित्येवानुमितिर्जायते, तस्या एव तादृशोद्देश्यताकत्वेनेच्छाविषयत्वात्, वह्निमान् पर्वतो घटवानित्यनुमितेस्तु घटत्वावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताकायाः वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यताकत्वविरहेणेच्छायामविषयत्वादिति भावः। पूर्वोक्तयुक्त्येति। सिद्ध्यप्रतिबध्यवह्निमत्पर्वतोद्देश्यकघटादिविधेयकानुमित्युत्पत्त्यैव विषयसिद्धिरूपया युक्त्येत्यर्थः। वह्निमत्पर्वतेति। वह्निविशिष्टपर्वतेत्यर्थः।

नन्वेवमपि यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवान् घटव्याप्यघटसंयोगवांश्चेति सिद्ध्यात्मकपरामर्शो वर्तते, पर्वतत्वावच्छिन्नोद्देश्यताकानुमितिर्जायतामिच्छा च वर्तते, तत्र पर्वतो वह्निमानित्यनुमित्यापत्तिः। तादृशेच्छाया अपि पर्वतत्वावच्छिन्नोद्देश्यतात्वेन रूपेण वह्नित्वावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताप्रकारकत्वेनोत्तेजकत्वात्। न चेष्टापत्तिः, सिद्ध्यप्रतिबध्यायाः पर्वतो घटवानित्यनुमितेरुत्पत्त्यैव इच्छायाः विषयसिद्धिसंभवात्। पर्वतो घटवानित्यनुमितेरपि पर्वतत्वावच्छिन्नोद्देश्यताकत्वेन इच्छायां विषयत्वादित्यत आह तादृशोद्देश्यतात्वेन चेति। प्रकृतसाध्यता-

गादाधरी

पर्वते अन्यानुमितिसामग्रीसत्त्वे वह्नेः सिद्धिसत्त्वे न वह्न्यनुमित्यापत्तिः।

एवं पक्षतावच्छेदकादिनिष्ठानवच्छिन्नत्वावगाहित्वमपि निवेशनीयम्, अन्यथा जातिमान् वह्निव्याप्यवानिति परामर्शकाले पर्वतो वह्निव्याप्यधूमवान् वह्निमानिति सिद्धिसत्त्वेऽनवच्छिन्नत्वानवगाहीच्छाकाले पर्वतो वह्निमानित्यनुमित्यापत्तिः, पर्वतो

---

भावबोधिनी

वच्छेदकावच्छिन्नविधेयतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नोद्देश्यतात्वेनेत्यर्थः। उद्देश्यतान्वय्यवच्छिन्नत्वं तृतीयार्थः। तथा च पर्वतत्वावच्छिन्नोद्देश्यताकानुमितिर्जायतामितीच्छायाः पर्वतत्वावच्छिन्नोद्देश्यतात्वावच्छिन्नोद्देश्यतानिरूपकत्वप्रकारकत्वेऽपि वह्नित्वावच्छिन्नसंयोगसंबन्धावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यतात्वावच्छिन्नोद्देश्यतानिरूपकत्वप्रकारकत्वविरहान्नोत्तेजकत्वम्। वह्नित्वावच्छिन्नसंयोगसंबन्धावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताकानुमितिर्जायतामितीच्छायास्तु तादृशत्वेनोत्तेजकत्वात् तादृशायां पर्वतो वह्निमान् इत्यनुमितिरिष्यत एव। तादृशानुमितेरेव तादृशेच्छाविषयत्वेन घटानुमित्युत्पत्त्या तादृशेच्छाविषयसिद्ध्यसंभवादिति भावः।

तादृशोद्देश्यताकत्वप्रकारकानुमित्सादशायामिति। वह्नित्वावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताकत्वप्रकारकानुमित्सादशायामित्यर्थः। अनुमित्साया आकारस्तु पर्वतत्वावच्छिन्नोद्देश्यताकानुमितिर्जायतामिति। अन्यानुमितिसामग्रीति। घटानुमितिहेतुपरामर्शसत्त्व इत्यर्थः।

नन्वेवमपि पर्वतो वह्निमान्, जातिमान् वह्निव्याप्यधूमवानिति समूहालम्बनात्मकसिद्ध्यात्मकपरामर्शकाले वह्नित्वावच्छिन्नविधेयतानिरूपितजात्यवच्छिन्नोद्देश्यता-

गादाधरी

वह्निव्याप्यवानिति परामर्शकालीनजातिमान् वह्निव्याप्यवानिति परामर्शशून्यकालीनानवच्छिन्नत्वानवगाहीच्छानाञ्च तत्तद्व्यक्तित्वेनोत्तेजकत्वम् इति बोध्यम्। साध्य विशिष्टपक्षविषयकत्वप्रकारकत्वनिवेशप्रयोजनं दर्शयति । यत्किञ्चिदिति । यत्कि-

---

भावबोधिनी

निरूपकानुमितिर्जायतामितीच्छासत्त्वे पर्वतो वह्निमानित्यनुमित्यापत्तिः। न चेष्टापत्तिः इति वाच्यम्। पर्वतो वह्निमानिति सिद्ध्यप्रतिबध्यायाः जातिमान् वह्निमानित्यनुमितेरपि तादृशेच्छाविषयतया तदुत्पत्त्यैवेच्छाविषयसिद्धेरित्यत आह– एवं पक्षतावच्छेदकादिनिष्ठानवच्छिन्नत्वावगाहित्वमपीति। आदिपदेन साध्यतावच्छेदकपरिग्रहः। तथा च साध्यतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदकताकविधेयतानिरूपितपक्षतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदकताकोद्देश्यतानिरूपकत्वप्रकारकानुमितिविषयकेच्छा उत्तेजिका। तादृशेच्छायां तु जातिमान् वह्निमानित्यनुमितिर्न विषयः। तस्याः जातित्वावच्छिन्नपर्वतत्वनिष्ठावच्छेदकताकोद्देश्यतानिरूपकत्वात्। पर्वतत्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वानवगाहिन्याः पूर्वोक्तेच्छायाः उत्तेजकत्वं नेष्यत इति भावः। साध्यतावच्छेदकनिष्ठावच्छेदकतायां निरवच्छिन्नत्वनिवेशात् पर्वतो वह्निमान् जातिमद्व्याप्यधूमवांश्च इति परामर्शकाले वह्नित्वावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताकानुमितिर्जायतामितीच्छायां न पर्वतो वह्निमानित्यनुमित्यापत्तिरिति भावः।

नन्वेवं सति पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति परामर्शकाले पर्वतत्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वानवगाहिन्याः वह्नित्वावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताकानुमितिर्जायतामित्याकारिकाया इच्छायाः सत्त्वे पर्वतो वह्निमानित्यनुमितेरनुपपत्तिः। सावच्छिन्नावच्छेदकताकोद्देश्यतानिरूपकजातिमान्

गादाधरी

ञ्चिद्विषयकत्वप्रकारकत्वं निवेश्यापि यत्किञ्चिज्ज्ञानं जायतामित्याद्यिच्छावारणं सम्भवतीति यत्किंचिद्गोचरत्वप्रकारकेच्छानुधावनम् ।

न चेच्छापूर्वं यत्किंचिद्गोचरज्ञानस्यावश्यं सिद्धत्वात् तादृशेच्छैव न सम्भवति ज्ञानगोचरेच्छायां स्वरूपसत्त्याः स्वविषयसिद्धेरेव विरोधित्वात् । तदुक्तं न ज्ञाने जाते ज्ञानेच्छा भवतीति वाच्यम् । एतदुत्तरवर्ति यत्किंचिद्गोचरं ज्ञानं जायता-

---

भावबोधिनी

वह्निमानित्यनुमितिसामग्रीविरहेण जातिमान् वह्निमान् इत्यनुमित्युत्पत्त्या विषयसिद्ध्यसंभवेन पर्वतो वह्निमानित्यनुमित्युत्पत्त्यैव विषयसिद्धेर्वक्तव्यत्वात् इत्याशङ्क्य तादृशेच्छानां तत्तद्व्यक्तित्वेन पृथगेवोत्तेजकत्वं वक्तव्यमिति समाधत्ते—पर्वतो वह्निव्याप्यवानितीत्यादिना ।

❀ यत्किञ्चिद्विषयकत्वप्रकारकत्वं निवेश्यापीति । अनुमितिविषयकेच्छामात्रस्य सिषाधयिषापदार्थत्वे यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छाया अपि यत्किञ्चिद्विषयकज्ञानत्वेन रूपेण पर्वतो वह्निमानित्यनुमितिविषयकत्वात् पर्वतो वह्निमानिति सिद्धिकाले तादृशेच्छाबलादनुमितिवारणाय तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वस्येच्छायां निवेश इति पूर्वमुक्तम् । तत्र यत्किंचित् ज्ञानं जायतामितीच्छाया अपि यत्किंचिज्ज्ञानत्वेन रूपेणानुमितिविषयकतया तस्या उत्तेजकत्ववारणार्थमेव तन्निवेश इति कुतो नोक्तमिति शङ्का । तस्या इच्छाया यत्किंचित्वप्रकारकत्वेऽपि यत्किंचिद्विषयकत्वप्रकारकत्वविरहात् यत्किंचिद्विषयकत्वप्रकारकत्वं निवेश्यापि तद्वारणसंभवात् तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वनिवेशस्य न तद्वारणं प्रयोजनमिति मत्वा यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छाया अनुधावनमिति समाधानम् ।

गादाधरी

मित्याद्याकारकेच्छाया विवक्षितत्वात् ।

नन्वनुमितित्वप्रकारकत्वं विनेश्यैव तथाविधेच्छावारणसम्भवे किं गुरुतर-साध्यविशिष्टपक्षविषयकत्वप्रकारकत्वनिवेशनेनेत्यत आह अनुमितित्वाप्रकारिकायामपीति । प्रत्यक्षाद्यात्मकसिद्धिदशायां पर्वते वह्निज्ञानं जायतामित्याकारकेच्छा न

---

भावबोधिनी

न चेच्छापूर्वमित्यादि । यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छैव नोत्पत्तुमर्हति सर्वदा यत्किंचिद्विषयकज्ञानस्य सत्त्वात् स्वविषयसत्तायाः इच्छाविरोधित्वादिति शङ्का । एतज्ज्ञानोत्तरवर्ति यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छायाः संभवात् तादृशेच्छावारणार्थं तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वनिवेश इति समाधानम् । इदमुपलक्षणम्—एतज्ज्ञानभिन्नं यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छावारणमप्यभिप्रेतम् ।

अवश्यं सिद्धत्वादिति । इच्छां प्रति इष्टसाधनताज्ञानस्य प्रयोजनत्वज्ञानस्य वा हेतुत्वात् तादृशज्ञानस्यैव यत्किंचिद्गोचरत्वेन तत्सत्त्वे इच्छाया असंभव इति भावः । तथाविधं ज्ञानं सिद्धमित्यज्ञानात् इच्छेत्यत आह-स्वरूपसत्त्या इति । ज्ञानविषयत्वानवच्छिन्नाया इत्यर्थः । तथाविधेच्छावारणसंभव इति । यत्किंचित् ज्ञानं जायतामितीच्छायाः यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छायाश्च वारणसंभव इत्यर्थः । तादृशेच्छयोः ज्ञानत्वप्रकारकत्वेनानुमितित्वप्रकारकत्वाभावादिति भावः ।

दीधितौ अनुमितीत्वाप्रकारिकायामपीति । तथा चानुमितित्वप्रकारकेच्छायाः सिषाधयिषापदार्थत्वे यत्र आदौ पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकः प्रत्यक्षरूपसिद्ध्यात्मकपरामर्शः तदनन्तरं प्रत्यक्षातिरिक्तं पर्वते वह्निज्ञानं जायता-

## गादाधरी

सम्भवतीति तद्विषयीभूतप्रत्यक्षादिरूपसिद्धेरेव सत्त्वात्, अतः प्रत्यक्षाद्यतिरिक्तमिति। शाब्दादिरूपसिद्धौ सत्यां प्रत्यक्षाद्यरिक्तं ज्ञानं जायतां इत्यादीच्छाया उत्पादासम्भवात्। प्रत्यक्षाद्यनन्तरमिति। प्रत्यक्षादिरूपसिद्ध्यनन्तरमित्यर्थः। आदिपदाभ्यां शाब्दादि-सिद्धिकालीनानां शाब्दान्यज्ञानं जायताम् इत्यादीच्छानां संग्रहः। अनुमित्युत्पादाच्चेति

---

## भावबोधिनी

मितीच्छा तत्र तदनन्तरक्षणे पर्वतो वह्निमानित्यनुमितिरिष्यते। अनुमितित्वप्रकार-केच्छायाः उत्तेजकत्वे तु उक्तेच्छायाः प्रत्यक्षातिरिक्तत्वज्ञानत्वप्रकारकत्वेऽपि अनुमितित्वप्रकारकत्वविरहादुत्तेजकत्वं न स्यात्। अतः अनुमितित्वप्रकारकत्वमुपेक्ष्य तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वनिवेश इति भावः। प्रत्यक्षात्मकसिद्धि-दशायां पर्वते वह्निज्ञानं जायतामितीच्छा न संभवति। इच्छाविषयस्य प्रत्यक्ष-रूपस्य वह्निज्ञानस्य इच्छाविरोधित्वात् अतः प्रत्यक्षातिरिक्तमिति ज्ञानविशेषणम्। प्रत्यक्षसत्त्वेऽपि प्रत्यक्षातिरिक्तज्ञानस्यासत्त्वात् तद्विषयिणीच्छा संभवत्येवेति भावः। यत्र शाब्दबोधरूपा पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति सिद्धिरस्ति तत्र तद-नन्तरं प्रत्यक्षातिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छा न संभवति। तद्विष-यस्य प्रत्यक्षातिरिक्तस्य शाब्दबोधरूपज्ञानस्य विषयसत्ताविधया इच्छाविरोधित्वादि-त्यालोच्य प्रत्यक्षात्मकसिद्ध्यनन्तरमित्युक्तम्।

गादाधर्यां तादृशेच्छानामिति। 'प्रत्यक्षातिरिक्तं पर्वते वह्निज्ञानं जायताम्' इत्यादीच्छानामित्यर्थः। इदमुपलक्षणमिति। अनुमितित्वप्रकारकेच्छायाः उत्तेजकत्वे कस्मिंश्चिद्गोचरं ज्ञानं जायतामितीच्छायाः वारणेऽपि यत्र पर्वतो घटव्याप्यघटसंयोग-वान् वह्निव्याप्यधूमवान् वह्निमांश्चेति समूहालम्बनज्ञानानन्तरं घटानुमितिर्जायता-मितीच्छा वर्तते तत्र तदनन्तरं पर्वतो वह्निमानित्यनुमित्यापत्तिः, तादृशेच्छायाः

## गादाधरी

तथा चानुमितित्वप्रकारकत्वं निवेशयितुमशक्यमेव तादृशच्छानामसंग्रहप्रसङ्गादिति भावः ।

इदमुपलक्षणम् । अनुमितित्वप्रकारकत्वनिवेशेऽपि घटाद्यनुमितिर्जायतामितीच्छाकाले सिद्धिसत्त्वे वह्न्याद्यनुमितिवारणाय प्रकृतसाध्यादिविषयकत्वप्रकारकत्वनिवेशनमावश्यकम् ।

न च प्रकृतसाध्यादिविषयिणी या अनुमितिस्तद्विषयकत्वनिवेशेनापि दर्शि-

---

## भावबोधिनी

अनुमितित्वप्रकारकत्वेन उत्तेजकत्वात् । न चेष्टापत्तिः, सिद्धयप्रतिबध्यायाः पर्वतो घटवानित्यनुमितेरुत्पत्त्यैव तदिच्छाविषयसिद्धेः । अतस्तद्वारणाय तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वमवश्यं निवेश्यम् । घटानुमितिर्जायतामितीच्छायाः वह्निविशिष्टपर्वतविषयकत्वप्रकारकत्वविरहान्नोत्तेजकत्वापत्तिः । तथा च तेनैव यत्किंचिद्बोध्यं ज्ञानं जायतामितीच्छाया वारणसंभवात् अनुमितित्वप्रकारकत्वनिवेशनं मुधा पूर्वोक्तेच्छाया असंग्राहकं चेति भावः ।

न च प्रकृतसाध्यादिविषयिणीति । प्रकृतसाध्यादिविषयिणी यानुमितिस्तद्विषयकेच्छा उत्तेजिका, घटानुमितिर्जायतामितीच्छाया अतादृशत्वात् वारणसंभवे विषयकत्वप्रकारकत्वपर्यन्तनिवेशनं मास्तु इत्याशङ्का । पर्वतो वह्निमान् घटवांश्चेति समूहालम्बनानुमितिः घटानुमितित्वेन रूपेण घटानुमितिर्जायतामितीच्छायां भासते चेत् तस्याः इच्छायाः प्रकृतसाध्यादिविषयकसमूहालम्बनानुमितिविषयकत्वेन उत्तेजकत्वं प्रसज्येत । तद्वारणार्थं प्रकृतसाध्यविशिष्टपक्षविषयकत्वप्रकारकत्वेनैवोत्तेजकत्वं वाच्यमिति समाधानम् । दर्शितेच्छेति । घटानुमितिर्जायतामितीच्छावारणसंभव इत्यर्थः ।

## गादाधरी

तेच्छावारणसंभव इति वाच्यम् । दर्शितेच्छाया अपि घटाद्यनुमितित्वेन वह्न्यादिगोचरसमूहालम्बनानुमितिविषयकत्वात् ।

न चानुमितित्वप्रकारकत्वानिवेशेऽपि अनुमितिरेव यत्र प्रत्यक्षत्वादिना इच्छाविषयस्तत्रानुमित्यापत्तिरिष्टत्वात् । अनुमितौ प्रत्यक्षत्वभ्रमदशायामेव तादृशेच्छाया उत्पादात् तस्या अनुमितित्वप्रकारकेच्छासमशीलत्वादिति हृदयम् ।

---

## भावबोधिनी

न चानुमितित्वप्रकारकत्वानिवेशे इति । यत्र सिद्धिपरामर्शसत्त्वे वह्निविशिष्टविषयकप्रत्यक्षं जायतामितीच्छा सा च प्रत्यक्षत्वेनानुमितिमवगाहमाना विसंवादिरूपा, तत्र तदनन्तरं पर्वतो वह्निमानित्यनुमित्यापत्तिः, तदिच्छायाः तत्साध्यविशिष्टतरपक्षविषयकत्वप्रकारकत्वात् अनुमितिविषयकत्वाच्चेति शङ्का । तद्दशायामनुमितिरिष्टैवेति समाधानम् । समशीलत्वादिति । उभयोरपि प्रकृतानुमितिविषयकतया अनुमित्युत्पत्तिं विना असिद्धविषयकतया च साम्यादित्यर्थः ।

न चानुमितित्वप्रकारकत्वस्यानिवेशे इति । यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति प्रत्यक्षम् वह्निमत्पर्वतविषयकशाब्दबोधसामग्री च, ततः वह्निमत्पर्वतविषयकं प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छा तत्र पर्वतो वह्निमानित्यनुमित्यापत्तिः । तस्याः वह्निमत्पर्वतविषयकत्वप्रकारकत्वात् अनुमितिविषयकत्वाच्च । न चेष्टापत्तिः, सिद्ध्यप्रतिबध्यशाब्दबोधोत्पत्त्यैव इच्छाविषयसिद्धेः । अनुमितित्वप्रकारकत्वनिवेशे तु तस्याः अनुमितित्वाप्रकारकत्वान्न दोष इति शङ्का । समाधानं तु तत्र यद्यपि तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकेच्छाविरहविशिष्टसिद्ध्यभावरूपा पक्षता वर्तते । तथापि यत्रानुमितिशाब्दबोधयोः समानविषयकत्वं तत्रानुमितित्वप्रकारकेच्छाविरहविशिष्टशाब्दबोधसामग्र्याः प्रतिबन्धकत्वात् प्रकृते तादृशप्रति

## गादाधरी

न चानुमितित्वप्रकारकत्वस्यानिवेशे पर्वते वह्नेः प्रत्यक्षतः सिद्धौ शाब्दसामग्र्याञ्च सत्यां पर्वते प्रत्यक्षाद्यतिरिक्तं वह्निज्ञानं जायतामितीच्छासत्त्वेऽनुमित्यापत्तिरिति वाच्यम् । तत्र पक्षतासत्त्वेऽप्यनुमितित्वप्रकारकेच्छाविरहविशिष्टसमानविषयकशाब्दसामग्र्याः प्रतिबन्धकत्वादेवानुमितिवारणसंभवात् ।

अथ सिद्धिदशायां पर्वते वह्नेरन्यज्ज्ञानं जायतामितीच्छासत्त्वेऽनुमित्यापत्तिस्तस्या अप्यनुमितिविषयकत्वात् । न चेष्टापत्तिः । तदुत्तरं पर्वतो वह्निमान् इत्यादि-

---

## भावबोधिनी

बन्धकसद्भावेन प्रतिबन्धकाभावरूपकारणविरहात् नानुमित्यापत्तिरिति समाधानम् । शाब्दसामग्र्यां सत्यामिति । न च पदजन्यपदार्थस्मृतिप्रत्यक्षसिद्ध्युक्तेच्छानां यौगपद्यासंभवात् कथमियमाशङ्केति वाच्यम् । ज्ञानयोरेव न यौगपद्यं न तु ज्ञानेच्छयोरिति मतेन वा प्रत्यक्षसाधारणपदार्थोपस्थितेः कारणत्वमिति मतेन वा शङ्कायाः संभवात् ।

अथ सिद्धिदशायामित्यादि । पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति सिद्धिदशायां वह्निप्रकारकपर्वतविशेष्यकमन्यत् ज्ञानं जायतामितीच्छासत्त्वे पर्वतो वह्निमानित्यनुमित्यापत्तिः तस्या अप्यनुमितिविषयकत्वात् । प्रकृतसिद्धिभिन्नस्य पर्वतो वह्निमानित्याकारकमानसप्रत्यक्षस्योत्पत्त्यापि इच्छाविषयसिद्धेः इष्टापत्त्यसंभवात् इति आक्षेपः । अन्यदिति । प्रकृतसिद्धिभिन्नमित्यर्थः । न च प्रत्यक्षेच्छेति । समानविषयकानुमितिं प्रति प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वात् उक्तस्थले पक्षतासत्त्वेऽपि नानुमित्यापत्तिरित्यर्थः । प्रत्यक्षत्वादिप्रकारकेति । आदिपदेन शाब्दत्वपरिग्रहः । तथा च प्रत्यक्षत्वशाब्दत्वप्रकारकेच्छाविशिष्टाया एव प्रत्यक्षादिसामग्र्याः समानविषयकानुमितिप्रतिबन्धकत्वात उक्तस्थले च तादृशेच्छा-

## गादाधरी

मानसाद्युत्पत्त्याऽपीच्छाविषयसिद्धेस्तादृशेच्छाया यत्किञ्चिद्गोचरं ज्ञानं जायतामित्ये-तादृशेच्छातुल्यत्वात् ।

न च प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्रीरूपप्रतिबन्धकसत्त्वान्नापत्तिरिति वाच्यम् । प्रत्यक्षत्वादिप्रकारकेच्छाविशिष्टाया एव मानसादिसामग्र्या अनुमितिप्रतिबन्धकत्वात् । अन्यथा सिद्धिशून्यकालेऽपि तादृशेच्छासत्त्वेऽनुमित्यनुत्पादप्रसङ्गात् ।

---

## भावबोधिनी

विशिष्टा प्रत्यक्षसामग्री नास्तीति न प्रतिबन्धकत्वं प्रत्यक्षसामग्र्याः । अतोऽनु-मित्यापत्तिर्दुर्वारेत्यर्थः । अन्यथेति । प्रत्यक्षत्वप्रकारकत्वमनिवेश्य प्रत्यक्षविषयकेच्छा-विशिष्टायाः प्रत्यक्षसामग्र्याः समानविषयकानुमितिप्रतिबन्धकत्वस्वीकारे यत्र सिद्धि-र्नास्ति पर्वतो वह्निव्याप्यधूमवानिति परामर्शः पर्वते वह्नेः ज्ञानं जायतामिती-च्छाऽस्ति तत्रानुमितिर्न स्यात् । तादृशेच्छायाः प्रत्यक्षविषयकत्वेन प्रत्यक्षेच्छा-विशिष्टमानसप्रत्यक्षसामग्रीरूपप्रतिबन्धकसत्त्वात् इति भावः ।

न चोक्तयुक्त्येत्यादि । वह्निमान् पर्वतो धूमवानित्यनुमितिसामग्रीदशायां वह्निमत्पर्वतविषयकानुमितिर्जायतामितीच्छावशात् पर्वते वह्न्यनुमितिवारणयुक्त्येत्यर्थः। तथा च वह्निविधेयकत्वावच्छिन्नपर्वतोद्देश्यकत्वप्रकारकानुमितिविषयकेच्छाया एव सिषाधयिषापदार्थत्वेन पर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छायाः पर्वतविशेष्यकत्व-वह्निप्रकारकत्वादिप्रकारकत्वेऽपि पर्वतोद्देश्यकत्ववह्निविधेयकत्वप्रकारकत्वविरहात् न तादृशेच्छादशायां पर्वतो वह्निमानित्यनुमित्यापत्तिरित्यर्थः । न च पर्वतोद्देश्यक-वह्निविधेयकमन्यत् ज्ञानं जायतामितीच्छादशायामनुमित्यापत्तिरिति वाच्यम् । इष्टापत्तेः । प्रत्यक्षे विशेष्यताप्रकारताख्यविषयतयोः सत्त्वेऽपि उद्देश्यताविधेयताख्य-विषयतयोरसत्त्वात् तदुत्पत्त्या तस्याः विषयसिद्ध्यसंभवेनोद्देश्यताविधेयताशाल्यनुमित्यु-

गादाधरी

न चोक्तयुक्त्या वह्निविधेयकत्वावगाहित्वनिवेशस्यावश्यकत्वात् वह्निप्रकार-कत्वावगाहिदर्शितेच्छाबलात् नानुमितिप्रसङ्गः, अनुमितिनिष्ठ तद्विधेयकत्वावगाहीच्छा-दशायाञ्च जायत एवानुमितिः विधेयतायाः प्रत्यक्षेऽप्रामाणिकतया तत्प्रकारकेच्छाया अनुमित्युत्पत्त्यैव विषयसिद्धेरिति वाच्यम्। विधेयतायाः प्रत्यक्षव्यावृत्तत्वे तत्प्रकारि-कायाः प्रत्यक्षान्यत्वाप्रकारिकाया अपीच्छायाः प्रत्यक्षसिद्धिकाले सम्भवात प्रत्यक्षान्यत्व-प्रकारकेच्छापर्यन्तानुसरणस्य दीधितिकृतो निर्बीजत्वात्।

---

भावबोधिनी

त्पत्त्यैव विषयसिद्धेरिति भावः। दर्शितेच्छाबलादिति। पर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छाबलादित्यर्थः। तद्विधेयकत्वावगाहीच्छादशायामिति। वह्निविधेयक-पर्वतोद्देश्यकानुमितिर्जायतामित्याकारकेच्छादशायामित्यर्थः। विधेयतायाः प्रत्यक्षव्या-वृत्तत्व इति। यथा ह्यनुमितिशाब्दबोधयोः विधेयताख्यविषयता वर्तते तथा प्रत्यक्षेऽपि वर्तते। अन्यथा अनुमितित्वप्रकारकत्वनिवेशे प्रत्यक्षातिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छायां दीधितावनुमित्यापत्तिरुक्ता न सङ्गच्छते। प्रत्यक्षा-त्मकसिद्धिदशायां तादृशेच्छैव न संभवति, तद्विषयीभूतप्रत्यक्षात्मकसिद्धेरेव सत्वादित्यालोच्य हि दीधितौ प्रत्यक्षातिरिक्तमित्युक्तम्। प्रत्यक्षे विधेयतायाः अभावे प्रत्यक्षातिरिक्तस्य वह्निविधेयकज्ञानस्यैव तदिच्छाविषयत्वात् प्रत्यक्षाति-रिक्तमिति विशेषणवैयर्थ्यप्रसङ्गात् इति भावः।

एवमपीति। विधेयतायाः प्रत्यक्षव्यावृत्तत्वस्वीकारेण प्रकृतदीधितिग्रन्थसंग-मनेऽपि वक्ष्यमाणदीधितिग्रन्थासंगतिः। तत्र हि पर्वतो वह्निमानित्याकारकशाब्द-बोधात्मकसिद्धिकाले पर्वतो वह्निमानित्याकारकप्रत्यक्षसामग्र्यसत्त्वे अशाब्दं ज्ञानं जायतामितीच्छाबलात् अनुमितिर्जायत इत्युक्तम्। तादृशेच्छायाः प्रत्यक्षव्या-

## गादाधरी

न च विधेयता प्रत्यक्षव्यावृत्तैव तदवगाहित्वसूचनायैवोपदर्शितेच्छाकारे प्रत्यक्षान्यत्वोल्लेख इति वाच्यम् । एवमपि वक्ष्यमाणस्य शाब्दसिद्धिकालेऽशाब्दं ज्ञानं जायतामितीच्छाबलेनानुमितिर्जायते न तु प्रत्यक्षसामग्रीकाले इत्यस्य सङ्गमयितुमशक्यत्वात् । तादृशेच्छायाः प्रत्यक्षव्यावृत्तविधेयताद्यवगाहित्वे प्रत्यक्षसामग्रीकालेऽपि तद्बलादनुमित्युत्पत्त्यौचित्यात् । तदनवगाहित्वे सिद्धावप्यनुत्तेजकत्वात् ।

---

## भावबोधिनी

वृत्तविधेयताप्रकारकत्वे प्रत्यक्षोत्पत्त्या विषयसिद्ध्यसंभवात् प्रत्यक्षसामग्र्यसत्त्व इति कथनमयुक्तम् । विधेयत्वाप्रकारकत्वे तु तस्या उत्तेजकत्वमेव नास्तीति अनुमित्यनुपपत्तिः इति भावः । तथा च सिद्धिदशायां पर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छादशायामनुमित्यापत्तिरिति अथेत्यादिना कृतः आक्षेपः वर्तते ।

तं समाधत्ते—अत्रोच्यत इत्यादिना । अनुमितिर्जायतां, प्रत्यक्षातिरिक्तं पर्वते वह्निज्ञानं जायताम् इत्यादीनामिच्छानां तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकानुमितिविषयकेच्छात्वेनैव अनुगमः, न त्वनुमितित्वप्रकारकत्वेन । एवं सति सिद्धिकाले मानसप्रत्यक्षसामग्र्यां च सत्यां पर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छाकाले पर्वतो बह्निमानित्यनुमित्यापत्तिरित्याक्षेपः शिष्यते । स च तथाविधेच्छायाः तद्व्यक्तित्वेनानुमितिप्रतिबन्धकत्वं स्वीकृत्य वारणीय इति भावः । अनुमितिविषयकेच्छात्वेनैवेति । एवकारेणानुमितित्वप्रकारकत्वस्य व्यवच्छेदः न तु तत्साध्यविशिष्टतत्पक्षविषयकत्वस्य । यत्किंचिद्गोचरं ज्ञानं जायतामित्यादीच्छावारणाय तन्निवेशावश्यकतायाः पूर्वमुक्तत्वात् । तथाविधोपनीतेति । पर्वते वह्निविषयकमानसप्रत्यक्षसामग्र्यां सत्यामित्यर्थः । न च तासामिति । पर्वते वह्नेरन्यत् ज्ञानं जायतामित्यादीच्छानामित्यर्थः । अनुमितित्वादीति । आदिपदेन प्रत्यक्षान्यत्वादि-

## गादाधरी

अत्रोच्यते । अनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुमितिविषयकेच्छात्वेनैवानुगमः । पर्वते वह्नेरन्यज्ज्ञानं जायतामित्याद्याकारकेच्छाकाले सत्यां सिद्धौ तथाविधोपनीतमानससामग्र्याञ्चानुमितेर्वारणाय तथाविधेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकता कल्प्यते इति न दोषः ।

न च तासां तत्तद्व्यक्तित्वेनानन्तप्रतिबन्धकताकल्पनामपेक्ष्यानुमितित्वादिरूपप्रकारविशेषमन्तर्भाव्यैवानुमित्सानामुत्तेजकत्वमुचितमिति वाच्यम् । तथा सति पर्वते

---

## भावबोधिनी

परिग्रहः । तथा सतीति । अनुमितित्वादिप्रकारकेच्छात्वेनोत्तेजकत्वे सतीत्यर्थः । पर्वतो वह्निमान् वह्निव्याप्यधूमवान् घटव्याप्यघटसंयोगवांश्च इति समूहालम्बनं ज्ञानं घटानुमितिर्जायतामितीच्छा च प्रथमं युगपत् जायते, ततः पर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छा, ततः पर्वतो वह्निमानित्यनुमितिरेव जायते न तु मानसप्रत्यक्षम् । मानसप्रत्यक्षं प्रति घटानुमितीच्छाविशिष्टघटानुमितिसामग्र्याः प्रतिबन्धकत्वात् । अनुमितित्वप्रकारकत्वेनेच्छाया उत्तेजकत्वे तु पर्वते वह्नेरन्यत् जायतामितीच्छायाः अतादृशत्वात् तस्याः पृथगेवोत्तेजकत्वं वाच्यमिति एतादृशेच्छानां येऽभावास्तद्विशिष्टसिद्धेः प्रतिबन्धकत्वं फलति । तत्र चाभावेषु परस्परं विशेष्यविशेषणभावे विनिगमनाविरहात् प्रत्यक्षातिरिक्तज्ञानं जायताम् इतीच्छाविरहविशिष्टः यः अनुमितिर्जायताम् इतीच्छाविरहः तद्विशिष्टः यः पर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छाविरहः तद्विशिष्टत्वेन वा सिद्धेः प्रतिबन्धकता, अनुमितिर्जायताम् इतीच्छाविरहविशिष्टप्रत्यक्षातिरिक्तज्ञानं जायतामितीच्छाविरहविशिष्टपर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छाविरहविशिष्टत्वेन वा सिद्धेः प्रतिबन्धकत्वमित्यादिरीत्या अनन्ताः प्रतिबन्धकताः कल्पनीयाः स्युरिति भावः ।

दीधितिः

यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तदिच्छाभाव-समुदायस्य विशेषणत्वादिच्छाया अननुगमेऽपि न क्षतिः ।

---

गादाधरी

वह्नेरन्यत ज्ञानं जायतामितीच्छाकाले तथाविधोपनीतभानविरोधिघटाद्यनुमितीच्छा-विशिष्टतत्सामग्रीसत्त्वे सिद्धौ तस्यां वह्न्याद्यनुमित्युपपत्तये तादृशतादृशेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन सिद्धावुत्तेजकत्वापत्त्या तदभावसहस्रस्य मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण सिद्धिप्रतिबन्धकतानन्त्यप्रसङ्गात् ।

---

भावबोधिनी

यादृशयादृशेत्यादि दीधितिमवतारयति– ननु साध्यविधेयकत्वावच्छिन्नेत्यादिना। साध्यविधेयकपक्षोद्देश्यकानुमितिर्जायतामितीच्छाया उत्तेजकत्वे पक्षोद्देश्यकसाध्यविधेय-कानुमितिर्जायतामितीच्छाया असंग्रहः । पक्षोद्देश्यकसाध्यविधेयकानुमितिर्जायतामितीच्छाया उत्तेजकत्वे साध्यविधेयकपक्षोद्देश्यकानुमितिर्जायतामितीच्छाया असंग्रहः स्यात् । तयोर्द्वयोरप्युत्तेजकत्वं स्वीकृत्य तयोरभावद्वयस्य सिद्धिविशेषणत्वे-यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति सिद्ध्यात्मकपरामर्शानन्तरं वह्नि-मत्पर्वतानुल्लेखी अनुमितिर्जायतामितीच्छा वर्तते घटाद्यनुमितिसामग्री च नास्ति तत्र तदनन्तरं पर्वतो वह्निमानित्यनुमितिर्न स्यात्। तस्या इच्छायाः साध्यविधेय-कत्वावच्छिन्नपर्वतोद्देश्यकत्वप्रकारकत्वविरहेणानुत्तेजकत्वात् इत्यालोच्य उत्तेजकत्वे-नाभिमतानामिच्छानां तत्तद्व्यक्तित्वेनाभावकूटस्य सिद्धौ विशेषणत्वं प्रतिपादयन् यादृशयादृशेत्यादि दीधितिग्रन्थः प्रवृत्त इति भावः । विषयानुपरक्तेति । वह्नि-मत्पर्वतादिरूपविषयाविशिष्टतया अनुमितिमवगाहमानाया इत्यर्थः निरुक्तरूपेणेति । साध्यविधेयकत्वावच्छिन्नपक्षोद्देश्यकत्वादिप्रकारकत्वेनेत्यर्थः। असिद्धसाध्यान्तरेत्यादि ।

## गादाधरी

ननु साध्यविधेयकत्वावच्छिन्नपक्षोद्देश्यकत्वप्रकारकेच्छाया उपादाने पक्षोद्देश्यकत्वावच्छिन्नसाध्यविधेयकत्वप्रकारकेच्छाया असङ्ग्रहः। एवं विषयानुपरक्तानुमितिविषयिण्या अनुमितिर्जायतामितीच्छाया अपि निरुक्तरूपेणासङ्ग्रहः। न च सा असंग्राह्यैव, असिद्धसाध्यान्तरानुमितिसामग्र्यामसत्यां तद्बलादपि सिद्धस्य प्रकृतसाध्यस्यानुमितेः तदिच्छाविषयसिद्ध्यनुरोधेनावश्यकत्वादित्यत आह—यादृशयादृशेति। असत्यां

---

## भावबोधिनी

तत्कालीनसिद्ध्यविषयीभूतं यत् साध्यान्तरं घटादि तद्विषयकानुमितिसामग्र्यामसत्यामित्यर्थः। तस्यां सत्यां तु सिद्ध्यप्रतिबध्याया घटानुमितेरुत्पत्त्यैव तदिच्छाविषयसिद्ध्या तद्बलात् पर्वतो वह्निमानित्यनुमितेरसंभव इति भावः। तद्बलादिति। अनुमितिर्जायतामितीच्छाबलादित्यर्थः। सिद्धस्य प्रकृतसाध्यस्येति। सिद्धिविषयीभूतस्य वह्नेरित्यर्थः।

नन्विच्छानां तत्तद्व्यक्तित्वेनोत्तेजकत्वे मणिकाराणां सिषाधयिषाविरहात्मकविशेषणाभिधानं व्यर्थमित्यत आह—साध्यविशेषेति। तथा च साध्यविधेयकत्वावच्छिन्नपक्षोद्देश्यकत्वप्रकारकानुमितिविशेष्यकेच्छात्वेनानुगतरूपेण साध्यविधेयकपक्षोद्देश्यकानुमितिर्जायतामितीच्छानामुत्तेजकत्वम्, एव पक्षोद्देश्यकत्वावच्छिन्नसाध्यविधेयकत्वप्रकारकानुमितिविशेष्यकेच्छात्वेन पक्षोद्देश्यकसाध्यविधेयकानुमितिर्जायतामित्याकारकेच्छानामुत्तेजकत्वमिति तादृशानुगतरूपावच्छिन्नप्रतियोगिताकाभावद्वयं सिद्धौ विशेषणमिति तात्पर्येण मणिकारैः सिषाधयिषाविरहविशिष्टत्वं निवेशितम्। अनुगतरूपेण निवेशयितुमशक्यानां अनुमितिर्जायतां प्रत्यक्षातिरिक्तज्ञानं जायतामित्यादीच्छानां तु तत्तद्व्यक्तित्वेनैवाभावो निवेशनीय इति विशेषणान्तरपूरणार्थं दीधितिग्रन्थः प्रवृत्त इत्याशयः। अतथाविधानामिति। साध्यविधेयकत्वा-

## गादाधरी

सिद्धौ यत्किञ्चिद्गोचरं ज्ञानं जायतामित्यादीच्छासत्त्वेऽनुमित्युत्पादात् तासाञ्चानुत्तेजकत्वात् सिद्धौ सत्यामिति । तत्तदिच्छाभावसमुदायस्येति । साध्यविशेषविशिष्ट-पक्षविशेषाद्यवगाहित्वप्रकारकेच्छानां तत्तदवगाहित्वप्रकारकानुमितिगोचरेच्छात्वेनानुगमय्य एकैकाभावा निवेश्यन्ते, अतथाविधानाम् अनुमितिर्जायतां प्रत्यक्षान्यज्ञानं

---

## भावबोधिनी

वच्छिन्नपक्षोद्देश्यकत्वप्रकारकानुमितिविषयकेच्छात्वादिरूपानुगतधर्मविरहिणामित्यर्थः । अन्यथा अतिप्रसङ्गादिति । अनुमितित्वप्रकारकेच्छात्वेन अनुमितिर्जायताम् इतीच्छाया उत्तेजकत्वे घटानुमितिसामग्रींदशायामपि वह्न्यनुमितिप्रसङ्गात्, प्रत्यक्षातिरिक्तत्वविशिष्टज्ञानत्वप्रकारकत्वेन प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छाया उत्तेजकत्वे शाब्दसामग्रीकालेऽप्यनुमितिप्रसङ्गादिति ।

सिद्धौ तत्कालीनसिद्धिभेदा एव वेति । यद्यदिच्छासत्त्वे सिद्धौ सत्यामनुमितिः तत्तदिच्छाकालीनसिद्धिभिन्नत्वं वा सिद्धौ विशेषणमिति भावः । एतादृश-पक्षान्तरावलम्बनस्य प्रयोजनमाह–एतेनेति । तथा च तत्तद्व्यक्तित्वावच्छिन्नाभावा एव निवेशनीया इति पूर्वस्मिन् पक्षे तत्तदिच्छाभावो वा निवेशनीयः तत्तदिच्छाकालीनवायुसंयोगविभागादिव्यक्तिविशेषाभावो वा निवेशनीय इति विनिगमनाविरहः । न च उत्तरस्मिन् पक्षेऽपि तत्कालीनवायुसंयोगादिभिन्नत्वंनिवेशमादाय विनिगमनाविरह इति वाच्यम् । सिद्धौ संयोगादिभिन्नत्वस्य सर्वदा सत्त्वेनाव्यावर्तकतया तन्निवेशासंभवादित्याशयः । पूर्वकल्पापेक्षया उत्तरकल्पे लाघवमप्यस्तीत्याह–सामानाधिकरण्यसंबन्धेनेत्यादिना । तत्तदिच्छात्यन्ताभावस्य सिद्धौ सामानाधिकरण्यसंबन्धेनैव विशेषणता, न तु स्वरूपसंबन्धेन । इच्छाकालेऽपि सिद्धौ इच्छात्यन्ताभावस्य स्वरूपसंबन्धेन सत्त्वात् पक्षतानुपपत्तेः । एवमिच्छा-

गादाधरी

जायतामित्याकारकेच्छानान्तु यद्यद्व्यक्तिसत्त्वे सिद्धिदशायां अनुमितिस्तत्तद्व्यक्त्यवच्छिन्नाभावा एव निवेशनीयाः, अन्यथा अतिप्रसङ्गात् सिद्धौ तत्कालीनसिद्धिभेदा एव वा।

एतेन तत्कालीनसंयोगविभागादिव्यक्तिविशेषाभावनिवेशमादाय विनिगमनाविरहोऽपि निरस्तः। सामानाधिकरण्यसंबन्धेन तदत्यन्ताभाववैशिष्ट्यनिवेशापेक्षया तत्तत्सिद्धिभेदानां विशेषणताविशेषसंबन्धेन वैशिष्ट्यनिवेशे प्रतियोगितावच्छेदकसंबन्धानिवेशे च लाघवम्। सिद्ध्युत्तरं तथाविधेच्छोत्पत्तिकालेऽनुमित्यापत्तिस्तु इच्छासाम-

---

भावबोधिनि

कालेऽपि संयोगसंबन्धावच्छिन्नतदभावसामानाधिकरण्यं सिद्धेरस्तीति पक्षतानुपपत्तिः इति समवायसंबन्धावच्छिन्नप्रतियोगिताकाभाव एव निवेशनीयः। सामानाधिकरण्यशरीरे च स्वरूपसमवायौ निवेशनीयाविति गौरवं पूर्वकल्पे। तत्तदिच्छाकालीनसिद्धिभेदस्य तु स्वरूपसंबन्धेनैव निवेशः, प्रतियोगितावच्छेदकसंबन्धश्च न निवेशनीयः, तदात्म्यसंबन्धरूपस्य तस्य भेदस्वरूपान्तर्गतत्वादिति उत्तरकल्पे लाघवमित्याशयः।

ननु तत्तदिच्छाभावस्य सिद्धिविशेषणत्वपक्षे सिद्ध्युत्तरम् इच्छोत्पत्तिकालेऽनुमितिर्न प्रसज्यते, पूर्वक्षणे इच्छाविरहविशिष्टसिद्धिसत्त्वेन तदभावरूपपक्षताविरहात्। तत्तदिच्छाकालीनसिद्धिभेदस्य सिद्धिविशेषणत्वपक्षे तु सिद्धेः एकस्या द्वितीयक्षणे इच्छाकालीनतया इच्छाकालीनसिद्धिभिन्नत्वविरहात् तादृशसिद्धिभिन्नसिद्ध्यभावरूपपक्षतायाः प्रथमक्षणे सत्त्वात् इच्छोत्पत्तिक्षणेऽनुमितिरापद्यते। अतः गौरवे सत्यपि प्रथमपक्ष एव स्वीकार्य इत्यत आह—सिद्ध्युत्तरमिति। तथा च इच्छोत्पत्तिकालेऽनुमित्यापत्तिः द्वितीयपक्षेऽपि इच्छासामग्र्याः अनुमितिप्रतिबन्धकत्वादेव न

गादाधरी

वृथा अनुमितिविरोधित्वादेव न सम्भवतीति ध्येयम् ।

इदन्त्ववधेयम् । तादृशेच्छाभावसमुदायस्य न तत्समुदायत्वेन सिद्धौ विशेषणत्वं तादृशेच्छाभावसमुदायत्वस्य दुर्वचत्वात्, न च तावदभावमात्रविषयकधीविषयत्वं तत्, तावत्त्वस्य दुर्वचत्वात्, तावदभावविषयकबुद्धेस्तत्तदभावविषयकत्वेन निवेशे तु तत्तदभाव-विशिष्टसिद्धेरेव निवेशयितुमुचितत्वात् तत्तदभावानां मिथो विशेष्यविशेषणभावानापन्नानां

---

भावबोधिनी

भवतीति द्वितीयपक्ष एव युक्त इति भावः ।

जगदीशमतं दूषयति—इद त्ववधेयमित्यादिना । अनुगतेच्छानामननुगते-च्छानां च येऽभावास्तत्समुदायविशिष्टसिद्ध्यभावः पक्षतेति एतावता लब्धम् । तत्र तत्समुदायस्य न तत्समुदायत्वेन निवेशः कर्तुं शक्यः । समुदायत्वस्य दुर्वचत्वात् । न च तावदभावमात्रविषयकबुद्धिविशेषविषयत्वं समुदायत्वमिति वाच्यम् । तावत्त्वस्य दुर्वचत्वात् । तस्यापि तादृशबुद्धिविशेषविषयत्वरूपत्वेऽनवस्थानात् । अतस्तत्तद-भावत्वेन तत्तदभावान् विषयीकुर्वाणो यो बुद्धिविशेषः तद्विषयत्वं समुदायत्वमिति-वाच्यम् । एवं च तत्तदभावविषयकबुद्धिविशेषविषयात्मकसमुदायविशिष्टत्वस्य सिद्धौ निवेशनीयतया तदपेक्षया लाघवात् तत्तदिच्छाभावानां तत्तदभावत्वेन सिद्धौ विशेषणत्वमेवोचितमिति । तावन्मात्रेति । घटज्ञानाद्यभावविषयकतत्तदभावविषयक-धियमादाय घटज्ञानकाले सिद्धिकाले अनुमित्यापत्तिः, अतो मात्रपदम् । एतादृश-विषयतायाः पर्याप्त्युपादानान्निर्वाहः इति कृष्णभट्टः । ननु तत्तदिच्छाभावानां तत्तदभावत्वेन सिद्धौ विशेषणत्वं मिथो विशेष्यविशेषणभावानापन्नानां वा, उत तदापन्नानां वा ? आद्ये तत्तदभावरूपावच्छेदकभेदेन सिद्धिनिष्ठप्रतिबन्धकतानामा-नन्त्यमिति द्वितीयपक्षमवलम्बते—तत्तदभावानां मिथ इति । ननु एकविशिष्टापरत्वेन

गादाधरी

निवेशे च प्रत्येकाभाववैशिष्ट्यस्यातिप्रसक्तत्वेनावच्छेदकत्वायोगादिति चेदेकविशिष्टापराभावत्वेनाभावानां निवेशनीयत्वात्। किन्तु तत्तदभावत्वेनैव युगपत्तावदभावानां तथात्वं तावदभावमात्रविषयकधीविषयत्वरूपस्य तावदभावसमुदायत्वस्य ताद्रूप्येण निवेशे तावदभावानां तत्तदभावत्वेन निवेशनीयतया तत्तदभावत्वेन तत्तदभाववैशिष्ट्यनिवेशापेक्षया महागौरवात्। तादृश्या यत्किञ्चिद्धियस्तत्तद्व्यक्तित्वेन निवेशे तथाविधधीसहस्रस्य विनिगमनाविरहेण निवेशप्रसङ्गात्।

---

भावबोधिनी

तत्तदभावानां निवेशे मिथोविशेष्यविशेषणभावे विनिगमनाविरहात् अनन्ताः विशिष्टाभावा निवेशनीया इति महद्गौरवमित्यत आह—तत्र चेति। तत्तदभावविषयकधीविषयत्वेनाभावानां सिद्धौ विशेषणत्वपक्षेऽपि अवच्छेदकतावच्छेदकानां तत्तदभावानां भेदात् प्रतिबन्धकताभेद आवश्यक इति एकविशिष्टापराभावत्वेनैव बुद्धौ विशेषणत्वं वाच्यम्। तदपेक्षया एकविशिष्टापराभावत्वेन सिद्धिविशेषणत्वमेवाभावानामुचितमिति भावः। ननु तत्तदिच्छाभावानामेकविशिष्टापरत्वेन सिद्धौ निवेशेऽपि विशेष्यविशेषणभावे विनिगमनाविरहेणानन्ता विशिष्टाभावा निवेशनीयाः। तत्र च विशिष्टाभावरूपाणामवमच्छेदकानां भेदेन सिद्धिप्रतिबन्धकताभेदापत्तिरिति कथमेतदिति चेत्—उच्यते। एकविशिष्टापराभावानां सर्वेषां समनियततया एकत्वेन नावच्छेदकभेद इत्यत्र तात्पर्यमिति न किंचिदाकुलमिति।

इदं पुनरत्रावलोकनीयमित्यादि। कासांचिदिच्छानाम् अनुगतरूपावच्छिन्नानां अभावाः सिद्धौ विशेषणम्। कासांचित्तु तत्तद्व्यक्तित्वावच्छिन्नानामभावाः विशेषणमिति एतावता सिद्धम्। तत्रानुगतरूपावच्छिन्नानां निवेशे दोषमुद्घाटयति—वह्निविशिष्टेत्यादिना। यत्र पर्वतो वह्निव्याप्यधूमवान् वह्निमांश्चेति सिद्ध्यात्मक-

## गादाधरी

यदि च मिथो विशेष्यविशेषणभावानापन्नेषु नानाविशेषणेषु व्यासज्यवृत्ति एकमवच्छेदकत्वं सिद्धान्तविरुद्धमिति मन्यते तदा एकाभावविशेषितापराभावस्यावच्छेदकत्वमुपेयम् । तत्र च विशेष्यविशेषणभावे विनिगमनाविरहेऽपि न क्षतिः गत्यन्तराभावात् । तत्तदभावमात्रविषयकधीविषयत्वेन निवेशेऽपि ज्ञाने तत्तदभावविषयितानां एकविशिष्टापरत्वेनैव निवेशनीयतया विशेष्यविशेषणभावे विनिगमनाविरहस्याऽऽवश्यकत्वादिति । इच्छाया अननुगमेऽपि । एकरूपेण सर्वासामिच्छानामुपादानासम्भवेऽपि

---

## भावबोधिनी

परामर्शः वह्निविशिष्टपर्वतमहानसोभयविषयकानुमितिर्जायतामितीच्छा चास्ति तत्र पर्वतो वह्निमानित्यनुमितिर्न जायते, उभयविषयकानुमितेरेवेच्छाविषयतया तदुत्पत्त्यैव विषयसिद्धिसंभवात् । नापि पर्वतो महानसश्च वह्निमानिति अनुमितिः, महानसो वह्निव्याप्यवानिति परामर्शविरहादिति स्थितिः । यदि तु पर्वतो वह्निमानित्यनुमितौ वह्निविशिष्टपर्वतविषयकत्वप्रकारकानुमितिविशेष्यकेच्छात्वेन उत्तेजकत्वं स्यात्, तदा वह्निविशिष्टपर्वतमहानसोभयानुमितिर्जायतामितीच्छाया अपि तादृशरूपाक्रान्ततया उत्तेजकत्वात् उक्तस्थले पर्वतो वह्निमानित्यनुमित्यापत्तिरित्यर्थः । महानसपक्षकानुमितिसामग्र्यां सत्यां तु वह्निविशिष्टपर्वतमहानसोभयानुमितेरिष्टत्वात् महानसपक्षकानुमितिसामग्र्यामसत्यामित्युक्तम् ।

ननु तत्साध्यविशिष्टतत्पक्षविषयकत्वान्ययत्किंचिद्विषयकत्वाप्रकारकानुमितिनिष्ठविषयताकत्वेनेच्छाया निवेशात् नोक्तापत्तिः । वह्निविशिष्टपर्वतमहानसोभयानुमितिर्जायतामितीच्छायाः वह्निविशिष्टपर्वतविषयकत्वान्यमहानसविषयकत्वप्रकारकत्वेनानुत्तेजकत्वादित्यत्राह—अनुमित्यंश इति । पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति सिद्ध्यात्मकपरामर्शकाले वह्निविशिष्टं पर्वतं महानसं चानुमिनुयामित्याकारकसमूहा-

## गादाधरी

न क्षतिः। न सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यानुमितिहेतुत्वानुपपत्तिः। तावद-भावविशिष्टसिद्ध्यभावस्यानुगतत्वादिति भावः।

इदं पुनरत्रावलोकनीयम। वह्निविशिष्टपर्वतमहानसोभयानुमितिर्जायतामित्याकारकेच्छानामपि तत्साध्यविशिष्टतत्पक्षावगाहित्वप्रकारकतया पर्वते वह्नेः सिद्धिकाले महानसपक्षकानुमित्यादिसामग्र्यामसत्यां तादृशेच्छाबलात् पर्वते वह्न्यनुमित्यापत्तिः, अनुमित्यंशे तत्साध्यविशिष्टतत्पक्षविषयकत्वान्यकिञ्चिद्विषयकत्वाप्रकारकत्वविशेषणस्य

---

## भावबोधिनी

लम्बनेच्छासत्त्वे पर्वतो वह्निमानित्यनुमितिरिष्यते। तदिच्छायाः वह्निविशिष्टपर्वतविषयकत्वान्यमहानसविषयकत्वप्रकारकतया अनुत्तजकत्वेऽनुमितिर्न स्यात् इति भावः। ननु तत्साध्यविशिष्टतत्पक्षविषयकत्वान्ययत्किंचिद्विषयकत्वरूपप्रकारानवच्छिन्नानुमितिनिष्ठविषयताकत्वेनेच्छाया उत्तेजकत्वे न कोऽपि दोषः। वह्निविशिष्टपर्वतमहानसोभयानुमितिर्जायतामित्याकारकेच्छीयानुमितिनिष्ठविषयतायाः वह्निविशिष्टपर्वतविषयकत्वान्यमहानसविषयकत्वरूपप्रकारावच्छिन्नत्वात् न तस्या उत्तेजकत्वम्। एकस्या एव विशेष्यतायाः प्रकारद्वयावच्छिन्नत्वात्। वह्निविशिष्टं पर्वतं महानसं चानुमिनुयामिति समूहालम्बनेच्छायां तु प्रकारताभेदेन विशेष्यताभेदात् वह्निमत्पर्वतविषयकत्वरूपप्रकारावच्छिन्नायाम् अनुमितिनिष्ठविशेष्यतायां तदन्यप्रकारानवच्छिन्नत्वसत्त्वात् तदिच्छाया उत्तेजकत्वोपपत्तिश्चेत्यत्राह वह्निविशिष्टेति। वह्निविशिष्टपर्वतविषयिणी महानसाविषयकानुमितिभिन्नानुमितिर्जायतामितीच्छायां अनुमितिनिष्ठविषयतायाः वह्निविशिष्टपर्वतविषयत्वादन्यः यः महानसाविषयकानुमितिभिन्नत्वरूपो धर्मः तदवच्छिन्नत्वेऽपि तदन्य-यत्किंचिद्विषयकत्वानवच्छिन्नत्वमस्तीति तदिच्छायाः उत्तेजकत्वापत्तिरित्यर्थः। उक्तेच्छायाः-पर्वतो महानसश्च

## गादाधरी

इच्छायां निवेशे वह्निविशिष्टं पर्वतं महानसञ्चानुमिनुयामित्यादिसमूहालम्बनेच्छाया असंग्रहप्रसङ्गः। वह्निविशिष्टपर्वतविषयिणी महानसाविषयकानुमितिभिन्नानुमितिर्जायतामित्याकारकेच्छाबलात् उपदर्शितस्थलेऽतिप्रसङ्गस्याशक्यवारणता चेतीच्छाविषयतावच्छेदकतायाः पर्याप्तिनिवेशनमावश्यकम्। तथा च वह्निविशिष्टपर्वतानुमितिर्भवत्वित्यादीच्छायास्तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वपर्याप्तविषयतावच्छेदकताकेच्छात्वेनैव उत्तेजकत्वं पर्यवसितम्, अनुमितित्वानन्तर्भावे तादृशेच्छायास्तत्साध्य-

---

## भावबोधिनी

वह्निमान् इत्यनुमित्युत्पत्त्यैव विषयसिद्धेः केवलपर्वतोद्देश्यकवह्न्यनुमितावनुत्तेजकत्वान्नेष्टापत्तिरिति भावः।

तथा चेत्यादि। वह्निविशिष्टपर्वतविषयकानुमितिर्भवत्वितीच्छायाः वह्निविशिष्टपर्वतविषयकानुमितित्वपर्याप्तावच्छेदकताकविषयताकेच्छात्वेनोत्तेजकत्वं वाच्यम्। वह्निविशिष्टपर्वतमहानसोभयानुमितिर्जायतामितीच्छायाः न वह्निविशिष्टपर्वतविषकानुमितित्वपर्याप्तावच्छेदकताकविषयताकत्वम्, तदिच्छाविषयतावच्छेदकतायाः महानसविषयकत्वेऽपि सत्त्वात् तादृशेच्छायाः पर्वते वह्न्यनुमितावुत्तेजकत्वविरहान्न दोषः। वह्निविशिष्टं पर्वतं महानसं चानुमिनुयामिति समूहालम्बनेच्छायाः विषयताद्वयमस्ति। तत्र वह्निविशिष्टपर्वतविषयकत्वावच्छिन्नायामनुमितिनिष्ठायां विषयतायां वह्निविशिष्टमहानसविषयकत्वं नावच्छेदकमिति वह्निविशिष्टपर्वतविषयकानुमितित्वपर्याप्तावच्छेदकताकविषयताकत्वं तादृशेच्छायामस्तीति तस्याः उत्तेजकत्वनिर्वाहः। वह्निविशिष्टपर्वतविषयिणी महानसाविषयकानुमितिभिन्नानुमितिर्जायतामितीच्छायाः विषयतावच्छेदकता महानसाविषयकानुमितिभिन्नत्वेऽपि पर्याप्तेति वह्निविशिष्टपर्वतविषयकत्वमात्रपर्याप्तावच्छेदकताकविषयताकत्वविरहान्न तस्या उत्तेजकत्वापत्तिः। एवं

गादाधरी

विशिष्टतत्पक्षविषयकत्वपरिसमाप्तविषयतावच्छेदकताकत्वाभावेनाशक्यसङ्ग्रहत्वात् । एवञ्चानुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुमितिविषयकत्वरूपेण सङ्ग्रहाभिधानमसङ्गतम् ।

न च तत्कल्पं परित्यज्यैव यादृशयादृश इत्याद्यभिधानम्, इदानीमनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानां पृथक् पृथगभावनिवेशनमेवाभिप्रेतमिति वाच्यम् । पक्षान्तरसूचकवाकाराद्यभावात् ।

अथ अनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुगम एव सम्भवति

---

भावबोधिनी.

च पर्याप्तिनिवेशस्यावश्यकत्वे सति अवच्छेदककोटावनुमितित्वस्यापि प्रवेश आवश्यकः । अन्यथा वह्निविशिष्टपर्वतविषयकत्वपर्याप्तावच्छेदकताकत्वेनेच्छाया उत्तेजकत्वे वह्निविशिष्टपर्वतविषयकानुमितिर्जायतामितीच्छायाः संग्रहो न स्यात् । अनुमितित्वेऽपि विषयतावच्छेदकतायाः पर्याप्तत्वात् । इत्थं चानुमितित्वाप्रकारिकाणां प्रत्यक्षातिरिक्तज्ञानं जायतामित्यादीच्छानां संग्रहो न भवति, तासां वह्निविशिष्टपर्वतविषयकत्वविशिष्टप्रत्यक्षातिरिक्तज्ञानत्वपर्याप्तावच्छेदकताकविषयताकत्वेऽपि तादृशानुमितित्वपर्याप्तावच्छेदकताकविषयताकत्वविरहात् । एवं च अनुमितित्वाप्रकारिकायामपीत्यादिदीधितिग्रन्थो न संगच्छत इति भावः ।

न च तत्कल्पं परित्यज्यैवेत्यादि । अनुगतरूपेणेच्छाया उत्तेजकत्वं न संभवतीत्यालोच्यैव पृथक् पृथक् इच्छानामुत्तेजकत्वमिति प्रश्नः । समाधानं तु पक्षान्तरसूचकवाकाराद्यभावात् इति । तथा च वाकाराद्यभावात् पूर्वं संगृहीतानामिच्छानामेव प्रकारान्तरेणोत्तेजकत्वं यादृशयादृशेत्यादिनोच्यत इत्येतन्न संगच्छते । पूर्वं च संग्रहाभिधानमुक्तयुक्त्या असंगतमेवेति भावः ।

## गादाधरी

तथा हि तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वपर्याप्तावच्छेदकताकत्वं तादृशधर्मघटकपरिसमाप्तावच्छेदकताकत्वं तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकत्वमेव पर्यवसितम्, एवञ्च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रत्यक्षान्यज्ञानत्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकेच्छात्वादिना प्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानां पृथगुत्तेजत्वापेक्षया निरुक्तधर्मसंघटकानु-

---

## भावबोधिनी

अथानुमितित्वेत्यादि। तथा च वह्निविशिष्टपर्वतविषयकानुमितिर्जायताम्, वह्निविशिष्टपर्वतविषयकप्रत्यक्षातिरिक्तज्ञानं जायतामित्यादीच्छानां वह्निविशिष्टपर्वतविषयकानुमितित्वपर्याप्तावच्छेदकताकविषयताकेच्छात्वेनैवोत्तेजकत्वम्। तत्र पर्याप्तत्वमधिकवारकपर्याप्तिरूपम्। वह्निविशिष्टपर्वतविषयकानुमितित्वघटकधर्मेषु परिसमाप्ता अर्थात् तद्घटकधर्मेष्वपर्याप्ता या अवच्छेदकता तन्निरूपकविषयतानिरूपकेच्छात्वेनोत्तेजकत्वमिति यावत्। वह्निविशिष्टपर्वतविषयकत्वनिष्ठावच्छेदकताभिन्ना अनुमितित्वनिष्ठावच्छेदकताभिन्ना च यावच्छेदकता तदनिरूपकविषयताकेच्छात्वेनोत्तेजकत्वमिति पर्यवसितम्।

न चैवमपि वह्निविशिष्टपर्वतविषयकप्रत्यक्षातिरिक्तज्ञानं जायतामितीच्छायाः वह्निविशिष्टपर्वतविषयकत्वनिष्ठावच्छेदकताभिन्ना अनुमितित्वनिष्ठावच्छेदकताभिन्ना च या प्रत्यक्षातिरिक्तज्ञानत्वनिष्ठावच्छेदकता तन्निरूपकविषयताकत्वेन तदनिरूपकविषयताकेच्छात्वविरहात् कथं संग्रहः। तथा च तस्याः वह्निविशिष्टपर्वतविषयकत्वनिष्ठावच्छेदकताभिन्नप्रत्यक्षातिरिक्तज्ञानत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकेच्छात्वेन पृथगेवोत्तेजकत्वस्य वाच्यतया एकरूपेणोत्तेजकत्वासंभव इति वाच्यम्। वह्निविशिष्टपर्वतविषयकत्वनिष्ठावच्छेदकताभिन्ना अनुमितित्वनिष्ठावच्छे-

गादाधरी

मितित्वनिष्ठावच्छेदकताभिन्नावच्छेदकतायामेव प्रत्यक्षान्यज्ञानत्वादिनिष्ठावच्छेदकताभिन्नत्वनिवेशनमुचितं लाघवात्, इत्थञ्च तादृशरूपेणैव प्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामपि सङ्ग्रहः सम्भवति।

न च वह्निविशिष्टपर्वतविषयकं जायतामित्याकारकेच्छायाः सिद्ध्यधीनसंस्कारोत्पत्त्यैव चरितार्थतया वारणाय विषयतायामनुमितित्वावच्छिन्नत्वनिवेशनस्याऽऽवश्यकतया न तत्सङ्ग्रह इति वाच्यम्। समवायेन किञ्चिदवच्छिन्नत्वं निवेश्यैव

---

भावबोधिनी

दकताभिन्ना प्रत्यक्षातिरिक्तज्ञानत्वनिष्ठावच्छेदकताभिन्ना च या अवच्छेदकता तदनिरूपकविषयताकत्वेन द्वयोरिच्छयोः क्रोडीकारसंभवात् इति भावः।

तत्साध्यविशिष्टतत्पक्षविषयकेत्यादि। तत्साध्यविधेयकत्वावच्छिन्नतत्पक्षोद्देश्यताकत्वानुमितित्वपर्याप्तावच्छेदकताकत्वमित्यर्थः। निरुक्तधर्मघटकेति। तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वघटकं यत् अनुमितित्वं तन्निष्ठावच्छेदकताभिन्नायामवच्छेदकतायामित्यर्थः। तादृशरूपेणैवेति। तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वप्रत्यक्षातिरिक्तज्ञानत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकत्वेनेत्यर्थः।

न च वह्निविशिष्टपर्वतविषयकमिति। तथा च यत्र सिद्ध्यात्मकपरामर्शः वह्निविशिष्टपर्वतविषयकं जायतामितीच्छा च वर्तते तत्रापि वह्निमान् पर्वत इत्यनुमित्यापत्तिः तादृशेच्छाया अप्युत्तेजकत्वापत्तिरिति यावत्। तादृशेच्छाविषयता हि वह्निविशिष्टपर्वतविषयकत्वावच्छिन्ना न तदितरधर्मावच्छिन्नेति तस्याः वह्निविशिष्टपर्वतविषयकत्वानुमितित्वप्रत्यक्षातिरिक्तज्ञानत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकत्वसत्त्वात् उत्तेजकत्वापत्तिः। न चेष्टापत्तिरिति वाच्यम्।

## गादाधरी

तादृशच्छावारणसम्भवादिति चेत् ; तर्हि पक्षांशे साध्यावगाहित्वेनानुमितिविषयकेच्छानामुक्तरूपसमशीलरूपान्तरेण उत्तेजकत्वापेक्षया तादृशावच्छेदकतायामेव पक्षांशे साध्यावगाहित्वीयावच्छेदकताभिन्नत्वमपि निवेश्यतां, तावतैव तत्सङ्ग्रहस्यापि सम्भवात् इच्छाया अननुगमाभिधानासङ्गतिः।

न च विषयतायां साध्यविशिष्टपक्षावगाहित्वाद्यवच्छिन्नत्वनिवेशनमावश्यकम्,

---

## भावबोधिनी

सिद्ध्यप्रतिबध्यस्य सिद्ध्यधीनस्य वह्निविशिष्टपर्वतविषयकस्य संस्कारस्य उत्पत्त्यैव इच्छाया विषयसिद्धेः। इत्थं च तादृशेच्छाया वारणाय विषयतायामनुमितित्वावच्छिन्नत्वं निवेशनीयमिति प्रत्यक्षातिरिक्तज्ञानं जायतामितीच्छायाः अनुमितित्वावच्छिन्नविषयतानिरूपकत्वविरहात् कथं सङ्ग्रह इति भावः। यद्यपि पर्वतो वह्निमानिति सिद्ध्यनन्तरं वह्निविशिष्टपर्वतविषयकं जायतामितीच्छा न संभवति, विषयसिद्धेरिच्छाप्रतिबन्धकत्वात् तथापि सिद्धेरुक्तेच्छायाश्च युगपदुत्पत्तिस्थलमभिप्रेत्यैतदुक्तमिति मन्तव्यम्। न तत्संग्रह इति। प्रत्यक्षातिरिक्तज्ञानं जायतामितीच्छायाः न संग्रह इत्यर्थः। समवायेन किंचिदवच्छिन्नत्वमिति। समवायसंबन्धावच्छिन्नकिंचिन्निष्ठावच्छेदकतानिरूपकत्वं विषयतायां निवेश्यते। वह्निविशिष्टपर्वतविषयकं जायतामितीच्छाविषयतायाः स्वरूपसंबन्धेन पर्वतविषयकत्वावच्छिन्नत्वेऽपि समवायेन किंचिदवच्छिन्नत्वं नास्तीति तदिच्छायाः वारणम्। प्रत्यक्षातिरिक्तज्ञानं जायतामितीच्छायाः समवायेन ज्ञानत्वावच्छिन्नविषयताकत्वात् संग्रहः। एवं च वह्निविशिष्टपर्वतविषयकत्वानुमितित्वप्रत्यक्षातिरिक्तज्ञानत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकसमवायसंबन्धावच्छिन्नकिंचिन्निष्ठावच्छेदकतानिरूपकविषयतानिरूपकेच्छात्वेनानुगमान्न कोऽपि दोष इति भावः। निवेश्यैवेति। एवकारेण अनुमितित्वा-

## गादाधरी

अन्यथा अन्यानुमितिसामग्रीसमवाहितानामनुमितिर्जायतामित्याकारकविषयविशेषानुपरक्तानुमितीच्छानां वारणासम्भवादिति, अन्यानुमितिसामग्र्यसमवहिततादृशेच्छानां तत्तद्व्यक्तित्वेनैवोत्तेजकत्वस्योपगन्तव्यतया उत्तेजकानामननुगमाभिधानसङ्गतिरिति वाच्यम् । तादृशेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकतयैवातिप्रसङ्गवारणसम्भवेन तासां

---

## भावबोधिनी

वच्छिन्नत्वनिवेशव्यवच्छेदः । तादृशेच्छावारणसंभवादिति । वह्निविशिष्टपर्वतविषयकं जायतामितीच्छावारणसंभवादित्यर्थः । तर्हि पक्षांशे इति । पक्षोद्देश्यकसाध्यविधेयकानुमितिर्जायतामित्याकाराणां पक्षोद्देश्यकत्वावच्छिन्नसाध्यविधेयकत्वावच्छिन्नानुमितिनिष्ठविषयताकेच्छानामित्यर्थः । तत्साध्यविधेयकत्वावच्छिन्नतत्पक्षोद्देश्यकत्वप्रकारकेच्छायाः सिषाधयिषापदेनोपादाने तत्पक्षोद्देश्यकत्वावच्छिन्नतत्साध्यविधेयकत्वप्रकारकेच्छायाः असंग्रह इत्यालोच्य हि यादृशयादृशेत्यादिदीधितिग्रन्थः प्रवृत्तः । तेन च तादृशेच्छायाः पृथग्रूपेणैवोत्तेजकत्वं बोधितम् । यदि तु अधिकावारकपर्याप्तिनिवेशेन तत्साध्यविधेयकतत्पक्षोद्देश्यकत्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकत्वेनोत्तेजकत्वमिष्यते तर्हि विषयतावच्छेदकतायां तत्पक्षोद्देश्यकत्वावच्छिन्नतत्साध्यविधेयकत्वनिष्ठावच्छेदकताभिन्नत्वमपि निवेश्य तत्साध्यविधेयकतत्पक्षोद्देश्यकत्वनिष्ठावच्छेदकताभिन्ना तत्पक्षोद्देश्यकतत्साध्यविधेयकत्वनिष्ठावच्छेदकताभिन्ना अनुमितित्वनिष्ठावच्छेदकताभिन्ना प्रत्यक्षातिरिक्तज्ञानत्वनिष्ठावच्छेदकताभिन्ना च यावच्छेदकता तदनिरूपकविषयताकेच्छात्वेन उक्तेच्छानामनुगमसंभवादननुगमाभिधानं दीधितिकृतामसंगतमिति भावः ।

उक्तरूपसमशीलरूपान्तरेणेति । उक्तरूपं—तत्साध्यविधेयकत्वावच्छिन्नतत्पक्षोद्देश्यकत्वम् । रूपान्तरम्—तत्पक्षोद्देश्यकत्वावच्छिन्नतत्साध्यविधेयकत्वम् । तादृशावच्छे-

## भावबोधिनी

**दकतायामिति ।** तत्साध्यविधेयकतत्पक्षोद्देश्यकत्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकतायामित्यर्थः । **पक्षांशे साध्यावगाहित्वीयावच्छेदकताभिन्नत्वमिति ।** पक्षोद्देश्यकत्वावच्छिन्नसाध्यविधेयकत्वनिष्ठावच्छेदकताभिन्नत्वमित्यर्थः ।

**न च विषयतायामित्यादि ।** उक्तरीत्या तत्साध्यविधेयकत्वावच्छिन्नतत्पक्षोद्देश्यकत्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकानुमितिनिष्ठविषयताकेच्छात्वेनानुगमे कृतेऽपि यत्र पर्वतो वह्निमान् घटव्याप्यघटसंयोगवांश्चेति समूहालम्बनपरामर्शानन्तरं अनुमितिर्जायतामितीच्छा वर्तते तत्रापि पर्वतो वह्निमानित्याकारकानुमित्यापत्तिः । तादृशेच्छायाः तत्साध्यविशिष्टतत्पक्षोद्देश्यकत्व अनुमितित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकेच्छात्वेन उत्तेजकत्वात् । न चेष्टापत्तिः, सिद्ध्यप्रतिबध्यघटानुमित्युत्पत्त्यैव तादृशेच्छाविषयसिद्धेरिति घटानुमितिसामग्रीसमवहिताया अनुमितिर्जायतामितीच्छायाः उत्तेजकत्ववारणाय उत्तेजकतावच्छेदकरूपघटकानुमितिनिष्ठविषयतायां तत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नत्वं निवेशनीयम् अनुमितिर्जायतामितीच्छायाः अनुमितित्वावच्छिन्नविषयताकत्वेऽपि तत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नविषयताकत्वाभावात् नोत्तेजकत्वापत्तिः । इत्थं च यत्र घटानुमितिजनकपरामर्शं विना पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च इति परामर्शो वर्तते अनुमितिर्जायतामितीच्छा च वर्तते तत्र पर्वतो वह्निमान् इत्यनुमितिर्न स्यात् । तस्या इच्छाया विषयविशेषाविशेषितानुमितिविषयिण्याः तत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नानुमितिनिष्ठमिषयताकत्वविरहात् इति तस्याः तत्तद्व्यक्तित्वेन पृथगेवोत्तेजकत्वस्य वक्तव्यतया इच्छाया अननुगमाभिधानं संगच्छत इति भावः । **अन्यानुमितिसामग्री घटानुमितिजनकपरामर्शः । तादृशेच्छानामिति ।** अन्यानुमितिसामग्रीसमवहितानामनुमितिर्जायतामित्यादीच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वाङ्गीकारेण तत्तद्दशायां पर्वतो वह्निमानित्याकारकानुमितेर्वारणसंभवात् तदर्थं विषयतायां

## गादाधरी

वारणानौचित्यात् । साध्यविशिष्टपक्षावगाहित्वावच्छिन्नत्वमधिकमनुमितिनिष्ठविषयतायां निवेश्य दर्शितसामग्र्यसमवहिततथाविधेच्छानां तत्तद्व्यक्तित्वेन उत्तेजकताकल्पने तत्तदिच्छाभावानां विशेष्यविशेषणभावे विनिगमनाविरहेण गौरवप्रसङ्गात् । अन्यानुमितिसामग्रीकालीनतादृशेच्छानां प्रतिबन्धकत्वे तत्कालीनवायुसंयोगादिव्यक्तीनां विनिगमनाविरहेण प्रतिबन्धकताप्रसङ्गवत् तादृशसामग्र्यभावकालीनतथाविधेच्छानां उत्तेज-

---

## भावबोधिनी

तत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नत्वं न निवेशनीयम् । इत्थं चान्यानुमितिसामग्र्यसमवहितायाः अनुमितिर्जायतामितीच्छायाः पूर्वोक्तानुगतरूपेणैवोत्तेजकत्वसंभवात् अननुगमाभिधानासंगतिस्तदवस्थेति भावः । अतिप्रसङ्गः— अन्यानुमितिसामामग्रीदशायां पर्वतो वह्निमानित्यनुमित्यापत्तिः । वारणानौचित्यात् स्थितस्य अनुगतरूपेणोत्तेजकत्वस्य वारणं नोचितमिति भावः ।

ननु अन्यानुमितिसामग्र्यसमवहितानामनुमितिर्जायतामित्यादीनामिच्छानां तत्तद्व्यक्तित्वेनोत्तेजकत्वं मयोच्यते । त्वया तु अन्यानुमितिसामग्रीसमवहितानां तादृशेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वमुच्यते । तथा चोभयोः साम्यमित्यत्राह साध्यविशिष्टपक्षेत्यादि । उत्तेजकत्ववादिमते अनुमितिनिष्ठविषयतायां साध्यविशिष्टपक्षविषयकत्वावच्छिन्नत्वं निवेश्यते तत्तद्व्यक्तित्वेनोत्तेजकत्वं चोच्यत इति गौरवम् । प्रतिबन्धकत्ववादिमते तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वमुच्यते, अनुमितिनिष्ठविषयतायां साध्यविशिष्टपक्षविषयकत्वावच्छिन्नत्वं न निवेश्यत इति लाघवमिति भावः ।

नन्वन्यानुमितिसामग्रीकालिकानुमितिर्जायतामित्यादीच्छानां तत्तद्व्यक्तित्वेन

### गादाधरी

कतामतेऽपि विनिगमनाविरहेण तत्तदिच्छाकालीनसंयोगविशेषणामुत्तेजकताप्रसङ्गस्य दुर्वारत्वात् । अथ वोक्तानुगतरूपेणोत्तेजकीभूतायामिच्छायामनुमितिर्जायतामित्याकारकान्यानुमितिसामग्रीसमवहितेच्छाव्यक्तीनां भेदा एव विशेषणीयाः न तु तासामनुमतिप्रतिबन्धकत्वमिति, तत्तदिच्छाभेदनिवेशस्थले तत्कालीनवायुसंयोगादिभेदनिवेशनेन नोपपत्तिः इच्छायां तत्तद्भेदस्याव्यावर्तकत्वात्तत्संयोगाभावानां वैशिष्ट्यनिवेशे च तादृशवैशिष्ट्यस्य सामानाधिकरण्यरूपतया साक्षात्संबन्धेन इच्छाभेदनिवेशे लाघवस्यैव विनिगमकत्वात् ।

---

### भावबोधिनी

प्रतिबन्धकत्वमते विनिगमनाविरहात् तदिच्छाकालिकवायुसंयोगादिव्यक्तीनामपि तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वप्रसङ्ग इत्याशङ्क्य अन्यानुमितिसामग्र्यसमवहितताद‍ृशेच्छानां तत्तद्व्यक्तित्वेनोत्तेजकत्वमतेऽपि विनिगमनाविरहात् तदिच्छाकालिकवायुसंयोगादिव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकताप्रसङ्गः समानः इति समाधत्ते- अन्यानुमितिसामग्रीत्यादिना । अथवेत्यादि । तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकानुमितिनिष्ठविषयतानिरूपकेच्छायां अनुगतरूपेणोत्तेजिकायां घटाद्यनुमितिसामग्रीकालीनानुमितिर्जायतामित्याकारकेच्छाव्यक्तिभिन्नत्वं निवेश्य ताद‍ृशेच्छादशायां पर्वतो वह्निमानित्यनुमितिर्वारणीया । तथा च तत्तद्व्यक्तित्वेन तासां प्रतिबन्धकत्वं नोच्यते । न चात्र पक्षेऽपि ताद‍ृशेच्छाव्यक्तिभिन्नत्वं निवेशनीयम्, ताद‍ृशेच्छाकालीनवायुसंयोगादिभिन्नत्वं वा निवेशनीयामिति विनिगमनाविरह इति वाच्यम् । उत्तेजकेच्छायां वायुसंयोगभिन्नत्वस्य सर्वदा सत्त्वेन वायुसंयोगकालेऽपि उत्तेजकत्वापत्त्या तन्निवेशासंभवेन विनिगमनाविरहाप्रसक्तेः । न च तथापि उत्तेजकेच्छायां अन्यानुमितिसामग्रीकालिकेच्छाभिन्नत्वं निवेश्यताम् । अथ वा ताद‍ृशेच्छाकालिकवाय्वात्मसंयोगा-

गादाधरी

अत्राहुः। उक्तसकलेच्छानां निरुक्तरूपेणानुगमेऽपि एतत्क्षणानन्तरक्षणेऽनुमितिर्भवत्वित्याकारकेच्छानामेव निरुक्तरूपेणासंग्रहात्तत्तद्व्यक्तित्वेन पृथगभावा निवेशनीयाः तादृशक्षणवृत्तित्वाद्यवच्छेदताभेदं उक्तावच्छेदकतायां निवेश्य सङ्ग्रहे कालान्तरेऽपि तथाविधेच्छाबलात् अनुमित्यापत्तिः, कालान्तरे अनुमित्युत्पत्त्या च तादृशानुमित्साविषयासिद्धेरिष्टापत्त्ययोगादित्यननुगमाभिधानसङ्गतिः।

न च कालान्तरीणतादृशेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकतया तादृशे-

---

भावबोधिनी

भाववैशिष्ट्यं वा निवेश्यतामिति विनिगमनाविरह इति वाच्यम्। वायुसंयोगाभाववैशिष्ट्यं हि सामानाधिकरण्यसंबन्धेन वाच्यम्। तदपेक्षया स्वरूपसंबन्धेन इच्छाभेदवैशिष्ट्यनिवेशे लाघवस्यैव विनिगमकत्वात्। इत्थं च तत्तद्व्यक्तित्वेनोत्तेजकतामते गौरवं दुर्वारमिति इच्छानामननुगमाभिधानं दीधितिकृतामसंगतमेवेति पूर्वपक्षः।

सिद्धान्तमाह—अत्राहुरित्यादिना। प्रत्यक्षान्यत् ज्ञानं जायताम्, अनुमितिर्जायताम्, साध्यविधेयकपक्षोद्देश्यकानुमितिर्जायताम्, पक्षोद्देश्यकसाध्यविधेयकानुमितिर्जायताम् इत्यादीच्छानां तत्साध्यविधेयकत्वविशिष्टतत्पक्षोद्देश्यकत्वप्रत्यक्षातिरिक्तज्ञानत्वानुमितित्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकेच्छात्वेनानुगमे कृतेऽपि यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति सिद्ध्यात्मकपरामर्शानन्तरं एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामितीच्छा वर्तते तत्र पर्वतो वह्निमानित्यनुमितिर्न स्यात्। तादृशेच्छायाः अनुमितित्वादिनिष्ठावच्छेदकताभिन्नएतत्क्षणानन्तर वृत्तित्वनिष्ठावच्छेदकतानिरूपकविषयताकत्वेन तदनिरूपकविषयताकत्वाभावादुत्तेजकत्वविरहात्। न चानुमितित्वादिनिष्ठावच्छेदकताभिन्नायामवच्छेदकतायाम् एतत्क्षणा-

## गादाधरी

च्छाबलादनुमित्यापत्तिवारणसम्भव इति वाच्यम् । उपदर्शितैकैकधर्मप्रकारकैकानुमितसाव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकत्वापेक्षया तत्समानप्रकारककालान्तरीणबहुतरेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वे गौरवात् ।

न चैवमपि प्राथमिकस्य साध्यविशिष्टपक्षविषयित्वप्रकारकत्वविशेषणस्याभिधानासङ्गतिर्दुर्वारैवेति वाच्यम् । अनुमितिनिष्टविषयतायां साध्यविशिष्टपक्षविषयकत्वाद्यन्यप्रकारानवच्छिन्नत्वनिवेश एव तत्तात्पर्यात् ।

---

## भावबोधिनी

नन्तरक्षणवृत्तित्वनिष्ठावच्छेदकताभिन्नत्वं निवेश्य एतत्क्षणानन्तरक्षणवृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकताकत्वानिरूपकविषयताकत्वेन तस्या उत्तेजकत्वं संपादनीयमिति वाच्यम् । तथा सति तादृशेच्छायाः विषयो यः क्षणः तदन्यक्षणोत्तरमपि तादृशेच्छाबलात् अनुमित्यापत्तेः । तथा च तादृशेच्छायाः नानुगतरूपेणोत्तेजकत्वम् । अपि तु तत्तद्व्यक्तित्वेनेत्यननुगमाभिधानसंगतिरिति भावः ।

एकैकधर्मप्रकारकेति । एकैकं क्षणमन्तर्भाव्य तत्क्षणानन्तरक्षणेऽनुमितिर्जायतामितीच्छाव्यक्तिषु बाहुल्यसूचनाय । तथाविधासु सर्वासु स्वविषयतत्तत्कालीनैकैका व्यक्तिरेवोत्तेजिकेति तत्तदन्याः कालान्तरीणाः तत्समानप्रकारकेच्छाः उत्तेजकव्यक्त्यपेक्षया अनन्ताः । तथा च यत्र वह्नितद्व्याप्यतद्व्याप्यवत्त्वपरामर्शः ततः एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामितीच्छा तत्र वह्नितद्व्याप्यधूमयोरनुमितिः ततः पुनरनुमितिवारणाय प्रथमानुमित्यनुरोधेन क्लृप्तोत्तेजकताकतादृशेच्छाया द्वितीयानुमितौ तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वस्योत्पत्तिकालावच्छिन्नत्वविशिष्टतत्तद्व्यक्तित्वेनोत्तेजकत्वस्य वा आवश्यकत्वेऽपि अन्यासां तथात्वे गौरवमित्यर्थः ।

दीधितिः

धूमेन अनुमिनुयामितीच्छायामालोकपरामर्शादसत्यामपि सिद्धौ यदि नानुमितिस्तदा अन्यमात्रलिङ्गकानुमितीच्छा कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका। यदि च तत्र अनुमितिस्तदा सिद्धेःसत्त्वे तत्र अनुमितेर्वारणाय तल्लिङ्गकानुमितीच्छा तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छा वा वाच्या।

---

गादाधरी

वस्तुतः साध्यविशिष्टपक्षविषयकत्वप्रकारकत्वनिवेशनमप्यावश्यकम्, अन्यथा किञ्चिज्ज्ञानं जायतां यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छावारणासम्भवात् तत्सङ्ग्रहे तादृशीनां सर्वासामिच्छानां तत्तद्व्यक्तित्वेनैव प्रतिबन्धकत्वे गौरवात्। अनुमितिर्जायतामित्यादीच्छानाञ्च पृथगनुमितित्वादिपर्याप्तविषयतावच्छेदकताकेच्छात्वेनैवोत्तजकता अन्यानुमितिसामग्रीसमवहिततादृशेच्छानाञ्च तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वमेवेति सर्वं समञ्जसम्।

---

भावबोधिनी

न चैवमपीति। तत्तद्व्यक्तित्वेन कासांचिदिच्छानामुत्तेजकत्वस्वीकारे साध्यविशिष्टपक्षविषयकत्वप्रकारकत्वविशेषणं व्यर्थम्, तदप्रकारकेच्छाया अपि अनुमितिर्जायतामित्यादेः उत्तेजकतायाः इष्टत्वादिति शङ्का। साध्यविशिष्टपक्षविषयकत्वानुमितित्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वमनुमितिनिष्ठविषयतायां निवेशनीयमित्यत्रैव तादृशविशेषणाभिधायकग्रन्थतात्पर्यमिति समाधानम्। तथा च कासांचिदनुगतरूपेण, कासांचित्तत्तद्व्यक्तित्वेनोत्तेजकत्वमिति फलितम्।

गादाधरी

ननु धूमेन पर्वते वह्निमनुमिनुयामित्याकारकेच्छाबलाद्धूमादिलिङ्गकानुमित्युत्पत्त्या तत्साधारणरूपेणैव सिषाधयिषाणां सिद्धावुत्तेजकताया आवश्यकत्वात् तत्सत्त्वे सिद्धिकालेऽसत्यपि धूमपरामर्शे आलोकादिपरामर्शादनुमित्यापत्तिः पक्षतायाः अक्षतत्वादित्यत आह । धूमेनेति । भिन्नलिङ्गकेच्छासत्त्वेऽपि सिद्धिदशायामेव यदि नानुमितिस्तदा तादृशेच्छायाः प्रतिबन्धकत्वं न सम्भवतीत्यतोऽसत्यामपि सिद्धाविति,

---

भावबोधिनी

यथाश्रुतदीधित्यनुसारेणाह–वस्तुतस्त्विति । पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति सिद्ध्यात्मकपरामर्शकाले यत्किंचित् ज्ञानं जायताम्, यत्किंचिद्गोचरं ज्ञानं जायतामितीच्छाबलादप्यनुमित्यापत्तिः । न चेष्टापत्तिः, मानसाद्युत्पत्त्यैवेच्छाविषयसिद्धेरिति तादृशेच्छायाः उत्तेजकत्ववारणाय तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वमिच्छायां विशेषणं देयमेव । अपि चान्यज्ञानसामग्रीविरहकालीनतादृशेच्छायाः उत्तेजकत्वानुसारेण तत्संग्रहे अन्यज्ञानसामग्रीकालीनतादृशेच्छायाः तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वं कल्पनीयमिति गौरवम् । अत इच्छानां तादृशविशेषणदानमेवोचितम् । तद्दाने साध्यविशिष्टतत्पक्षविषयत्वाप्रकारिकाणाम् अन्यानुमितिसामग्रीविरहकालीनानाम् अनुमितिर्जायतामित्यादीच्छानां अनुमितित्वपर्याप्तावच्छेदकताकविषयताकत्वेन पृथगेवोत्तेजकत्वम् । अन्यानुमितिसामग्रीकालीनतादृशेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वमेव वाच्यम् इति पूर्वोत्तरदीधितिग्रन्थयोराशय इति भावः । अन्यथा–तद्दलानुपादाने पक्षान्तानुपादाने वा । अनुमितित्वादीत्यादिना प्रत्यक्षान्यज्ञानं जायतामित्यादौ प्रत्यक्षान्यज्ञानत्वादिपरिग्रहः । ननु धूमेनेत्यादि । पूर्वं सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिका–अनुमितिविषयणीच्छा इति दीधितिव्याख्यानावसरे तत्साध्यविशिष्टतत्पक्ष-

गादाधरी

तत्रानुमितेः सन्दिग्धतया यदीति । तदेति । तल्लिङ्गकानुमिताविति शेषः ।

अन्यमात्रेति । तदन्यमात्रलिङ्गकत्वप्रकारकसिद्धीत्यर्थः । धूमलिङ्गकानुमितिरालोकलिङ्गकानुमितिश्च जायतामित्याद्याकारकसमूहालम्बनेच्छाकाले आलोकादिपरामर्शादनुमित्युपपत्तये मात्रेति । तदन्यमात्रलिङ्गकत्वप्रकारकत्वञ्च तल्लिङ्गकत्वाप्रकारकत्वे सति किञ्चिल्लिङ्गकत्वप्रकारकत्वम् । अत] प्रमेयसामान्यलिङ्गकस्थले तदन्याप्रसिद्धावपि न दोषः । तल्लिङ्गकत्वाप्रकारकत्वञ्च तल्लिङ्गकत्वप्रकारता-

---

भावबोधिनी

विषयकत्वानुमितित्वप्रत्यक्षान्यज्ञानत्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकानुमितिनिष्ठविषयताकेच्छात्वेन इच्छाया उत्तेजकत्वमुक्तम् । एवं सति यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवाँश्चेति सिद्ध्यात्मकपरामर्शः 'धूमेन पर्वते, वह्निमनुमिनुयामितीच्छा च वर्तते तत्र पर्वतो वह्निमान्' इत्यनुमितिः इष्यते । तदनुरोधेन तादृशेच्छायाः उत्तेजकत्वमेष्टव्यम् । परन्तु पूर्वोक्तमनुगतरूप तस्यां नास्ति । तत्साध्यविशिष्टतत्पक्षविषयकत्वादिनिष्ठावच्छेदकताभिन्ना या धूमलिङ्गकत्वनिष्ठावच्छेदकता तन्निरूपकविषयताकत्वात् तस्याः इच्छायाः । तस्मात् तत्साध्यविशिष्टतत्पक्षविषयकत्वादिनिष्ठावच्छेदकताभिन्नायाम् अवच्छेदकतायां तल्लिङ्गत्वनिष्ठावच्छेदकताभिन्नत्वमपि निवेश्य सिषाधयिषाणां सिद्धावुत्तेजकत्वं वक्तव्यम् । 'धूमेन पर्वते वह्निमनुमिनुयाम्' इत्याकारकेच्छायां वह्निविशिष्टपर्वतविषयकत्वनिष्ठावच्छेदकताभिन्ना धूमलिङ्गकत्वनिष्ठावच्छेदकताभिन्ना च या अवच्छेदकता तदनिरूपकविषयताकत्वम् अस्तीति तस्या उत्तेजकत्वम् निर्वहति । एवं सति 'पर्वतो वह्निमान्' इति सिद्धिकाले 'पर्वतो वह्निव्याप्यधूमवान्' इति परामर्शेऽसत्यपि 'पर्वतः वह्निव्याप्यालोकवान्' इति परामर्शे सति 'धूमेन पर्वते वह्निमनुमिनुयाम्' इति इच्छासत्त्वे तद्बलात्

भावबोधिनी

'पर्वतो वह्निमान्' इत्याकारकानुमित्यापत्तिः। तस्या इच्छायाः उत्तेजकरूपाक्रान्तत्वात् इत्याशङ्क्य तल्लिङ्गकानुमितौ तदन्यमात्रलिङ्गकानुमितीच्छा प्रतिबन्धिका इति दीधितावुक्तम्। तद्विषयकपरामर्शजन्यानुमितिः तल्लिङ्गकानुमितिः। तथा चालोकविषयकपरामर्शजन्यानुमितिं प्रति आलोकान्यलिङ्गकत्वप्रकारकानुमितीच्छायाः प्रतिबन्धकत्वात् 'धूमेन वह्निमनुमिनुयाम्' इतीच्छाकाले आलोकपरामर्शात् अनुमित्यापत्तिर्न इति भावः।

तत्साधारणरूपेणैवेति। 'धूमेन पर्वते वह्निमनुमिनुयाम्' इति इच्छासाधारणं यत् रूपं धूमलिङ्गकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकानुमितिनिष्ठविषयताकेच्छात्वम्, तेनेत्यर्थः। तदन्यमात्रलिङ्गकत्वप्रकारकेत्यादि। अत्र 'मात्र' पदानुपादाने तल्लिङ्गकानुमितिं प्रति तदन्यलिङ्गकत्वप्रकारकानुमितिविशेष्यकेच्छा प्रतिबन्धिका इति प्रतिबध्यप्रतिबन्धकभावः स्यात्। तथा सति यत्र सिद्ध्यात्मकः आलोकपरामर्शः 'पर्वतो वह्निमान् वह्निव्याप्यालोकवांश्च' इत्याकारकः वर्तते, 'धूमलिङ्गकानुमितिः आलोकलिङ्गकानुमितिश्च जायताम्' इत्याकारकसमूहालम्बनेच्छा च वर्तते तत्र 'पर्वतो वह्निमान्' इत्याकारकानुमितेः उत्पत्त्या आलोकलिङ्गकतादृशानुमितौ तादृशेच्छायाः प्रतिबन्धकत्वं वस्तुत नास्ति। आलोकान्यधूमलिङ्गकत्वप्रकारकानुमितिविशेष्यकेच्छात्वरूपप्रतिबन्धकतावच्छेदकविशिष्टतया तस्याः प्रतिबन्धकत्वम् आपद्यते। तद्वारणाय मात्रपदे उपात्ते तु तल्लिङ्गकत्वाप्रकारकत्वे सति तदन्यलिङ्गकत्वप्रकारकेच्छायाः प्रतिबन्धकत्वं लभ्यते। उक्तसमूहालम्बनेच्छायाः आलोकान्यधूमलिङ्गकत्वप्रकारकत्वेऽपि आलोकलिङ्गकत्वाप्रकारकत्वं नास्ति। तादृशेच्छायां आलोकलिङ्गकत्वस्यापि प्रकारत्वात्। अतो न प्रतिबन्धकत्वम् इति भावः।

## गादाधरी

निरूपिततत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नानुमितिनिष्ठविशेष्यताकान्यत्वम् । अत आलोकेनेन्धनं धूमेन तु वह्निमनुमिनुयामित्यादीच्छादशायामालोकादिलिङ्गकवह्न्या-द्यनुमितेर्नापत्तिः । आलोकलिङ्गकत्वप्रकारताशरीरे च वास्तवालोकादिप्रकारता न निवेशनीया किन्तु आलोकत्वाद्यवच्छिन्नप्रकारतैव, अन्यथा आलोकत्वादिना धूमत्वा-दिना च धूमादिकमालोकादिकंचावगाहमानयोरिच्छयोरालोकलिङ्गकानुमित्यादौ

---

## भावबोधिनी

ननु तदन्यमात्रलिङ्गकत्वप्रकारकेत्येनेन तल्लिङ्गकत्वाप्रकारकत्वे सति तदन्य-लिङ्गकत्वप्रकारकत्वं यदि विवक्ष्यते, तर्हि 'इदं वाच्यम् प्रमेयात्' इत्यादि प्रमेय-सामान्यलिङ्गकस्थले प्रमेयान्यस्य लिङ्गस्य अप्रसिद्धया प्रतिबन्धकीभूतेच्छायास्तत्र दौर्लभ्यम् इत्याशङ्क्याह–तदन्यमात्रलिङ्गकत्वप्रकारकत्वं चेति । तथा च प्रमेय-सामान्यलिङ्गकस्थले प्रमेयत्वावच्छिन्नलिङ्गकत्वाप्रकारिका किञ्चिल्लिङ्गकत्वप्रकारिका 'घटेन अनुमिनुयाम्' इत्यादि इच्छैव प्रतिबन्धिका इति भावः । न दोष इति । प्रतिबन्धकाप्रसिद्धया प्रतिबन्धकाभावरूपकारणाप्रसिद्धिरूपो दोषो नेत्यर्थः ।

ननु तल्लिङ्गकत्वाप्रकारकत्वे सति किञ्चिल्लिङ्गकत्वप्रकारिका अनुमितिविशेष्यिका इच्छा तल्लिङ्गकानुमितौ प्रतिबन्धिका इति पर्यवसितम् । एवं सत्यपि यत्र 'पर्वतो वह्निमान् वह्निव्याप्यालोकवांश्च' इत्याकारकः परामर्शः 'आलोकेनेन्धनम् धूमेन तु वह्निमनुमिनुयाम्' इत्याकारकेच्छा चास्ति तत्र पर्वतो वह्निमानित्यनुमितिर्नेष्यते । आलोकेन पर्वते वह्निमनुमिनुयामितीच्छायां सत्यामेवानुमितिरिष्यते । तादृश-समूहालम्बनेच्छायाः किञ्चिल्लिङ्गकत्वप्रकारकत्वं धूमलिङ्गकत्वप्रकारकत्वात् वर्तते । एवम् आलोकलिङ्गकत्वप्रकारकत्वमप्यस्ति । आलोकलिङ्गकत्वाप्रकारकत्वे सति किंचिल्लिङ्गकत्वप्रकारकत्वरूपं प्रतिबन्धकतावच्छेदकं नास्तीति तस्या इच्छायाः

## गादाधरी

प्रतिबन्धकत्वतदभावयोरापत्तेः । द्रव्येणानुमिनुयामित्यादीच्छाया आलोकादिलिङ्गकानुमित्यविरोधित्वोपपत्तये चालोकत्वाद्यवच्छिन्नत्वस्थले आलोकाद्यवृत्तित्वेनाज्ञायमानधर्मावच्छिन्नत्वमेव निवेश्यम् । द्रव्यत्वादेरालोकत्वादिविरुद्धत्वभ्रमदशायां तादृशेच्छाया विरोधित्वोपपादनायालोकत्वादेरालोकादिवृत्तित्वज्ञानशून्यकालीनाया आलो-

---

## भावबोधिनी

अप्रतिबन्धकत्वात् तदिच्छाकाले आलोकपरामर्शजन्यवह्न्यनुमित्यापत्तिः इत्याशङ्क्याह–तल्लिङ्गकत्वाप्रकारकत्वं चेति । तथा च तल्लिङ्गकत्वनिष्ठप्रकारतानिरूपिता या तत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्ना अनुमितिनिष्ठा विशेष्यता तन्निरूपकभिन्नेच्छा तल्लिङ्गकानुमितौ प्रतिबन्धिका । आलोकेनेन्धनं धूमेन तु वह्निम् अनुमिनुयाम् इत्याकारकेच्छायाम् अनुमितिनिष्ठविशेष्यतायाः आलोकलिङ्गकत्वनिष्ठप्रकारतानिरूपितायाः इन्धनविशिष्टपर्वतविषयकत्वावच्छिन्नत्वेऽपि तत्साध्यवह्निविशिष्टपर्वतविषयकत्वावच्छिन्नत्वं नास्तीति आलोकेन पर्वते वह्निमनुमिनुयामितीच्छैव आलोकलिङ्गकत्वनिष्ठप्रकारतानिरूपितवह्निविशिष्टपर्वतविषयकत्वावच्छिन्नानुमितिनिष्ठविशेष्यताका भवति । तद्भिन्नत्वं च 'आलोकेनेन्धनम्' इत्याद्याकारकसमूहालम्बनेच्छायामस्तीति तस्याः प्रतिबन्धकत्वनिर्वाहः ।

ननु आलोकलिङ्गकत्वाप्रकारकत्वशरीरे प्रविष्टं यत् आलोकलिङ्गकत्वम्, तत् आलोकत्वाश्रयलिङ्गकत्वरूपम् वक्तव्यम् । तत्र आलोकत्वेन रूपेण धूमम् अवगाहमाना या 'आलोकेन अनुमिनुयाम्' इत्याकारकेच्छा तस्याः आलोकपरामर्शजन्यानुमितौ प्रतिबन्धकत्वं नाङ्गीक्रियते । उक्तरीत्या परिष्कारे तु तस्याः इच्छायाः आलोकत्वानाश्रयधूमलिङ्गकत्वप्रकारकत्वात् आलोकत्वाश्रय–आलोकलिङ्गकत्वाप्रकारकत्वम् अस्तीति तस्याः प्रतिबन्धकतापत्तिः । एवं आलोकपरामर्श-

गादाधरी

केनानुमिनुयामित्यादीच्छाया अविरोधित्वोपपत्तये च वास्तवालोकादिवृत्तित्वस्य तेन रूपेण ज्ञायमानत्वस्य चोपेक्षणम्। धूमत्वदेरालोकादिवृत्तित्वग्रहदशायां धूमेनानुमिनुयामित्यादीच्छाया आलोकादिलिङ्गकानुमित्यविरोधित्वमिष्टमेव। विरोधित्वं तादृशेच्छाया धूमत्वादेरालोकत्वादिविरुद्धत्वग्रहदशायामेव।

---

भावबोधिनी

जन्यानुमितौ धूमत्वेन आलोकमवगाहमानायाः 'धूमेन अनुमिनुयाम्' इत्याकारकेच्छायाः प्रतिबन्धकत्वमस्ति। उक्तपरिष्कारे तु आलोकत्वाश्रय–आलोकलिङ्गकत्वप्रकारिकायाः तस्याः इच्छायाः आलोकलिङ्गकत्वाप्रकारकत्वं नास्तीति प्रतिबन्धकत्वाभावापत्तिः इत्यत आह–आलोकलिङ्गकत्वप्रकारताशरीर इति। तथा च आलोकलिङ्गकत्वनिष्ठप्रकारता इत्यस्य आलोकत्वावच्छिन्नप्रकारतानिरूपितपरामर्शनिष्ठप्रकारतानिरूपित–जन्यत्वनिष्ठप्रकारतेत्यर्थः। न तु आलोकत्वाश्रयनिष्ठप्रकारतानिरूपितपरामर्शनिष्ठप्रकारतानिरूपितजन्यत्वनिष्ठप्रकारता इत्यर्थः। तथा च आलोकत्वेन धूमावगाहिन्याः 'आलोकेनानुमिनुयाम्' इतीच्छायाः आलोकत्वावच्छिन्नप्रकारताघटितप्रकारतानिरूपितविशेष्यताकत्वमेवास्ति, न तु तादृशविशेष्यताकान्यत्वमिति न प्रतिबन्धकत्वापत्तिः। धूमत्वेनालोकावगाहिन्याः 'धूमेन अनुमिनुयाम्' इतीच्छायाः धूमत्वावच्छिन्नप्रकारताघटितप्रकारतानिरूपितविशेष्यताकत्वेऽपि आलोकत्वावच्छिन्नप्रकारताघटितप्रकारतानिरूपितविशेष्यताकत्वविरहात् प्रतिबन्धकत्वम् उपपद्यत इति प्रतिबन्धकत्वाभावापत्तिः न भवतीति भावः। इत्थं च आलोकलिङ्गकानुमितिं प्रति आलोकत्वावच्छिन्नविषयितासंबन्धावच्छिन्नप्रकारतानिरूपितपरामर्शनिष्ठप्रकारतानिरूपितजन्यत्वनिष्ठप्रकारतानिरूपित–तत्साध्यविशिष्टपक्षविषयकत्वावच्छिन्नानुमितिनिष्ठविशेष्यताकान्यत्वे सति किञ्चिल्लिङ्गकत्वप्रकारकेच्छा प्रतिबन्ध-

भावबोधिनी

केति फलितम्। वास्तवालोकादिप्रकारता चेति । आलोकत्वाश्रयनिष्ठप्रकारता इत्यर्थः।

आलोकत्वाद्यवच्छिन्नप्रकारतैवेति । एवकारेण प्रकारतायां आलोकनिष्ठत्वनिवेशव्यवच्छेदः। अन्यथेति । आलोकत्वाश्रयनिष्ठप्रकारतानिवेशे इत्यर्थः।

नन्वेवं सति सिद्ध्यात्मकालोकविषयकपरामर्शकाले 'द्रव्येण पर्वते वह्निमनुमिनुयाम्' इत्याकारकेच्छाबलात् 'पर्वतो वह्निमान्' इत्यनुमितिरिष्यते। तादृशानुमितेः आलोकविषयकपरामर्शजन्यत्वात् आलोकलिङ्गकत्वम् अस्ति। उक्तेच्छायास्तु द्रव्यत्वावच्छिन्नप्रकारतानिरूपितपरामर्शनिष्ठप्रकारतानिरूपित-जन्यत्वनिष्ठप्रकारतानिरूपितअनुमितिनिष्ठविशेष्यताकत्वेऽपि आलोकत्वावच्छिन्नप्रकारताघटितप्रकारतानिरूपितविशेष्यताकत्वविरहात् तादृशविशेष्यताकान्यत्वसत्त्वात् प्रतिबन्धकत्वापत्तिः इत्यत आह-द्रव्येण अनुमिनुयाम् इत्यादि इच्छाया इति। तथा च आलोकत्वावच्छिन्नत्वस्थाने आलोकावृत्तित्वेन अज्ञायमानधर्मावच्छिन्नत्वं निवेश्यते। द्रव्यत्वस्य आलोकावृत्तितया आलोकावृत्तित्वेन अज्ञायमानत्वमस्तीति द्रव्यत्वावच्छिन्नप्रकारतायाः आलोकवृत्तित्वेनाज्ञायमानद्रव्यत्वरूपधर्मावच्छिन्नत्वात् तादृशप्रकारतानिरूपितविशेष्यताकत्वमेव तस्याः इच्छायाः इति न प्रतिबन्धकत्वप्रसङ्गः।

ननु आलोकत्वावच्छिन्नत्वस्थाने आलोकवृत्तित्वावच्छिन्नत्वमेव निवेश्यताम्। तावतैव आलोकवृत्तिद्रव्यत्वावच्छिन्नप्रकारताकायाः 'द्रव्येण अनुमिनुयाम्' इतीच्छायाः अप्रतिबन्धकत्वसंभवात् इत्यत आह- द्रव्यत्वादेः आलोकत्वादिविरुद्धत्वभ्रमदशायामिति। तथा च द्रव्यत्वम् आलोकत्वविरुद्धम् [आलोकावृत्ति] इति यस्य भ्रमः वर्तते तस्य पुरुषस्य 'द्रव्येणानुमिनुयाम्' इतीच्छायाः अन्यलिङ्ग-

भावबोधिनी

केच्छासमशीलायाः आलोकलिङ्गकानुमितौ विरोधित्वमिष्टम् । यदि तु आलोकवृत्तिधर्मावच्छिन्नत्वं प्रकारतायां निवेश्यते तर्हि 'द्रव्येणानुमिनुयाम्' इतीच्छायाः आलोकवृत्तिद्रव्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताकतया अप्रतिबन्धकत्वं स्यात् इति भावः ।

नन्वेतद्दोषवारणाय आलोकवृत्तित्वेन ज्ञायमानधर्मावच्छिन्नत्वम् प्रकारतायां निवेश्यताम् । आलोकवृत्तित्वेन ज्ञायमानत्वं च आलोकवृत्तित्वप्रकारकज्ञानविशेष्यत्वम् । 'द्रव्यत्वम् आलोकावृत्ति' इति ज्ञानकाले द्रव्यत्वस्य आलोकवृत्तित्वेन ज्ञायमानत्वविरहात् 'द्रव्येणानुमिनुयाम्' इतीच्छायाः आलोकवृत्तित्वप्रकारकज्ञानविशेष्यभूतधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यताकान्यत्वसद्भावात् प्रतिबन्धकत्वनिर्वाहः । तथा च किं आलोकावृत्तित्वेनाज्ञायमानधर्मावच्छिन्नत्वनिवेशेन इत्यत आह-आलोकत्वादेः आलोकादिवृत्तित्वज्ञानशून्यकालीनाया इति । तथा च आलोकवृत्तित्वेन ज्ञायमानधर्मावच्छिन्नत्वनिवेशे यस्य पुरुषस्य आलोकत्वम् आलोकवृत्ति इति ज्ञानं नास्ति तत्पुरुषीयायाः आलोकेनानुमिनुयाम्' इतीच्छायाः आलोकलिङ्गकानुमितौ प्रतिबन्धकत्वापत्तिः । आलोकत्वस्य आलोकवृत्तित्वेन ज्ञायमानत्वविरहात् आलोकवृत्तित्वेन ज्ञायमानधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यताकत्वं तस्यां इच्छायां नास्तीति । तस्मात् आलोवृत्तिधर्मावच्छिन्नत्वम्, आलोकवृत्तित्वेन ज्ञायमानधर्मावच्छिन्नत्वं च उपेक्ष्य आलोकावृत्तित्वेन अज्ञायमानधर्मावच्छिन्नत्वं प्रकारतायां निवेशनीयम् । आलोकावृत्तित्वेनाज्ञायमानधर्मावच्छिन्नत्वमिति । आलोकावृत्तित्वप्रकारकज्ञानाविषयीभूतधर्मावच्छिन्नत्वमित्यर्थः । आलोकत्वादिविरुद्धत्वभ्रमदशायाम् इति । द्रव्यत्वम् आलोकावृत्ति इत्याकारकभ्रमदशायाम् इत्यर्थः । तादृशेच्छाया इति । 'द्रव्येण अनुमिनुयाम' इत्याकारकेच्छायाः इत्यर्थः । तेन रूपेणेति । आलोकादिवृत्तित्वरूपेण इत्यर्थः ।

भावबोधिनी

ननु प्रकारतायां आलोकावृत्तित्वेन अज्ञायमानधर्मावच्छिन्नत्वनिवेशेऽपि यस्य पुरुषस्य धूमत्वम् आलोकावृत्तीति ज्ञानं नास्ति तत्पुरुषीयायाः 'धूमेनानुमिनुयाम्' इतीच्छायाः आलोकलिङ्गकानुमितिं प्रति अप्रतिबन्धकत्वापत्तिः। धूमत्वस्य आलोकावृत्तित्वेन अज्ञायमानतया तदवच्छिन्नप्रकारतानिरूपितविशेष्यताकत्वस्यैव 'धूमेन अनुमिनुयाम्' इति इच्छायां सत्त्वात् इत्याशङ्क्य इष्टापत्त्या समाधत्ते—धूमत्वादेरित्यादिना। विरोधित्वं चेति। 'धूमत्वम् आलोकावृत्ति' इति ज्ञानकाले एव 'धूमेन अनुमिनुयाम्' इति इच्छायाः आलोकलिङ्गकानुमितौ प्रतिबन्धकत्वम्, न तु तादृशज्ञानाभावकाले इति भावः।

ननु आलोकावृत्तित्वेनाज्ञायमानधर्मावच्छिन्नत्वनिवेशेऽपि कालान्तरीणं पुरुषान्तरीयं च यत् आलोकत्वम् आलोकावृत्तीति ज्ञानं तद्विषयत्वमेव आलोकत्वेऽस्तीति आलोकावृत्तित्वप्रकारकज्ञानाविषयत्वम् आलोकत्वे दुर्घटमिति तदवच्छिन्नप्रकारताघटितरूपेण प्रतिबन्धकत्वं न संभवति। न च आलोकावृत्तित्व प्रकारकज्ञाने स्वसमानकालीनत्वं स्वसमानाधिकरणत्व च विशेषणं दीयते। तथा च स्वसमानकालीनस्वसमानाधिकरण-आलोकावृत्तित्वप्रकारकज्ञानाविषयीभूतधर्मावच्छिन्नप्रकारताघटितप्रकारतानिरूपितविशेष्यताकान्येच्छा प्रतिबन्धिका। अतः कालान्तरीणपुरुषान्तरीयज्ञानमादाय न पूर्वोक्तदोष इति वाच्यम्। स्वपदेन फलीभूतायाः अनुमितेः उपादाने यादृशानुमितिदशायां अनुमातुः पुरुषस्य क्वचिदपि धर्मे-आलोकावृत्तित्वज्ञानं नास्ति तत्र स्वसमानाधिकरणस्वसमानकालीनालोकावृत्तित्वज्ञानाप्रसिद्ध्या तद्घटितप्रतिबन्धकाप्रसिद्ध्या प्रतिबन्धकाभावरूपकारणाप्रसिद्धिः। स्वपदेन विशेष्यताकेच्छारूपायाः भेदप्रतियोगिन्या अनुमित्सायाः उपादाने आलोकेन अनुमिनुयाम् इत्याकाकेच्छाकाले तादृशेच्छाश्रयस्य पुरुषस्य क्वचिदपि

गादाधरी

वस्तुतस्तु द्रव्यं नालोक इत्यादिज्ञानशून्यकालीनानां आलोको द्रव्यमित्यादि ज्ञानकालीनानां वा इच्छानां तत्तद्व्यक्तित्वेन भेदकूट एव स्वातन्त्र्येण प्रतिबन्धकतावच्छेदकेऽनुप्रवेशनीयः। तेन उक्तकल्पे कालान्तरीणपुरुषान्तरीयज्ञानवारणाय स्वसमानकालीनत्वस्वसमानाधिकरणत्वयोर्ज्ञानविशेषणतया ध्रौव्ये स्वपदेन फलीभूतानुमित्युपादाने यादृशानुमितिदशायां क्वचिदपि धर्मे नालोकाद्यवृत्तित्वज्ञानं प्रसिद्ध्यति

---

भावबोधिनी

धर्मे आलोकावृत्तित्वज्ञानविरहे सति तादृशेच्छायाः तादृशज्ञानाविषयधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यताकत्वविरहेण आलोकलिङ्गकानुमितिप्रतिबन्धकतापत्तिः इत्याशङ्क्य आलोकावृत्तित्वेन अज्ञायमानधर्मावच्छिन्नत्वनिवेशं परित्यज्य पक्षान्तरम् अवलम्बते—वस्तुतस्तु इत्यादिना। अस्मिन् पक्षे प्रकारतायां आलोकत्वावच्छिन्नत्वमेव निवेश्यते। 'द्रव्यं न आलोकः' इत्यादिज्ञानशून्यकालीनानां 'आलोको द्रव्यम्' इत्यादिज्ञानकालीनानां वा 'द्रव्येण अनुमिनुयाम्' इत्यादीच्छानां आलोकलिङ्गकानुमिति प्रति प्रतिबन्धकत्ववारणार्थं प्रतिबन्धकीभूतेच्छायां 'द्रव्येणानुमिनुयाम्' इत्यादीच्छाव्यक्तिभिन्नत्व निवेश्यते। तथा च 'द्रव्येणानुमिनुयाम्' इत्यादीच्छाव्यक्तिभिन्ना आलोकत्वावच्छिन्नप्रकारतानिरूपितपरामर्शनिष्ठप्रकारतानिरूपित – जन्यत्वनि॰प्रकारतानिरूपितपरामर्शनिष्ठप्रकारतानिरूपित– वह्निविशिष्टपर्वतविषयकत्वावच्छिन्नानुमितिनिष्ठविशेष्यताकेच्छाभिन्ना इच्छा आलोकलिङ्गकानुमितौ प्रतिबन्धिका। तादृशेच्छाभावः तादृशानुमितौ कारणम् इति पर्यवसितम्। अतो न कोऽपि दोष इति भावः। इच्छानामिति। षष्ठ्याः प्रतियोगित्वमर्थः। तस्य निरूपकतासंबन्धेन भेदेऽन्वयः। तत्तद्व्यक्तित्वेन इति

## गादाधरी

तत्र स्वसमानाधिकरणस्वसमानकालीनालोकत्वादिविरुद्धत्वज्ञानाविषयधर्मवल्लिङ्गकत्वप्रकारकत्वप्रकारकानुमितिभिन्नानुमित्साभावरूपकारणाप्रसिद्धिः स्वत्वाननुगमेन कार्यकारणभावस्य तत्तदनुमितिव्यक्तिविश्रामश्च । भेदप्रतियोग्यनुमित्सोपादाने चालोकेन द्रव्येण वाऽनुमिनुयामित्याद्याकारकयादृशेच्छासमानाधिकरणसमानकालीनतादृशज्ञानाप्रसिद्धिस्तादृशेच्छायास्तथाविधस्वभिन्नत्वेनालोकादिलिङ्गकानुमितिप्रतिबन्धकत्वापत्तिरिति परास्तम् । ......

---

## भावबोधिनी

तृतीयायाः अवच्छिन्नप्रतियोगिताकत्वमर्थः । तस्यापि भेदेऽन्वयः । उक्तकल्पेति । आलोकावृत्तित्वेन अज्ञायमानधर्मावच्छिन्नत्वनिवेशकल्पे इत्यर्थः ।

तत्तद्व्यक्तित्वेन भेदकूटनिवेशे अननुगममालोच्य अनुगतरूपेण भेदनिवेशार्थं पक्षान्तरमाह–आलोको द्रव्यमित्यादिना । आलोकपरामर्शकाले 'द्रव्येणानुमिनुयाम्' इत्याकारिकायाः 'आलोको द्रव्यम्' इत्यादिज्ञानविशिष्टायाः 'आलोको न द्रव्यम्' इति ज्ञानविरहविशिष्टाया वा इच्छायाः अनुमित्यप्रतिबन्धकत्वनिर्वाहार्थं प्रतिबन्धकीभूतायां इच्छायां 'आलोको द्रव्यमि'ति ज्ञानविशिष्टेच्छाभिन्नत्वम्, 'आलोको न द्रव्यमि'ति ज्ञानविरहविशिष्टेच्छाभिन्नत्वं च निवेशनीयम् । विशेष्यभूतेच्छाभिन्नायाः 'द्रव्येणानुमिनुयाम्' इति इच्छायाः 'आलोको द्रव्यम्' इति ज्ञानशून्यकाले तादृशज्ञानविशिष्टेच्छा-भिन्नत्वं भेदस्य कालिकाव्याप्यवृत्तित्वाङ्गीकारात् उपपद्यते । वैशिष्ट्यं च एककालावच्छिन्न – एकात्मवृत्तित्वरूपसामानाधिकरण्यसंबन्धेन विवक्षितम् । अतः पुरुषान्तरीण-कालान्तरीणज्ञानमादाय न पूर्वोक्तदोषः इति भावः ।

## गादाधरी

यद्वा आलोको द्रव्यमित्यादिज्ञानविशिष्टत्वेन आलोको न द्रव्यमित्यादिज्ञानविरहविशिष्टत्वेनैव वा द्रव्यत्वादिमल्लिङ्गकत्वप्रकारकेच्छा अनुगमय्य तद्भेदा एव प्रतिबन्धकतावच्छेदककोटौ निवेशनीयाः। वैशिष्ट्यं च एकक्षणावच्छिन्नैकात्मवृत्तित्वम्। भेदस्य कालिकाव्याप्यवृत्तित्वोपगमात्तादृशज्ञानशून्यकालीनानां द्रव्येनानुमिनुयामित्यादीच्छानां विशिष्टभिन्नतया प्रतिबन्धकत्वोपपत्तिः। सामानाधिकरण्यसंबन्धेन वैशिष्ट्यनिवेशान्न पुरुषान्तरीणज्ञानादिरूपादाय दोषः। द्रव्यत्वावच्छिन्नेनानुमिनुयामित्याद्याकारिकाणां द्रव्यत्वांशे लिङ्गतावच्छेदकत्वावगाहिनीनामिच्छानान्तु न द्रव्यत्वादिमद्विष-

---

## भावबोधिनी

द्रव्यत्वावच्छिन्नेनानुमिनुयाम् इत्यादि। 'द्रव्यत्वावच्छिन्नेनानुमिनुयाम्' इतीच्छायाः 'द्रव्येण अनुमिनुयाम्' इतीच्छायाश्च अस्ति वैलक्षण्यम्। आद्यायां इच्छायां द्रव्यत्वावच्छिन्नलिङ्गकत्वं अनुमित्यंशे प्रकारतया भासते। द्रव्यत्वावच्छिन्नलिङ्गकत्वप्रकारकत्वं नाम द्रव्यत्वावच्छिन्नप्रकारतानिरूपितपरामर्शनिष्ठप्रकारतानिरूपितजन्यत्वनिष्ठप्रकारतानिरूपितत्वम्। तत्र प्रकारतायां द्रव्यनिष्ठत्वं न भासते। द्वितीयायां इच्छायां द्रव्यत्वाश्रयद्रव्यलिङ्गकत्वं प्रकारतयां भासते। द्रव्यत्वाश्रय द्रव्यनिष्ठप्रकारतानिरूपितपरामर्शनिष्ठप्रकारतानिरूपितजन्यत्व निष्ठप्रकारतानिरूपितविशेष्यताशालीनी सा इच्छा भवति। अत्र प्रकारताया द्रव्यत्वावच्छिन्नत्वं न भासते इति विशेषः। तत्र आलोकत्वावच्छिन्नलिङ्गकानुमितौ प्रकारतायां द्रव्यत्वावच्छिन्नत्वावगाहिन्याः इच्छायाः प्रतिबन्धकत्वम्। द्रव्यत्वावच्छिन्नत्वानवगाहिन्याः द्रव्यनिष्ठत्वावगाहिन्याः इच्छायास्तु न प्रतिबन्धकत्वं इति विवेकः। तदनुरोधेन 'आलोको द्रव्यम्' इति ज्ञानविशिष्टद्रव्यत्ववद्विषयकपरामर्शजन्यत्वरूपद्रव्यत्ववल्लिङ्गकत्वप्रकारकेच्छाभिन्नत्वं प्रतिबन्धकेच्छायां निवेशनीयम्। 'द्रव्यत्वावच्छिन्नेन अनुमिनुयाम्' इतीच्छायास्तु द्रव्यत्ववद्विषयकपरामर्शजन्यत्वप्रकारकत्वं

गादाधरी

यकपरामर्शजन्यत्वरूपद्रव्यत्वादिमल्लिङ्गकत्वप्रकारकत्वं विषयितायामेव तत्र द्रव्यत्वावच्छिन्नत्वाभावात् लिङ्गांशे द्रव्यत्वाद्यनवगाहनादतस्तथाविधेच्छानामालोकत्वाद्यवच्छिन्नलिङ्गकानुमितिविरोधित्वमक्षतमेव । आलोकत्वावच्छिन्नेनानुमिनुयामित्यादीच्छानां तादृशानुमित्यविरोधित्वोपपत्तये चालोकलिङ्गकत्वाद्यप्रकारकत्ववदालोकत्वाद्यवच्छिन्नलिङ्गकत्वाद्यप्रकारकत्वमप्यालोकत्वाद्यवच्छिन्नलिङ्गकानुमितिबन्धकतायां निवेशनीयम् ।

---

भावबोधिनी

नास्ति । तादृशेच्छायां लिङ्गे द्रव्यत्ववत्त्वस्य अभानात् । तथा च तादृशेच्छाभिन्नं वं द्रव्यत्वावच्छिन्नेन अनुमिनुयाम् इति इच्छायामस्तीति तस्याः प्रतिबन्धकत्वोपपत्तिः इति तात्पर्यम् ।

लिङ्गतावच्छेदकत्वावगाहिनीनाम् इति । परामर्शविषयतावच्छेदकत्वावगाहिनीनामित्यर्थः ।

ननु आलोकलिङ्गकानुमितौ आलोकत्ववल्लिङ्गकत्वाप्रकारककिञ्चिल्लिङ्गकत्वप्रकारकेच्छायाः प्रतिबन्धकत्वाङ्गीकारे आलोके आलोकत्ववत्त्वानवगाहिन्याः 'आलोकत्वावच्छिन्नेन अनुमिनुयाम्' इतीच्छायाः प्रतिबन्धकत्वापत्तिः । तस्याः आलोकत्ववल्लिङ्गकत्वाप्रकारकत्वात् किञ्चिल्लिङ्गकत्वप्रकारकत्वाच्च इत्याशङ्क्य प्रतिबन्धकताशरीरे आलोकत्ववल्लिङ्गकत्वाप्रकारकत्ववत् आलोकत्वावच्छिन्नलिङ्गकत्वाप्रकारकत्वमपि निवेशनीयम् । अतः न दोष इति समाधत्ते--आलोकत्वावच्छिन्नेन अनुमिनुयाम् इत्यादिना ।

एतावता तल्लिङ्गकत्वाप्रकारकत्वपरिष्कारः समाप्तः । इतः परं किञ्चिल्लिङ्गकत्वप्रकारकत्वरूपविशेष्यदलं परिष्कर्तुं आदौ तस्य प्रयोजनमाह पर्वते वह्निमनु-

गादाधरी

पर्वते वह्निमनुमिनुयामित्याद्याकारकलिङ्गविशेषजन्यत्वानवगाहिनीनामिच्छानामविरोधित्वोपपत्तये किञ्चिल्लिङ्गकत्वप्रकारकत्वनिवेशः। तदर्थश्च किञ्चिल्लिङ्गकत्वप्रकारतानिरूपिततत्तत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नविशेष्यताकत्वम्। अतो धूमेन इन्धनमनुमिनुयाम् इत्याद्याकारकेच्छानां नालोकादिलिङ्गकवह्न्याद्यनुमितिविरोधित्वम्।

---

भावबोधिनी

मिनुयाम् इत्यादिना। तथा च विशेष्यदलानुपादाने तल्लिङ्गकानुमितौ तल्लिङ्गकत्वाप्रकारकानुमितीच्छा प्रतिबन्धिका इत्येतावन्मात्रोक्तौ यत्र पर्वतो वह्निमान्, वह्निव्याप्यालोकवांश्चेति परामर्शः लिङ्गविशेषजन्यत्वानवगाहिनी पर्वते वह्निमनुमिनुयाम् इति इच्छा वर्तते, तत्र 'पर्वतो वह्निमान्' इत्यनुमितिः न स्यात्। तादृशेच्छायाः आलोकलिङ्गकत्वाप्रकारकत्वेन प्रतिबन्धकत्वापत्तेः। अतः किञ्चिल्लिङ्गकत्वप्रकारकत्वनिवेशः। पर्वते वह्निमनुमिनुयाम् इति इच्छायाः तु किञ्चिल्लिङ्गकत्वप्रकारकत्वविरहात् न प्रतिबन्धकत्वमिति भावः।

ननु किञ्चिल्लिङ्गकत्वप्रकारकत्वं नाम किञ्चिल्लिङ्गकत्वनिष्ठप्रकारतानिरूपितअनुमितिनिष्ठविशेष्यताकत्वम्। तथा च आलोकलिङ्गकवह्न्यनुमितिं प्रति 'धूमेन इन्धनमनुमिनुयाम्' इतीच्छायाः प्रतिबन्धकत्वापत्तिः। तस्या आलोकलिङ्गकत्वाप्रकारकत्वात् धूमरूपकिञ्चिल्लिङ्गकत्वनिष्ठप्रकारतानिरूपितविशेष्यताकत्वाच्च इत्याशङ्क्याह–तदर्थश्च इति। विशेष्यतायां तत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नत्वं निवेशनीयम्। 'धूमेन इन्धनमनुमिनुयाम्' इत्याकारकेच्छायां या धूमलिङ्गकत्वप्रकारतानिरूपिता अनुमितिनिष्ठा विशेष्यता तस्याः इन्धनविशिष्टपर्वतविषयकत्वा-

भावबोधिनी

वच्छिन्नत्वेऽपि तत्साध्यवह्निविशिष्टपर्वतविषयकत्वावच्छिन्नत्वं नास्तीति न तस्याः अनुमितिप्रतिबन्धकत्वमिति भावः।

एतावता तल्लिङ्गकत्वनिष्ठप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नानुमितिनिष्ठविशेष्यताकेच्छाभिन्नत्वे सति किञ्चिल्लिङ्गकत्वनिष्ठप्रकारतानिरूपितविशेष्यताका इच्छा तल्लिङ्गकानुमितौ प्रतिबन्धिका इति सिद्धम्। एवं सत्यपि केचन दोषाः प्रसज्यन्ते। तद्वारणार्थं प्रस्तौति–इदमत्रावधेयमित्यादिना। यत्रावलोकमलिङ्गकः परामर्शः आलोलिङ्गक–धूमलिङ्गकानुमितिर्जायताम् इत्याकारकेच्छा च अस्ति, तत्र 'पर्वतो वह्निमान्' इत्यनुमितिः न जायते। उभयलिङ्गकानुमितिरेव तादृशेच्छाविषयत्वात्। तथा च तादृशेच्छायाः आलोकमात्रलिङ्गकानुमितौ प्रतिबन्धकत्वमेष्टव्यम्। पूर्वोक्तपरिष्काररीत्या तु प्रतिबन्धकत्वं नायाति। तादृशेच्छायानुमितिनिष्ठविशेष्यतायाः धूमलिङ्गकत्वनिष्ठप्रकारतानिरूपितत्वेऽपि 'अधिकं तु' इति न्यायेन आलोकलिङ्गकत्वनिष्ठप्रकारतानिरूपितत्वानपायात् तस्याः इच्छायाः आलोकलिङ्गकत्वनिष्ठप्रकारतानिरूपितअनुमितिनिष्ठविशेष्यताकत्वमेवास्ति, न तु विशेष्यताकान्यत्वम्। तथा च कथं तस्याः प्रतिबन्धकत्वनिर्वाहः।

एवं यत्र वह्निव्याप्यालोकवान् इति परामर्शः 'धूमलिङ्गकवह्न्यनुमितिः आलोकलिङ्गकवह्निघटोभयानुमितिश्च जायताम्' इत्याकारकसमूहालम्बनेच्छा चास्ति, तत्र 'पर्वतो वह्निमान्' इत्यनुमितिः न जायते। वह्निघटोभयविषयकानुमितेरेव तादृशेच्छायां विषयत्वात्। तथा च तस्याः इच्छायाः प्रतिबन्धकत्वं वाच्यम्। पूर्वोक्तपरिष्कारे तु अनुमितिनिष्ठविशेष्यतायाः आलोकलिङ्गकत्वनिष्ठप्रकारतानिरूपित-

गादाधरी

इदमात्रावधेयम् ।·आलोकलिङ्गकधूमलिङ्गकानुमितिर्जायतामित्याद्याकारकेच्छाकाले केवलालोकलिङ्गकपरामर्शादनुमितिर्न जायते तथाविधानुमितेस्तादृशेच्छायां अविषयत्वात् उभयलिङ्गकानुमितेरेव तद्विषयत्वात् । एवं धूमलिङ्गकवह्नयनुमितिरालोकलिङ्ग-कवह्निघटोभयानुमितिश्च जायतामित्याद्याकारकेच्छाकाले घटाद्यनुमितिसामग्र्यामसत्यां आलोकपरामर्शाद्वह्नयनुमितिर्न जायते घटाद्यविषयकानुमितेरुत्पत्त्या तादृशेच्छाविषया-सिद्धेरतस्तथाविधेच्छानां तत्र तत्र प्रतिबन्धकतानिर्वाहाय तत्तल्लिङ्गकत्वतत्तत्साध्य-विशिष्टतत्पक्षविषयकत्वानुमितित्वादिप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताशून्यत्वमेव

---

भावबोधिनी

वह्निविशिष्टपर्वतविषयकत्वावच्छिन्नत्वात् तदवच्छिन्नविशेष्यताकान्यत्वं तादृशेच्छायां नास्तीति प्रतिबन्धकत्वं कथं निर्वहति इति आशङ्काद्वयं प्रसजति । तत्परिहारार्थं तल्लिङ्गकत्वप्रकारकत्वस्य परिष्कारः एवं कर्तव्यः । तल्लिङ्गकत्वनिष्ठप्रकारताभिन्ना तत्साध्यविशिष्ट-तत्पक्षविषयकत्वनिष्ठप्रकारताभिन्ना अनुमितित्वनिष्ठप्रकारताभिन्ना च या प्रकारता तदनिरूपितविशेष्यताशून्यत्वं तल्लिङ्गकत्वप्रकारकत्वम् । आलोक-लिङ्गक-धूमलिङ्गकानुमितिर्जायताम्', इत्याकारकेच्छानिरूपितानुमितिनिष्ठविशेष्य-तायां आलोकलिङ्गकत्वनिष्ठप्रकारताभिन्न-धूमलिङ्गकत्वनिष्ठप्रकारतानिरूपितत्वमेवास्ति, न तु तदनिरूपितत्वमिति तादृशप्रकारत्वानिरूपितविशेष्यताशून्यत्वं तस्यां इच्छायामक्षतमिति प्रतिबन्धकत्वनिर्वाहः ।

धूमलिङ्गकवह्नयनुमितिः आलोकलिङ्गकवह्निघटोभयानुमितिश्च जायताम् इत्या-कारकेच्छायां अनुमितिनिष्ठविशेष्यतायां तत्साध्यवह्निविशिष्टपर्वतविषयकत्वनिष्ठ-प्रकारताभिन्नघटविशिष्टपर्वतविषयकत्वनिष्ठप्रकारतानिरूपितत्वमेवास्तीति तादृशप्रकार-त्वानिरूपितविशेष्यताशून्यत्वस्य तस्यां इच्छायां सत्त्वात् प्रतिबन्धकत्वनिर्वाहः ।

## गादाधरी

तल्लिङ्गकत्वाप्रकारकत्वेत्यनेन विवक्षणीयम्। उक्तस्थले चालोकलिङ्गकत्ववह्न्यनुमितित्वादिप्रकारतानिरूपितविशेष्यता तादृशप्रकारतातिरिक्तधूमलिङ्गकत्वादिप्रकारतानिरूपितैव, समूहालम्बन एव प्रकारताभेदेन विशेष्यताभेदात्। अन्यथा समूहालम्बनेच्छातस्तादृशेच्छावैलक्षण्यानुपपत्तेः। तथा च तादृशेच्छानां तथाविधप्रकारत्वानिरूपितविशेष्यताशून्यत्वेन प्रतिबन्धकत्वनिर्वाहः। आलोकेनानुमितिर्जायतां धूमेन च पर्वते वह्निमनुमिनुयामित्याकारकसमूहालम्बनेच्छानां तादृशविशेष्यताशून्यत्वविरहेऽपि

---

## भावबोधिनी

न च प्रकारताभेदेन विशेष्यतायाः भेदात् आलोकलिङ्गकत्वनिष्ठप्रकारतानिरूपितायां अनुमितिनिष्ठविशेष्यतायां धूमलिङ्गकत्वनिष्ठप्रकारतानिरूपितत्वविरहात् भिन्नप्रकारत्वानिरूपितविशेष्यताकाया: आलोकलिङ्गकधूमलिङ्गकानुमितिर्जायताम् इत्याकारकेच्छायां कथं प्रतिबन्धकत्वम् इति वाच्यम्। समूहालम्बनेच्छायामेव प्रकारताभेदेन विशेष्यताभेदाङ्गीकारात्। अन्यथा समूहालम्बनासमूहालम्बनेच्छायो: वैलक्षण्यानुपपत्तेः इति प्रघट्टकार्थः।

घटाद्यनुमितिसामग्र्यामसत्यामिति। तस्यां सत्यां तु आलोकपरामर्शात् वह्निघटोभयानुमितेः उत्पत्त्या आलोकलिङ्गकवह्न्यनुमितिप्रतिबन्धकत्वम् इच्छायां नास्तीति प्रतिबन्धकत्वोपपत्त्यर्थमेवमुक्तम्।

ननु तल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताशून्यत्वविवक्षणेऽपि यत्र 'पर्वतः वह्निमान्, वह्निव्याप्यालोकवान्, रत्नव्याप्यालोकवाँश्च' इति परामर्शः 'आलोकेन अनुमितिः जायताम्', 'धूमेन च पर्वते वह्निमनुमिनुयाम्' इत्याकारकसमूहालम्बनेच्छा वर्तते, तत्र 'पर्वतो वह्निमान्' इत्यनुमितिः नोत्पद्यते, सिद्ध्यप्रतिबध्यालोकलिङ्गकरत्नानुमित्युत्पत्त्यैव

गादाधरी

आलोकलिङ्गकान्यानुमितिसामग्रीकालीनतथाविधेच्छानां तत्तद्व्यक्तित्वेन पृथक् प्रतिबन्धकत्वोपगमेन न तदानीमालोकलिङ्गकानुमित्यापत्तिः। पर्वते वह्निमनुमिनुयां धूमेन च वह्निमनुमिनुयामित्याद्याकारकसमूहालम्बनेच्छायाः प्रामाणिकत्वे तत्रालोकपरामर्शादनुमितिर्भवत्येव। एवञ्च लिङ्गविशेषजन्यत्वाद्यविषयकेच्छाया विशेषणदलेनैव प्रतिबन्धकत्ववारणे धूमेन घटमनुमिनुयामित्यादीच्छावारणमेव विशेष्यदलप्रयोजनम्, तदर्थश्च न किञ्चिल्लिङ्गकत्वप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषय-

---

भावबोधिनी

तदिच्छाविषयसिद्धेः। तथा च तदिच्छायाः आलोकलिङ्गकवह्न्यनुमितिप्रतिबन्धकत्वमावश्यकम्। उक्तपरिष्काररीत्या तु आलोकलिङ्गकत्वादिनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकत्वमेव तादृशेच्छायामस्ति, न तु तादृशविशेष्यताशून्यत्वमिति कथं प्रतिबन्धकत्वनिर्वाहः इत्यत्राह– आलोकेनानुमितिर्जायतामिति। तथा च उक्तप्रतिबन्धकतावच्छेदकरूपशून्यानां तथाविधेच्छानां तत्तद्व्यक्तित्वेन पृथक् प्रतिबन्धकत्वोपगमात् न तदानीं आलोलिङ्गकवह्न्यनुमित्यापत्तिः इति भावः।

नन्वेवमपि 'पर्वते वह्निमनुमिनुयाम्', 'धूमेन च वह्निमनुमिनुयाम्' इत्याकारकसमूहालम्बनेच्छायाः आलोकपरामर्शजन्यानुमितौ प्रतिबन्धकत्वं न स्यात्। लिङ्गविशेषजन्यत्वनिष्ठप्रकारत्वानिरूपितायाः अनुमितिनिष्ठायाः इच्छीयविशेष्यतायाः तल्लिङ्गकत्वादिनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितत्वात् तादृशप्रकारत्वानिरूपितविशेष्यताकत्वस्यैव इच्छायां सद्भावात् इत्याशङ्क्य इष्टापत्त्या समाधत्ते– पर्वते वह्निमनुमिनुयामिति।

ननु तल्लिङ्गकत्वप्रकारत्वस्य उक्तरीत्या परिष्करणे किञ्चिल्लिङ्गकत्वप्रकारकत्व-

गादाधरी

कत्वावच्छिन्नविशेष्यताकत्वं तथा सति धूमेनानुमिनुयाम् इत्याद्याकारकविषयविशेषानुपरक्तानुमितीच्छानामसंग्रहापत्तेः। किन्तु किञ्चिल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वादिप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकत्वमेव विशेष्यदलेन विवक्षणीयम्। धूमेन घटमनुमिनुयामितीच्छावत् धूमेन वह्निघटोभयमनुमिनुयामित्यादीच्छाया अपि आलोकलिङ्गकवह्न्याद्यनुमित्यविरोधित्वमिष्टमेव। सिद्धौ तादृशेच्छाया अनुत्तेजकतया सिद्धिकाले तादृशेच्छाबलादसत्यामालोलिङ्गकानुमितीच्छायां

---

भावबोधिनी

रूपविशेष्यदलं व्यर्थम्। लिङ्गविशेष्यजन्यत्वाप्रकारिकायाः 'पर्वते वह्निमनुमिनुयाम्' इत्याकारकेच्छायाः तल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकत्वादिनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकत्वेन तादृशविशेष्यताशून्यत्वरूपसत्यन्तविरहादेव तस्याः प्रतिबन्धकत्ववारणसंभवात् इत्याशङ्क्य विशेष्यदलस्य प्रयोजनान्तरमाह—एवञ्चेति। इत्यादिइच्छावारणमिति। इत्यादीच्छायाः प्रतिबन्धकत्ववारणमित्यर्थः। तथा च किञ्चिल्लिङ्गकत्वप्रकारकत्वरूपविशेष्यदलानुपादाने आलोकपरामर्शकालीनायाः धूमेन घटमनुमिनुयाम् इतीच्छायाः वह्न्यनुमितिप्रतिबन्धकत्वापत्तिः। तस्याः आलोकलिङ्गकत्वादिनिष्ठप्रकारताभिन्नधूमलिङ्गकत्वघटविषयकत्वनिष्ठप्रकारतानिरूपितविशेष्यताकत्वस्यैव अस्ति इति तादृशप्रकारत्वानिरूपितविशेष्यताशून्यत्वरूपसत्यन्तसद्भावात्। अतः विशेष्यदलोपादानम्।

ननु विशेष्यदलोपादानेऽपि धूमेन घटमनुमितुयाम्' इतीच्छायाः किञ्चिल्लिङ्गकत्वप्रकारकत्वरूपविशेष्यदलसत्त्वात् कथं प्रतिबन्धकत्ववारणम् इत्याशङ्क्य परिष्कृतविशेष्यदलविरहात् प्रतिबन्धकत्ववारणमिति मनसिकृत्य विशेष्यदलं परिष्करोति तदर्थंश्चेति। किञ्चिल्लिङ्गकत्वनिष्ठप्रकारतानिरूपिततत्साध्यविशिष्ट—तत्पक्षविषयकत्वा-

भावबोधिनी

वच्छिन्नविशेष्यताकत्वं यदि विशेष्यदलार्थः तदा आलोकपरामर्शजन्यानुमितौ साध्यविशेषानवगाहिन्याः धूमेनानुमितुयाम् इति इच्छायाः प्रतिबन्धकत्वं न स्यात्। अतः किञ्चिल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकत्व-अनुमितित्वनिष्ठ-प्रकारताभिन्न-प्रकारत्वानिरूपितविशेष्यताकत्वम् विशेष्यदलेन विवक्षितम्। इत्थं च 'धूमेन अनुमितुयाम्' इतीच्छायाः प्रतिबन्धकत्वं निर्वहति। 'धूमेन घटमनुमितुयाम्' इतीच्छायाः प्रतिबन्धकत्वं वारयितुं शक्यते। तस्याः तत्साध्यविशिष्टतत्पक्षविषयकत्वभिन्नघटविषयकत्वनिष्ठप्रकारतानिरूपितविशेष्यताकत्वात् तादृशप्रकारत्वानिरूपितविशेष्यताकत्वविरहात्।

ननु आलोकलिङ्गकवह्न्यनुमितिं प्रति 'धूमेन वह्निघटोभयमनुमितुयाम्' इतीच्छायाः प्रतिबन्धकत्वं न स्यात्। तत्साध्यविशिष्टतत्पक्षविषयकत्वादिनिष्ठ-प्रकारताभिन्नघटविषयकत्वनिष्ठप्रकारतानिरूपितविशेष्यताकत्वेन विशेष्यदलविरहात इत्याशङ्कां इष्टापत्त्या परिहरति-**धूमेन घटमनुमितुयाम्** इत्यादिना। ननु तादृशेच्छायाः आलोकलिङ्गकानुमित्यप्रतिबन्धकत्वे सिद्धकालेऽपि तादृशेच्छाबलात् वह्न्यनुमित्यापत्तिः इत्यत आह-**सिद्धौ चेति**। तथा च सिद्धौ 'धूमेन वह्निघटोभयमनुमितुयाम्' इतीच्छायाः उत्तेजकत्वविरहात उत्तेजकाभावविशिष्टसिद्ध्यभावरूपपक्षताविरहात न अनुमित्यापत्तिरिति भावः।

ननु यत्र धूमलिङ्गकेच्छा धूमालोकोभयलिङ्गपरामर्शश्च तत्र जायमानायाः वह्न्यनुमितेः आलोकलिङ्गकत्वात् आलोकलिङ्गकानुमितौ आलोकान्यलिङ्गकेच्छारूपप्रतिबन्धकाभावस्य तत्र व्यतिरेकव्यभिचारः इत्यत्राह — **एकलिङ्गकेच्छाकालीनेति। अग्रे प्रदर्शयिष्यत इति।** अन्यलिङ्गकपरामर्शाभावविशिष्ट-अन्यलिङ्गकेच्छाया एव तल्लिङ्गकानुमितौ प्रतिबन्धकत्वात् उक्तस्थले आलोकान्यधूमलिङ्गकपरामर्शस्यापि

गादाधरी

न तादृशानुमितिरिति दिक्।

एकलिङ्गकेच्छाकालीनोभयलिङ्गकपरामर्शजन्यानुमितौ व्यभिचारवारणप्रकारः पुनरग्रे प्रदर्शयिष्यते।

ननु स्वविषयसजातीयज्ञाने इच्छाया विरोधित्वमदृष्टचरमित्यत आह-कामिनीजिज्ञासादिवदिति। यथा कामिनीदिदृक्षा घटादिविषयकचाक्षुषादिप्रतिबन्धिका तथेत्यर्थः। पृथक् प्रतिबन्धिकेति। पक्षतासमवधानदशायामनुमिनुयादप्रयोजिकेत्यर्थः,

---

भावबोधिनी

सद्भावात् तदभावविशिष्टधूमलिङ्गकेच्छारूपप्रतिबन्धकाभावः अस्तीति न व्यतिरेकव्यभिचार इत्याशयः। स्वविषयसजातीयेति-साजात्यं च प्रकृते अनुमितित्वेन रूपेण।

दीधितौ-तल्लिङ्गकानुमितीच्छा इत्यनेन तल्लिङ्गकानुमितौ तल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावः पक्षता इति सूचितम्। तल्लिङ्गकानुमितीच्छा इत्यस्य यथाश्रुतार्थः तल्लिङ्गकत्वनिष्ठप्रकारतानिरूपितानुमितिनिष्ठविशेष्यताकेच्छेति। तथा सति धूमलिङ्गकानुमितौ 'धूमेन घटमनुमिनुयाम्' इतीच्छाविरहविशिष्टसिद्ध्यभावस्यापि पक्षतात्वं स्यात्। तद्वारणाय उत्तेजकत्वेनाभिमतेच्छानिरूपितानुमितिनिष्ठविशेष्यतायां तत्साध्यविशिष्ट-तत्पक्षविषयकत्वावच्छिन्नत्वं निवेशनीयमित्यभिप्रेत्य व्याचष्टे-तल्लिङ्गकत्वप्रकारतानिरूपितेत्यादिना। ननु यदि सिद्धौ उत्तेजकीभूता सिषाधयिषा तल्लिङ्गकत्वनिष्ठप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नानुमितिनिष्ठविशेष्यताकेच्छारूपा विवक्षिता तर्हि यत्र 'पर्वतो वह्निमान् वह्निव्याप्यधूमवाँश्चेति सिद्ध्यात्मकपरामर्शे सति 'लिङ्गविशेषानुपरक्ता अनुमितिर्जायतामिति' वा 'पर्वते वह्निमनुमिनुयाम्' इति वा इच्छा अस्ति, तत्र 'पर्वतो वह्नि-

गादाधरी

तथा चोक्तस्थले पक्षतासत्त्वेऽपि क्षतिविरहात्तदिष्टमेवेति भावः।

नन्‌ कामिनीजिज्ञासास्थले कामिनीभिन्नविषयकज्ञानानुत्पादस्य सर्वानुभवसिद्धतया तत्र तस्याः प्रतिबन्धकत्वमस्तु, सिद्ध्यसत्त्वे धूमादिलिङ्गकानुमित्सादशायां आलोकलिङ्गकवह्न्यनुमित्यनुत्पादस्तु नानुभविकः। तथा सति तुल्ययुक्त्या घटाद्यनुमित्साप्रत्यक्षादिगोचरेच्छादशायामपि तदनुत्पादस्य तथात्वप्रसक्तेः। न ह्यत्र कमपि विशेषमीक्षामहे इत्यभिसन्धाय उक्तापत्तिवारककल्पान्तरमनुसरति – यदि चेति।

---

भावबोधिनी

मान्' इत्यनुमितिर्न स्यात्। तल्लिङ्गकत्वप्रकारकेच्छाविरहविशिष्टसिद्धेरेव तत्र सत्त्वेन तादृशसिद्ध्यभावरूपपक्षताविरहात् इति अनुपपत्तिं पर्यालोच्य तदन्यमात्रलिङ्गकेत्यादिना पक्षान्तरमुक्तं दीधितौ। तेन तल्लिङ्गकानुमितिं प्रति तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छाविरहविशिष्टसिद्ध्यभावः पक्षतेति लभ्यते। तत्र मात्रपदस्य प्रयोजनमाह गादाधर्याम्–धूमेन आलोकेन चानुमिनुयाम् इति। तथा च मात्रपदानुपादाने तदन्यलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छा सिषाधयिषापदार्थः स्यात्। तथा सति यत्र 'पर्वतो वह्निमान्' वह्निव्याप्यालोकवाँश्चेति परामर्शः 'धूमेन आलोकेन चानुमिनुयाम्' इति समूहालम्बनेच्छा च तत्र 'पर्वतो वह्निमान्' इत्यनुमितिः न स्यात्। तस्याः इच्छायाः आलोकान्यधूमलिङ्गकत्वप्रकारकत्वात् तदन्यलिङ्गकानुमितीच्छातिरिक्तत्वं नास्तीति तस्याः अनुत्तेजकत्वात्। अतः मात्रपदमुपात्तम्। तस्मिन्नुपात्ते सति 'धूमेन आलोकेन च अनुमिनुयाम्' इतीच्छायाः आलोकान्यमात्रलिङ्गकानुमितिविषयकत्वं नास्ति। आलोकलिङ्गकानुमितेरपि तत्र विषयत्वात्। तथा च आलोकान्यमात्रलिङ्गकानुमितीच्छाभिन्नैव

**गादाधरी**

**तथा चान्यलिङ्गकानुमित्सायाः प्रतिबन्धकत्वमसम्भावितमेवेति भावः। तत्रेति। अन्यलिङ्गकानुमित्सास्थले इत्यर्थः। तल्लिङ्गकानुमितीच्छा। तल्लिङ्गकत्वप्रकारता-निरूपिततत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वाद्यवच्छिन्नविशेष्यताकेच्छा वाच्या सिषाधयिषापदेन विवक्षणीयेत्यर्थः।**

**नन्वेवं लिङ्गविशेषानुपरक्तानुमित्साकाले सिद्धौ सत्यामनुमित्यनुपपत्तिरत**

---

**भावबोधिनी**

सा इच्छेति तस्याः उत्तेजकत्वम् संभवतीति न दोषः।

**तथा चेत्यादि।** आलोकलिङ्गकवह्निविशिष्टपर्वतविषयकानुमितित्वाप्रकारिका सती या किञ्चिल्लिङ्गकवह्निविशिष्टपर्वतविषयकानुमितित्वप्रकारिकेच्छा 'धूमेन पर्वते वह्नि-मनुमिनुयाम्' इत्याद्याकारिका तदन्या वह्निविशिष्टपर्वतविषयकानुमितित्वप्रकारि-केच्छा 'आलोकेन पर्वते वह्निमनुमिनुयाम्' इत्याकारिका वा 'पर्वते वह्निमनु-मिनुयाम्' इत्याकारिका वा इच्छा आलोकलिङ्गकवह्न्यनुमितौ उत्तेजिका इत्यर्थः।

सत्यन्तस्य प्रयोजनमाह–**लिङ्गविशेषोपरक्तेति।** तथा च सत्यन्तानुपादाने 'धूमेन पर्वते वह्निमनुमिनुयाम्, इत्याकारिकायाः लिङ्गविशेषोपरक्तानुमितीच्छायाः सिषाधयिषापदेन सङ्ग्रहो न स्यात्। तस्याः किञ्चिल्लिङ्गकतत्साध्यविशिष्टतत्पक्ष-विषयकानुमितित्वप्रकारकतया तदन्यत्वविरहात्। सत्यन्ते उपात्ते तु तल्लिङ्गकतत्सा-ध्यविशिष्टतत्पक्षविषयकानुमितित्वाप्रकारकत्वरूपविशेषणविरहात् विशिष्टेच्छाभिन्नत्व-मस्तीति तत्सङ्ग्रह इति भावः। सत्यन्ते तत्साध्यविशिष्ट-तत्पक्षविषयकत्वानु-पादाने 'आलोकेनेन्धनमनुमिनुयाम्' 'धूमेन च वह्निमनुमिनुयाम्' इत्याकारक-समूहालम्बनेच्छायाः आलोकलिङ्गकवह्न्यनुमितौ प्रतिबन्धकीभूतायां सिद्धौ उत्तेज-

गादाधरी

आह– तदन्यमात्रलिङ्गकेति। धूमेनालोकेन चानुमिनुयामित्यादिसमूहालम्बनेच्छाकाले आलोकादिलिङ्गकानुमितेः उपपत्तये मात्रेति। तथा च तल्लिङ्गकतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वाप्रकारिका सती या किञ्चिल्लिङ्गकतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वप्रकारिकेच्छा तदन्यतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वादिप्रकारिकेत्यर्थः।

लिङ्गविशेषोपरक्तानुमितीच्छासंग्रहाय सत्यन्तम्। आलोकेनेन्धनमनुमिनु-

---

भावबोधिनी

कत्वं स्यात्। तस्याः तल्लिङ्गकानुमितित्वाप्रकारकत्वरूपविशेषणविरहेण विशिष्टेच्छाभिन्नत्वसद्भावात्। तत्साध्यविशिष्टतत्पक्षविषयकत्वनिवेशे तु तदिच्छायां आलोकलिङ्गकेन्धनविशिष्टपर्वतविषयकानुमितित्वप्रकारकत्वेऽपि वह्निविशिष्टपर्वतविषयकत्वाप्रकारकत्वरूपं विशेषणमस्तीति विशिष्टेच्छाभिन्नत्वविरहात् नोत्तेजकत्वम्। किञ्चिल्लिङ्गकतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वप्रकारकत्वरूपविशेष्यदलानुपादाने लिङ्गविशेषानुपरक्तायाः 'पर्वते वह्निमनुमिनुयाम्' इतीच्छायाः आलोकलिङ्गकवह्न्यनुमितिप्रतिबन्धकसिद्धौ उत्तेजकत्वं न स्यात्। तस्याः तल्लिङ्गकानुमितित्वाप्रकारकत्वेन तदप्रकारकेच्छाभिन्नत्वविरहात्। एवं तत्रैव पर्वते 'वह्निमनुमिनुयाम्' 'धूमेनेन्धनमनुमिनुयाम्' इत्याकारकसमूहालम्बनेच्छयाः उत्तेजकत्वानुपपत्तिः। विशेष्यदले उपात्ते तु द्वयोरपीच्छायोः किञ्चिल्लिङ्गकतत्साध्यवह्निविशिष्टपर्वतविषयकानुमितित्वप्रकारकत्वविरहात् तत्प्रकारकेच्छाभिन्नत्वमक्षतमिति उत्तेजकत्वोपपत्तिः इति भावः।

चरमदलमिति। तदन्यतत्साध्यविशिष्टतत्पक्षविषककानुमितित्वप्रकारिकेत्यत्र

### गादाधरी

याम् धूमेन च वह्निमनुमिनुयामित्याद्याकारकेच्छाबलादालोकलिङ्गकवह्नयाद्यनुमित्यापत्ति-वारणाय तत्र साध्यादिनिवेशः। लिङ्गविशेषानुपरक्तानुमितीच्छाकाले पर्वते वह्निमनु-मिनुयां धूमेनेन्धनमनुमिनुयामित्याद्याकारकसमूहालम्बनेच्छाकाले चालोकलिङ्गकानु-मित्युपपत्तये तद्विशेष्यदलम्। यत्किञ्चिद्गोचरं ज्ञानं जायतामित्या दीच्छाव रणाय चरमदलम्।

---

### भावबोधिनी

तदन्य' इत्यस्मात् अवशिष्टं यत् तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वप्रकारि-केति दल तत् चरमदलपदेन विवक्षितम्।

यद्यपीत्यादि। 'पर्वतः वह्निमान् वह्निव्याप्यालोकवाँश्चे'ति सिद्ध्यात्मकपरा-मर्शकाले 'आलोकधूमोभयलिङ्गकवह्निविशिष्टपर्वतविषयकानुमितिर्जायताम्' इतीच्छायाः 'आलोकेन वह्निघटोभयविशिष्टपर्वतविषयकानुमितिः, धूमेन वह्निविशिष्टपर्वतमहानसो-भयविषयकानुमितिश्च जायताम्' इत्याकारकसमूहालम्बनेच्छायाश्च पर्वतो वह्निमान् इत्यनुमितिं प्रति उत्तेजकत्वं नेष्यते। उक्तपरिष्कारे तु तयोर्द्वयोरपीच्छयोः आलोकलिङ्गकवह्निविशिष्टपर्वतविषयकानुमितित्वप्रकारकतया तदप्रकारकत्वरूपविशेषण-विरहात् विशिष्टेच्छाभिन्नत्वसत्त्वात् उत्तेजकत्वापत्तिः। तद्वारणाय तल्लिङ्गकत्व-तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यता-कान्यत्वम् सत्यन्तदलेन विवक्षणीयम्। उक्तेच्छयोः आलोकलिङ्गकत्वादिनिष्ठ-प्रकारताभिन्ना या धूमलिङ्गकत्वनिष्ठा घटविषयकत्वनिष्ठा च प्रकारता तन्निरूपित-विशेष्यताकत्वात् तदनिरूपितविशेष्यताकान्यत्वरूपसत्यन्तदलसत्त्वात् किञ्चिल्लिङ्गक-वह्निविशिष्टपर्वतविषयकानुमितित्वप्रकारकत्वरूपविशेष्यदलसत्त्वाच्च विशिष्टेच्छाभिन्नत्व-

### गादाधरी

यद्यपि आलोकधूमोभयलिङ्गकवह्निविशिष्टपर्वतविषयकानुमितिर्जायतामालोकेनवह्निघटोभयविशिष्टपक्षविषयकानुमितिर्धूमेन वह्निविशिष्टपर्वतमहानसोभयविषयकानुमितिश्च जायतामित्यादीच्छावारणाय तल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वादिप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकान्यत्वमेव सत्यन्तदलेन विवक्षणीयम्। तथा च लिङ्गविशेषानुपरक्तानुमितीच्छानां तादृशविशेष्यताकान्यत्वविरहात्किञ्चिल्लिङ्गकत्वादिप्रकारतानिवेशनमफलमेवेति तथाविधविशेष्यताशालित्वेनैवेच्छाया

---

### भावबोधिनी

रूपं उत्तेजकतावच्छेदकं नास्तीति न दोषः। इत्थं च लिङ्गविशेषानुपरक्तानां 'पर्वते वह्निमनुमिनुयाम्' इत्यादीच्छानां तल्लिङ्गकत्वादिनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकानां तादृशविशेष्यताकान्यत्वविरहात् किञ्चिल्लिङ्गकत्वप्रकारकत्वनिवेशं विनापि उत्तेजकत्वनिर्वाहात् तन्निवेशनं व्यर्थम्। तदनिवेशे च तल्लिङ्गकत्वादिनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकान्येच्छाभिन्नेच्छात्वेन उत्तेजकत्वापेक्षया लाघवात् तादृशविशेष्यताकेच्छात्वेन उत्तेजकत्वमुचितम्। तथा च तद्भिन्नभिन्नत्वेन निवेशनं दीधितिकृतोऽसङ्गतमिति यद्यपीत्यादिना आक्षेपः।

समाधानं तु दीधितिग्रन्थस्यापि तथाविधविशेष्यताशालित्वेन इच्छाया उत्तेजकत्वे एव तात्पर्यमिति। शेषं पूर्वोक्तदिशा अवसेयम् इति। तल्लिङ्गकत्वं आलोकलिङ्गकपरामर्शजन्यत्व – आलोकत्वावच्छिन्नविषयकपरामर्शजन्यत्वोभयरूपम्। 'द्रव्येणानुमिनुयाम्' इतीच्छावारणं तत्पक्षतत्साध्यादिनिवेशप्रयोजनं च पूर्वोक्तरीत्या ज्ञेयमित्यर्थः।

तल्लिङ्गकानुमितिजनकपक्षताशरीरे तल्लिङ्गकानुमितीच्छायाः प्रवेशे लिङ्गभेदेन

## गादाधरी

उत्तेजकत्वमुचितं, तथापि तादृशविशेष्यताशालीच्छायामेव तदन्यमात्रेत्यादिग्रन्थतात्पर्यमिति। शेषं पूर्वोक्तदिशा अवसेयम्।

धूमालोकोभयलिङ्गकानुमितौ च धूमलिङ्गकत्वालोकलिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वादिप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताशालीच्छात्वेन स्वातन्त्र्येणोत्तेजकत्वम्। तेनोभयलिङ्गकानुमितीच्छादशायां उभयलिङ्गकपरामर्शादनुमित्युपपत्तिः। धूमालोकभस्मभिरनुमिनुयाम् इत्यादीच्छाकाले तदुभयलिङ्गकपरामर्शादनुमित्यापत्तिवारणं च।

---

## भावबोधिनी

पक्षताभेदप्रसङ्ग इत्याशङ्क्य इष्टापत्त्या समाधत्ते—लिङ्गविशेषणापीति दीधितौ-यथा साध्यपक्षादिभेदेन पक्षता भिन्ना, तथा लिङ्गभेदेन पक्षता भिन्नेति तदर्थः। गादाधर्यां नन्वेवं लिङ्गभेदेनेत्यादि। लिङ्गभेदेन पक्षताभेदाङ्गीकारे 'पर्वतः वह्निव्याप्यालोकवान्' इति परामर्शकालीनया 'आलोकेन पर्वते वह्निमनुमिनुयाम्' इतीच्छया 'पर्वतः वह्निव्याप्यधूमवान्' इति परामर्शकालीनया 'धूमेन वह्निमनुमिनुयाम्' इतीच्छया च 'पर्वतो वह्निमान्' इति एकविधाया एव अनुमितेरुत्पत्त्या 'पर्वतो वह्निमान्' इत्यनुमितिं प्रति आलोकलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य धूमलिङ्गकानुमतीच्छाविरहविशिष्टसिद्ध्यभावस्य च पक्षताविधया हेतुत्वं वक्तव्यम्। तथा सति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावात् यत्र 'पर्वतो वह्निमान्' इत्यनुमितिः, तत्र आलोकलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावं विनापि अनुमितेर्जायमानतया व्यतिरेकव्यभिचारः इति शङ्कितुरभिप्रायः। अननुगमादिति। भेदादित्यर्थः। अनुगतकार्ये इति। 'पर्वतो वह्निमान्' इत्याकारके एकस्मिन्

दीधितिः

लिङ्गविशेषणापि च नियन्त्रितं पक्षत्वम्। तल्लिङ्गकानुमितौ सिद्धिकालीनतल्लिङ्गकानुमितीच्छाविरहविशिष्टान्यलिङ्गकानुमितीच्छा एव वा प्रतिबन्धिका।

---

गादाधरी

नन्वेवं धूमालोकादिलिङ्गकानुमितिसाधारणैकपक्षतासम्भव इत्यत्र इष्टापत्तिमाह - लिङ्गविशेषणापीति। लिङ्गभेदेनापि पक्षत्वं भिन्नमेवेत्यर्थः। अपिः साध्यादिभेदसमुच्चायकः तत्प्रदर्शनञ्च दृष्टान्तार्थम्। तथा च साध्यादिभेदेनेव लिङ्गभेदेनापि पक्षताभेदो न क्षतिकर इति भावः।

नन्वेवं लिङ्भेदेन पक्षताया अननुगमात् तस्या व्यभिचारेणानुमितिरूपानुगतकार्ये हेतुत्वासम्भवः। न च तत्तत्साध्यकत्वादिवत्तत्तल्लिङ्गकत्वस्यापि कार्यता-

---

भावबोधिनी

कार्ये इत्यर्थः। न च कार्यतावच्छेदकशरीरे तल्लिङ्गकत्वमपि निवेश्य आलोकलिङ्कपर्वतोद्देश्यकवह्निविधेयकानुमितित्वावच्छिन्नं प्रति आलोकलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावः कारणम इति रीत्या कार्यकारणभावकल्पनात् नोक्तव्यतिरेकव्यभिचार इति वाच्यम्। तथा सत्यपि 'यत्र पर्वतो वह्निमान्', वह्निव्याप्यधूमवान् वह्निव्याप्यालोकवाँश्च, इत्याकारकसमूहालम्बनपरामर्शः 'पर्वते आलोकेन वह्निमनुमिनुयाम्' इति आलोकलिङ्गकानुमितीच्छा च अस्ति तत्र 'पर्वतो वह्निमान्' इत्यनुमितिः जायते। सा चानुमितिः धूमपरामर्शजन्यत्वात् धूमलिङ्गिकापि भवति। धूमलिङ्गकानुमितिं प्रति कारणभूतः धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्तु तत्र नास्ति इति व्यतिरेकव्यभिचारस्य दुर्वारत्वात्।

## गादाधरी

वच्छेदके निवेशान्न व्यभिचार इति वाच्यम्। तावताप्यालोकादिलिङ्गकानुमितीच्छाधीनधूमालोकोभयादिविषयकसमूहालम्बनपरामर्शजन्यानुमितौ धूमादिलिङ्गकानुमितीच्छाविरहविशिष्टसिद्ध्यभावव्यभिचारस्य दुर्वारत्वात्तादृशानुमितावपि धूमादिलिङ्गकपरामर्शजन्यत्वरूपधूमलिङ्गकत्वस्याक्षतत्वात्।

न च यत्र धूमलिङ्गकानुमितीच्छाया उत्तेजकता तत्रालोकलिङ्गकानुमितीच्छानामपि तत्तल्लिङ्गकपरामर्शविशिष्टानामुत्तेजकत्वोपगमान्नोक्तस्थले व्यभि-

---

## भावबोधिनी

न च यत्रेति। यादृशानुमितौ धूमलिङ्गकानुमितीच्छा उत्तेजिका तादृशानुमितौ आलोकलिङ्गकानुमितीच्छाया अपि धूमलिङ्गकपरामर्शविशिष्टायाः उत्तेजकत्वाङ्गीकारात् आलोकलिङ्गकानुमितीच्छाविरहविशिष्टसिद्ध्यभावस्यापि उभयपरामर्शजन्यायां धूमलिङ्गकानुमितौ हेतुत्वात् पक्षतां विना अनुमित्युत्पत्तिरूपः व्यतिरेकव्यभिचारो नास्ति इति शङ्कितुराशयः। तथा सतीति। अन्यलिङ्गकेच्छापि अन्यलिङ्गकानुमितौ उत्तेजिका इत्यङ्गीकारे धूमलिङ्गकपरामर्शविशिष्टायाः धूमलिङ्गकेच्छायाः धूमलिङ्गकानुमितौ आलोकलिङ्गकानुमितौ च उत्तेजकत्वसंभवात् सर्वत्र धूमलिङ्गकपरामर्शविशिष्टधूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावरूपायाः एकस्या एव पक्षतायाः सुवचत्वात् लिङ्गभेदेन पक्षताभेदकथनम् असंगतमित्याशयः। तथा च कार्यतावच्छेदककोटौ तल्लिङ्गकत्वनिवेशे उक्तानुपपत्तीनां प्रसङ्गात् कार्यतावच्छेदके तन्न निवेशनीयम्। तदनिवेशे च व्यतिरेकव्यभिचारो दुर्वार इति आक्षेपसारः।

अस्याक्षेपस्य परिहारमाह--धूमलिङ्गकेच्छाविरहविशिष्टेत्यादिना। धूमलिङ्ग-

गादाधरी

चार इति वाच्यम्। तथा सति तत्र धूमलिङ्गकेच्छाया अपि धूमलिङ्गकपरामर्शविशिष्टाया एवोत्तेजकत्वौचित्यात्, सर्वसाधारणैकपक्षतताया एव सुवचतया लिङ्गविशेषणापीति ग्रन्थासङ्गतिरिति चेन्न। धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टान्यानुमितित्वमेव तादृशसिद्ध्यभावजन्यतावच्छेदकम्। तादृशसिद्धिविशिष्टत्वं च स्वसामानाधिकरण्यावच्छिन्नस्वाव्यवहितोत्तरोत्पत्तिकत्वसंबन्धेन, उक्तसमूहालम्बनस्थलीयानुमितिस्तथाविधसिद्धिविशिष्टैवेति तत्र न व्यभिचारः। सिद्धिकालेऽसत्यां तल्लिङ्ग-

---

भावबोधिनी

केच्छाविरहविशिष्टा या सिद्धिः तद्विशिष्टा या अनुमितिः तद्भिन्नानुमितित्वावच्छिन्नं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावः कारणम्। अनुमितौ तादृशसिद्धिविशिष्टत्वञ्च स्वसामानाधिकरण्य—स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंबन्धेन। पर्वतः वह्निव्याप्यधूमवान्, ' वह्निव्याप्यालोकवाँश्च ' इति समूहालम्बनपरामर्शानन्तरं आलोकलिङ्गकानुमितीच्छया जायमाना या 'पर्वतो वह्निमान्' इत्यनुमितिः तस्याः धूमविषयकपरामर्शजन्यत्वेन धूमलिङ्गकत्वेऽपि धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिमति आत्मनि तादृशसिद्ध्युत्तरं जायमानतया उक्तोभयसंबन्धेन धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टत्वमेवास्ति, न तु तादृशसिद्धिविशिष्टान्यत्वमिति कार्यतावच्छेदकानाक्रान्ततया तत्र धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावरूपकारणविरहेऽपि न व्यतिरेकव्यभिचारः। कारणं विना कार्यतावच्छेदकावच्छिन्नोत्पत्तावेव व्यतिरेकव्यभिचारात्।

अस्मिन् पक्षे कार्यतावच्छेदककोटौ इच्छांशे तल्लिङ्गकत्वस्य प्रवेशात् लिङ्गभेदेन पक्षताभेदप्रतिपादकस्य दीधितिग्रन्थस्य नासङ्गतिः।

ननु धूमालोकोभयविषयकपरामर्शस्थले सिद्धिकाले धूमलिङ्गकेच्छां विनापि

## गादाधरी

सिषाधयिषायामुक्तस्थल इव न धूमपरामर्शादनुमित्यापत्तिः, धूमादिलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावादिघटितस्यैव धूमादिपरामर्शघटितकारणस्तोमस्य कार्योत्पत्तिप्रयोजकत्वोपगमात् । समूहालम्बनस्थले आलोकादिपरामर्शादिघटितसामग्रीत एव कार्योत्पत्तिनिर्वाहात् ।

अथात्राप्यव्यवहितोत्तरत्वमवश्यं तृतीयक्षणसाधारणं, स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपं वाच्यम् । अन्यथा यत्र क्रमेण

---

## भावबोधिनी

आलोकलिङ्गकेच्छामात्रात् धूमलिङ्गकानुमितेः स्वीकारे यत्र धूममात्रपरामर्शः सिद्ध्यात्मकः अस्ति तत्रापि धूमलिङ्गकसिषाधयिषां विना अनुमित्यापत्तिः इत्याशङ्क्य धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावसहितस्यैव धूमपरामर्शस्य धूमलिङ्गकानुमित्युत्पादकत्वम्, समूहालम्बनपरामर्शस्थले तु आलोकलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावसहितस्य आलोकपरामर्शस्य अनुमितिहेतुत्वमिति स्वीकारात् न दोष इति समाधत्ते **सिद्धिकालेऽसत्यामित्यादिना** ।

एतावता, धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टानुमित्यन्यानुमितिं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावः पक्षता इति कार्यकारणभावः । वैशिष्ट्यं च स्वसामानाधिकरण्यस्वाव्यवहितोत्तरोत्पत्तिकत्वोभयसंबन्धेनेति सिद्धम् । अत्र शङ्कते **अथात्राव्यवहितोत्तरत्वमिति** । स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वं तृतीयक्षणसाधारणमव्यवहितोत्तरत्वम् । स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वं तृतीयक्षणव्यावृत्तं द्वितीयक्षणमात्रसाधारणमव्यवहितोत्तरत्वम् । उभयत्र सत्यन्तमव्यवहितत्वपरिष्काररूपम्, विशेष्यमुत्तरत्वपरिष्काररूपम् । स्वपदं धूमलिङ्गकेच्छाविरह-

गादाधरी

सिद्धयात्मकधूमालोकभयलिङ्गकपरामर्शआलोकलिङ्गकेच्छानुमितयस्तत्रानुमित्युत्पत्त्यधिकरणक्षणस्य धूमलिङ्गकेच्छाविरहविशिष्टसिद्धयधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वेन तदुत्पत्तिकानुमितेरुक्तसंबन्धेन तादशसिद्धिविशिष्टान्यत्वात् तादृशसिद्धयभावस्य व्यभिचारतादवस्थ्यात्। एवञ्च यत्र क्रमेण सिद्धयात्मकधूमपरामर्शधूमलिङ्गकेच्छानुमितयस्तत्रत्यानुमितेर्धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टत्वेन पक्षताकार्यत्वानुपपत्तिरिति चेन्न। तादृशसिद्धिविशिष्टत्वं स्वाधिकरणक्षणध्वंसोत्पत्त्यधि-

---

भावबोधिनी

विशिष्टसिद्धिपरम्। यदि तृतीयक्षणसाधारणम् अव्यवहितोत्तरत्वं न निवेश्यते तदा यत्र क्रमेण पर्वतोवह्निमान् वह्निव्याप्यधूमवान् वह्निव्याप्यालोकवाँश्चेत्याकारकः सिद्धयात्मकधूमलोकोभयलिङ्गपरामर्शः आलोकेन पर्वते वह्निमनुमिनुयाम् इत्याकारकालोकलिङ्गकेच्छा पर्वतो वह्निमानित्याकारकानुमितिश्च भवन्ति तत्र अनुमित्युत्पत्तिक्षणस्य धूमलिङ्गकेच्छाविरहविशिष्टसिद्धयधिकरणभूतः यः प्रथमक्षणः तद्ध्वंसाधिद्वितीयक्षणध्वंसाधिकरणत्वेन तदनधिकरणत्वरूपसत्यन्तविरहेण द्वितीयक्षणसाधारणाव्यवहितोत्तरत्वविरहात् तादशाव्यवहितोत्तरोत्पत्तिकत्वसंबन्धेन सिद्धिविशिष्टा इयमनुमितिर्न भवति किन्तु अन्यैव तदन्यत्वं चास्या अनुमितेरपि अस्याः अनुमितेः धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टानुमित्यन्यानुमितित्वरूपकार्यतावच्छेदकाक्रान्ततया तादशानुमितेः पूर्वं च धूमलिङ्गकेच्छाविरहविशिष्टसिद्धेरेव सत्त्वेन तदभावरूपपक्षताविरहात् तां विनात्यनुमित्युत्पत्तिरूपो व्यतिरेकव्यभिचारः प्रसज्यते। तृतीयक्षसाधारणाव्यवहितोत्तरत्वानिवेशे तु न व्यभिचारः। तथा हि उक्तस्थले सिद्धेः द्विक्षणावस्थायितया धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिध्वंसाधिकरणक्षणः तृतीयक्षणं एव तद्ध्वंसाधिकरणं चतुर्थक्षणः तद्ध्वंसानधिकरणक्षणः तृतीयक्षणः तदुत्पत्तिकत्वमनुमितेरिति तादशाव्यवहितोत्तरत्वसंबन्धेन सिद्धिविशिष्टैवेयमनुमितिरिति

## गादाधरी

करणक्षणोत्पत्तिकत्वसंबन्धेन वाच्यम। उक्तसमूहालम्बनस्थले अनुमित्यव्यवहितपूर्वक्षणस्यापि धूमलिङ्गकेच्छाविरहविशिष्टसिद्धयधिकरणत्वात्तादृशक्षणध्वंसोत्पत्त्यधिकरणोत्पत्तिकत्वमनुमितेरिति न व्यभिचारः। एवं सिद्धयात्मकधूममात्रपरामर्शजन्यानुमितेर्धूमलिङ्गकेच्छाविरहविशिष्टसिद्धयधिकरणप्रथमक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वाभावात् पक्षताकार्यत्वनिर्वाहः।

अथ वा स्वाव्यवहितपूर्वकालावच्छिन्नतल्लिङ्गकेच्छाविरहविशिष्टसिद्धय-

---

## भावबोधिनी

अस्याः तादृशसिद्धिविशिष्टानुमित्यन्यानुमितित्वरूपकार्यतावच्छेदकानाक्रान्ततया न व्यतिरेकव्यभिचारः। तथा चोक्तव्यभिचारवारणाय तृतीयक्षणसाधारणाव्यवहितोत्तरत्वनिवेशे यत्र क्रमेण पर्वतो वह्निमान् वह्निव्याप्यधूमवाँश्चेत्याकारकः सिद्धयात्मकधूमपरामर्शः धूमेन पर्वते वह्निमनुमिनुयामित्याकारकेच्छा पर्वतो वह्निमानित्याकारकानुमितिश्च भवन्ति तत्र प्रथमक्षणे सिद्धेः धूमलिङ्गकेच्छाविरहविशिष्टत्वेन स्वपदेन तादृशसिद्धेः ग्रहीतुं शक्यतया तद्ध्वंसाधिकरणतृतीयक्षणध्वंसानधिकरणक्षणः तृतीयक्षण एव तदुत्पत्तिकत्वमेव अनुमितेरिति तत्रत्यानुमितेः धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टतया सिद्धिविशिष्टानुमित्यन्यानुमितित्वरूपकार्यतावच्छेदकानाक्रान्ततया, तत्र च धूमलिङ्गकेच्छाविरहविशिष्टसिद्धयभावरूपपक्षतायाः सद्भावेन पक्षतारूपकारणसत्त्वेऽपि धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टानुमित्यन्यानुमितिरूपकार्याभावेन अन्वयव्यभिचारः प्रसज्यते। सेयमुभयतःस्पाशा रज्जुरिति आक्षेपसारः।

उक्तसंबन्धेनेति। स्वसामानाधिकरण्यस्वाव्यवहितोत्तरोत्पत्तिकत्वोभयसंबन्धेनेत्यर्थः।

तादृशसिद्धिविशिष्टान्यत्वादिति। धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टान्यत्वादित्यर्थः।

## गादाधरी

भावाधिकरणताविशिष्टसमवाय एव तादृशसिद्ध्यभावकार्यतावच्छेदकसंबन्ध इति न कोऽपि दोषः।

अथ वा स्ववृत्तिकृतिमत्त्वस्ववृत्तिप्रागभावप्रतियोगित्वस्वसामानाधिकरण्यैतादृशत्रितयसंबन्धेन तादृशसिद्धिविशिष्टान्यत्वं तादृशसिद्ध्यभावजन्यतावच्छेदकमिति न कोऽपि दोषः।

अथ वा तादृशसिद्धिविशिष्टत्वं तादृशस्वाधिकरणक्षणत्वावच्छिन्नध्वंसाधि-

---

## भावबोधिनी

तादृशसिद्ध्यभावस्य। धूमलिङ्गकेच्छाविशिष्टसिद्ध्यभावस्य। व्यभिचारतादवस्थ्यादिति। व्यतिरेकव्यभिचारतादवस्थ्यादित्यर्थः। पक्षताकार्यत्वानुपपत्तिरिति। अन्वयव्यभिचारादिति शेषः।

समाधत्ते-तादृशसिद्धिविशिष्टत्वमिति। तथा च धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टत्वं धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वसंबन्धेन वक्तव्यम्। धूमालोकोभयलिङ्गकपरामर्शस्थले अनुमित्यव्यवहितपूर्वक्षणस्यापि धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणत्वात् तादृशक्षणध्वंसोत्पत्त्यधिकरणतृतीयक्षणोत्पत्तिकत्वम् अनुमितेरस्तीति तत्रत्यानुमितेः उक्तसंबन्धेन धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टतया तादृशसिद्धिविशिष्टान्यानुमितित्वरूपकार्यतावच्छेकानाक्रान्ततया न व्यतिरेकव्यभिचारः। यत्र च सिद्ध्यात्मकधूममात्रपरामर्शधूमलिङ्गकेच्छानुमितयः क्रमेण भवन्ति तत्र धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणः प्रथमक्षण एव तद्ध्वंसोत्पत्त्यधिकरणक्षणः द्वितीयक्षणः तदुत्पत्तिकत्वमनुमितेर्नास्तीति तत्रत्यानुमितेः उक्तसंबन्धेन सिद्धिविशिष्टान्यानुमितित्वरूपकार्यतावच्छेदकाक्रान्ततया नान्वयव्यभिचार इति भावः।

गादाधरी

करणक्षणध्वंसानधिकरणं यस्तादृशस्वाधिकरणक्षणध्वंसाधिकरणक्षणस्तदुत्पत्तिकत्वसंबन्धेन वाच्यम्। उक्तसमूहालम्बनस्थले च तादृशसिद्ध्यधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणमनुमित्युत्पत्तिक्षण एवेति तद्ध्वंसानधिकरणक्षणोत्पत्तिकत्वमनुमितेरिति न व्यभिचारः। सिद्ध्यात्मकधूममात्रपरामर्शजन्यानुमितेर्धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणद्वितीयक्षणध्वंसानधिकरणक्षणोत्पत्तिकत्वविरहात्, विशिष्टसिद्धिविशिष्टान्यत्वमव्याहतमिति। एवं यत्र धूमपरामर्शस्तदुत्तरं तदप्रामाण्यावगाही

---

भावबोधिनी

तादृशसिद्धिविशिष्टत्वमिति। धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टत्वमित्यर्थः। तादृशस्वाधिकरणेति। धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणेत्यर्थः। न व्यभिचार इति। न व्यतिरेकव्यभिचार इत्यर्थः। केवलधूमपरामर्शजन्यानुमितेः पक्षताकार्यत्वनिर्वाहाय उत्पत्तिद्वयनिवेशः।

लाघवादाह–अथ वा स्वाव्यवहितेति। तथा च स्वाव्यवहितपूर्वकालावच्छिन्नधूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावाधिकरणताविशिष्टसमवायसंबन्धेन अनुमितिं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावः कारणमिति कार्यकारणभावः पर्यवसन्नः। अत्रावच्छिन्नान्तं अधिकरणताविशेषणम्। यत्र सिद्ध्यात्मकधूमालोकोभयलिङ्गकपरामर्शालोकलिङ्गकानुमितीच्छानुमितयः क्रमेण भवन्ति, तत्र अनुमित्यव्यवहितप्राक्क्षणावच्छेदेन आत्मनि धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणतैव अस्ति, न तु तादृशसिद्ध्यभावाधिकरणतेति तादृशसिद्ध्यभावाधिकरणताविशिष्टसमवायः आत्मनि नास्ति, अतः तादृशसंबन्धेन अनुमितिरूपकार्याभावात् न व्यतिरेकव्यभिचारः। यत्र सिद्ध्यात्मकधूममात्रपरामर्शधूमलिङ्गकेच्छानुमितयः क्रमेण भवन्ति, तत्र अनुमित्यव्यहितप्राक्क्षणावच्छेदेन आत्मनि धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावाधिकरणतायाः सत्त्वात्, तादृशाधिकरणताविशिष्टसमवायसंबन्धेन अनुमितिरूपकार्यस्य

भावबोधिनी

धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावरूपपक्षतायाश्च सत्त्वात् नान्वयव्यभिचार इति भावः । **स्वाव्यवहितेत्यत्र स्वपदम् अनुमितिपरम् । तादृशसिद्ध्यभावेति** तल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावेत्यर्थः ।

अथ वा स्ववृत्तीत्यादिपाठो न सांप्रदायिकः । विशेषरूपेण संबन्धतायाः अनुपगमे तु आह—**अथ वा तादृशसिद्धिविशिष्टत्वमिति** । तथा च धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टान्यानुमितिं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावः कारणमिति प्रथमकल्प एव निर्भरः । तस्मिन् कल्पे प्रसक्तयोः व्यभिचारयोः वारणार्थं अव्यवहितोत्तरत्वं एवं परिष्क्रियते । धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति तादृशसिद्ध्यधिकरणक्षणध्वंसानधिकरणं यः क्षणः तदुत्पत्तिकत्वसंबन्धेन सिद्धिविशिष्टत्वं विवक्षणीयम् । यत्र सिद्ध्यात्मकधूमालोकोभयलिङ्गपरामर्शलोकेच्छानुमितयः यः तत्र धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणः प्रथमक्षणः तृतीयक्षणश्च इति तादृशसिद्ध्यधिकरणक्षणसामान्यध्वंसानधिकरणं तृतीयक्षण एव । तद्ध्वंसानधिकरणक्षणः स एव । तदुत्पत्तिकत्वम् अनुमितेरस्तीति तेन संबन्धेन सिद्धिविशिष्टैव सा अनुमितिः । अतः तस्याः अनुमितेः सिद्धिविशिष्टान्यानुमितित्वरूपकार्यतावच्छेदकानाक्रान्ततया न व्यतिरेकव्यभिचारः । यत्र धूममात्रपरामर्शधूमलिङ्गकेच्छानुमितयः तत्र धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणः प्रथमक्षण एव । तद्ध्वंसाधिकरणक्षणः द्वितीयक्षणः । तद्ध्वंसाधिकरणमेव तृतीयक्षण इति तादृशसिद्ध्यधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणक्षणध्वंसानधिकरणक्षणः द्वितीयक्षणः । तदुत्पत्तिकत्वमनुमितेर्नास्तीति सा अनुमितिः तदुत्पत्तिकत्वसंबन्धेन सिद्धिविशिष्टान्यानुमितिः भवतीति नान्वयव्यभिचार इति भावः ।

गादाधरी

आलोकपरामर्शस्तदुत्तरमनुमितिस्तत्रानुमितेरप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शविशिष्टत्वरूपाप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शजन्यतावच्छेदकाक्रान्तत्वात्, अव्यवहितपूर्वक्षणे चाप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शासत्त्वेन प्रसक्तस्य व्यभिचारस्य एतादृशैर्बहुभिः प्रकारैरेव वारणमवसेयम। लिङ्गोपधानमते च न काचिदनुपपत्तिः। तन्मते धूमविशिष्टपर्वतत्वाद्यवच्छिन्नविशेष्यताकवह्न्यनुमितित्वादेरेव धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावादिजन्यतावच्छेदकत्वादुक्तसमूहालम्बनस्थले चालोकवान् पर्वती

---

भावबोधिनी

ननु यथा लिङ्गभेदेन पक्षता भिन्ना तथा लिङ्गभेदेन परामर्शोऽपि भिन्न इति वाच्यम्। तत्रानुमितिरूपानुगतकार्ये नानालिङ्गकपरामर्शानां हेतुत्वे एकलिङ्गकपरामर्शजन्यानुमितौ लिङ्गान्तरविषयकपरामर्शस्य व्यभिचारो भवति। तद्वारणाय धूमलिङ्गकपरामर्शविशिष्टानुमितौ धूमलिङ्गकपरामर्शः कारणमिति कार्यकारणभावो वक्तव्यः। वैशिष्ट्यं चाव्यवहितोत्तरत्वसामानाधिकरण्योभयसंबन्धेन। एवमपि धूमपरामर्शोत्तरम् अयं परामर्शः अप्रमा इति ज्ञाने सति अनुमितेरनुत्पत्त्या अप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शविशिष्टानुमितिं प्रति धूमपरामर्शः कारणमिति वाच्यम्। एवं सति यत्र आदौ धूमपरामर्शः ततः अयं परामर्शः अप्रमा पर्वतः वह्निव्याप्यालोकवाँश्चेत्याकारकः धूमपरामर्शाप्रामाण्यविषयकः आलोकलिङ्गकः परामर्शः ततः पर्वतो वह्निमानित्यनुमितिः तत्र तृतीतक्षणसाधारणाव्यवहितोत्तरत्वनिवेशे अनुमितेः प्रथमक्षणावच्छेदेन अप्रामाण्यज्ञानाभावविशिष्टो यो धूमपरामर्शः तद्ध्वंसाधिकरणक्षणध्वंसानधिकरणक्षणोत्पत्तिकत्वेन अप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शविशिष्टत्वरूपकार्यतावच्छेदकाक्रान्ततया अनुमितेः पूर्वक्षणे च अप्रामाण्यज्ञानाभावविशिष्टपरामर्शरूपकारणाभावेन व्यभिचारः इत्यत आह-एवं यत्रेति। एतादृशैः बहुभिः

गादाधरी

वह्निमानित्याद्याकारकानुमितेरेवोपगमेन व्यभिचारानवकाशादिति । धूमेनानुमिनुयामालोकेनानुमिनुयामित्यादिसकलेच्छासाधारणरूपेणैव सिषाधयिषानां सिद्धावुत्तेजकत्वम् । तथा च धूमालोकादिलिङ्गकनिखिलानुमितिसाधारणी एकैव पक्षता । उक्तस्थलेऽति प्रसङ्गभङ्गाय च प्रतिबन्धकान्तरमेव कल्प्यत इत्याशयेनाह—तल्लिङ्गकेति । असत्यां सिद्धावन्यलिङ्गकानुमितीच्छासत्त्वेऽनुमित्युपपत्तये, सिद्धिकालीनेति । सामानाधिकरण्य-

---

भावबोधिनी

प्रकारैरिति । अप्रामाण्यज्ञानाभावविशिष्टधूमलिङ्गकपरामर्शवैशिष्ट्यं तादृशधूमलिङ्गकपरामर्शाधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वस्वसामानाधिकरण्योभयसंबन्धेन, स्वाव्यवहितपूर्वकालावच्छिन्नतादृशपरामर्शाधिकरणतावैशिष्ट्यसमवायस्य कार्यतावच्छेदकसंबन्धत्वेन, स्वाधिकरणक्षणवृत्तिकृतिमत्त्वस्ववृत्तिप्रागभावप्रतियोगित्वस्वसमानाधिकरण्यैतत्त्रितयसंबन्धेन, स्वाधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणक्षणध्वंसानधिकरणो यः स्वाधिकरणक्षणध्वंसाधिकरणक्षणः तदुत्पत्तिकत्वसंबन्धेन वा तादृशपरामर्शविशिष्टत्वं वेत्यर्थः ।

लिङ्गभेदेन पक्षतायाः भेदाभ्युपगमे 'पर्वतो वह्निमान्' इत्याकारकानुमितिं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य आलोकलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य च कारणत्वे यत्र एकस्मात् कारणात् 'पर्वतो वह्निमान्' इत्यनुमितिः तत्र कारणान्तरविरहात् व्यतिरेकव्यभिचारः प्रसक्तः । तद्वारणाय तल्लिङ्गकत्वमपि कार्यतावच्छेदकशरीरे निवेश्य धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावः धूमलिङ्गकपर्वतपक्षकवह्निसाध्यकानुमितौ कारणमित्यादिरीत्या कार्यकारणभावाभ्युपगमे यत्र आलोकलिङ्गकानुमितीच्छा धूमालोकोभयविषयकसमूहालम्बनपरामर्शः 'पर्वतो वह्निमान्'

## गादाधरी

संबन्धेन सिद्धिविशिष्टेत्यर्थः । समूहालम्बनेच्छाकाले सिद्धिसत्त्वेऽनुमित्युपपत्तये तल्लिङ्गकानुमितीच्छाविरहविशिष्टेति । धूमलिङ्गकत्वादिप्रकारतान्यप्रकारत्वानिरूपितविशेष्यताकेच्छाविरहविशिष्टेत्यर्थकम् । तेन न धूमालोकोभयलिङ्गकवह्न्यनुमितिर्जायतामित्याकारकेच्छाबलात् सिद्धिकाले केवलालोकलिङ्गकानुमितिप्रसङ्गः । न वाऽऽलोकेन वह्निघटोभयानुमितिर्धूमेन वह्न्यनुमितिर्जायतामित्येतादृशेच्छाकाले सिद्धिसत्त्वे केवलालोकादिपरामर्शात् केवलवह्न्याद्यनुमित्यापत्तिः ।

---

## भावबोधिनी

इत्यनुमितिः तत्रानुमितेः धूमलिङ्गकत्वमप्यस्तीति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावरूपकारणं विनापि धूमलिङ्गकानुमितेरुत्पत्त्या व्यतिरेकव्यभिचारः प्रसजति । तद्वारणाय च अनेके परिष्काराः पूर्वं प्रदर्शिताः । अनुमितौ लिङ्गमपि भासते इति मते तावान् प्रयासः अनावश्यक इत्याह—लिङ्गोपधानमते चेति । तन्मते 'धूमवान् पर्वतो वह्निमान्' इत्येवानुमितेराकारः । तथा च धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकानुमितित्वावच्छिन्नं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावः कारणम् इत्यादिरीत्या कार्यकारणभावः । पूर्वोक्तसमूहालम्बनपरामर्शस्थले 'आलोकवान् पर्वतो वह्निमान्' इत्येवानुमितिः जायते । तस्याश्च धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकानुमितित्वरूपकार्यतावच्छेदकानाक्रान्ततया तत्र धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावरूपकारणविरहेऽपि न व्यतिरेकव्यभिचारः इति भावः ।

वह्न्यनुमितित्वादेरेवेति । एवकारेण पर्वतत्वावच्छिन्नविशेष्यकवह्न्यनुमितित्वस्य व्यवच्छेदः । उक्तसमूहालम्बनस्थल इति । आलोकलिङ्गकानुमितीच्छाधीनधूमालोकोभयविषयकसमूहालम्बनपरामर्शजन्यानुमितौ इत्यर्थः । व्यभिचारानवकाशा-

भावबोधिनी

दिति । व्यतिरेकव्यभिचाराप्रसक्तेरित्यर्थः । तल्लिङ्गकानुमितीच्छेत्यादिदीधिति-ग्रन्थमवतारयति-धूमेनानुमिनुयामिति । धूमेन पर्वते वह्निमनुमिनुयाम् इत्याकारकेच्छावलात् धूमलिङ्गकानुमित्युत्पत्त्या तत्साधारणरूपेण तल्लिङ्गकत्व-तत्साध्यविशिष्ट-तत्पक्षविषयकत्वानुमितित्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकेच्छात्वेन सिषाधयिषाणां सिद्धौ उत्तेजकताया आवश्यकत्वात् तत्तत्सिद्धिकाले असत्यपि धूमपरामर्शे आलोकपरामर्शात् धूमलिङ्गकेच्छावलात् अनुमित्यापत्तिः । पक्षतायाः अक्षतत्वात् इत्याशङ्कायां तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छायाः सिषाधयिषापदेन विवक्षितत्वं पूर्वमुक्तम् । इदानीं तु सकलेच्छासाधारणरूपेणैव सिषाधयिषाणां सिद्धावुत्तेजकत्वम् । पूर्वोक्तस्थले अतिप्रसङ्गवारणाय प्रतिबन्धकान्तरं कल्पनीयमित्याशयेन तल्लिङ्गकानुमितीच्छेत्यादिदीधितिग्रन्थः प्रवृत्त इत्याशयः तथा च तल्लिङ्गकानुमितौ तल्लिङ्गकानुमितीच्छाविरहविशिष्टान्यलिङ्गकानुमितीच्छा प्रतिबन्धिका । यत्र धूमलिङ्गकानुमितीच्छा आलोकपरामर्शः तत्रत्यानुमितेः आलोकलिङ्गकत्वात् आलोकलिङ्गकतादृशानुमितौ आलोकलिङ्गकानुमितीच्छाविरहविशिष्टायाः धूमलिङ्गकेच्छायाः प्रतिबन्धिकायाः सत्त्वात् सिद्धिकाले तत्र 'पर्वतो वह्निमाम' इत्यनुमित्यापत्तिः न भवति इत्यर्थः । असत्यां सिद्धौ धूमलिङ्गकानुमितीच्छासत्त्वे आलोकपरामर्शात् 'पर्वतो वह्निमान्' इत्यनुमितिः जायते । आलोकलिङ्गकतादृशानुमितौ आलोकान्यधूमलिङ्गकेच्छायाः प्रतिबन्धकत्वे अनुमितिर्न स्यात् । अतः अन्यलिङ्गकानुमितीच्छायां सिद्धिकालीनेति विशेषणं दत्तम् । अन्यदीयसिद्धिविशिष्टत्वमादाय उक्तस्थले धूमलिङ्गकेच्छायाः प्रतिबन्धकत्ववारणाय सिद्धिकालीनेत्यस्य सामानाधिकरण्यसंबन्धेन सिद्धिविशिष्टेत्यर्थः वक्तव्यः । सामानाधिकरण्यं च एककालावच्छिन्न-एकात्मवृत्तित्वम् । अतः कालान्तरीणतदात्मगत-सिद्धिविशिष्टत्वमादाय न पूर्वोक्तदोषः । अन्यलिङ्गकानुमितीच्छायाम्-तल्लिङ्ग-

भावबोधिनी

कानुमितीच्छाविरहविशिष्टेति विशेषणानुपादाने यत्र आलोकेन धूमेन च पर्वते वह्निमनुमिनुयाम् इति समूहालम्बनेच्छा पर्वतः वह्निव्याप्यधूमवान् वह्निव्याप्यालोकवान् वह्निमाँश्चेति सिद्ध्यात्मकपरामर्शः तत्र तदनन्तरं पर्वतो वह्निमान् इत्यनुमितिः जायते। तत्रत्यानुमितेः आलोकलिङ्गकत्वं चास्ति। अतः आलोकलिङ्गकानुमितिपदेन तस्याः ग्रहणे तां प्रति सिद्धिविशिष्टायाः आलोकान्यधूमलिङ्गकेच्छायाः समूहालम्बनरूपायाः प्रतिबन्धकत्वं स्यात्। तद्वारणाय तदन्यलिङ्गकेच्छायां तल्लिङ्गकेच्छाविरहविशिष्टत्वं विशेषणं दत्तम्। उक्तस्थले धूमलिङ्गकेच्छायाः आलोकलिङ्गकेच्छाविरहविशिष्टत्वं नास्तीति न प्रतिबन्धकत्वम्।

नन्वेवमपि यत्र धूमालोकोभयलिङ्गकवह्न्यनुमितिः जायताम् इत्याकारकेच्छा 'पर्वतः वह्निव्याप्यालोकवान् वह्निमाँश्चेति' सिद्ध्यात्मकः आलोकमात्रपरामर्शः तत्रापि 'पर्वतो वह्निमान्' इत्यनुमित्यापत्तिः। तत्र आपाद्यमानायाः अनुमितेः आलोकलिङ्गकत्वात् आलोकलिङ्गकानुमितौ च आलोकलिङ्गकेच्छाविरहविशिष्टायाः अन्यलिङ्गकेच्छाया एव प्रतिबन्धकत्वात्। धूमविषयकोक्तसमूहालम्बनेच्छायाः आलोकविषयत्वमप्यस्तीति आलोकलिङ्गकानुमितीच्छाविरहविशिष्टत्वाभावेन अप्रतिबन्धकत्वात् अनुमितिप्रसङ्गः। न चेष्टापत्तिः। उभयलिङ्गकानुमित्युत्पत्त्यैव इच्छायाः विषयसिद्धेः। एवं यत्र आलोकेन वह्निघटोभयानुमितिः धूमेन वह्न्यनुमितिः जायताम् इत्याकारकेच्छाकाले सिद्ध्यात्मकः केवलालोकविषयकपरामर्शः तत्र वह्निमात्रविषयिणी पर्वतो वह्निमान् इत्यनुमितिः स्यात्। आलोकलिङ्गकतादृशानुमितौ आलोकलिङ्गकेच्छाविरहविशिष्टायाः धूमलिङ्गकेच्छाया एव प्रतिबन्धकत्वात् उक्तेच्छायाः अतादृशत्वात् इत्यतः तल्लिङ्गकानुमितीच्छाविरहविशिष्टेत्यस्य परिष्कृतमर्थमाह–तल्लिङ्गकत्वादिप्रकारतान्येति। तथा च तल्लिङ्गकत्वनिष्ठप्रकारतानिरूपि-

गादाधरी

यद्यपि तादृशप्रकारत्वानिरूपितविशेष्यताकान्यत्वस्य इच्छाविशेषणत्वोपगम एव समूहालम्बनेच्छास्थलेऽनुमितिरुपपादयितुं शक्यते, तथापि ज्ञानेच्छयोर्युगपदुत्पाद-मङ्गीकुर्वतां नवीनानां मते यत्र सिद्ध्युत्पत्तिकाले धूमादिलिङ्गकानुमितीच्छाया-स्तद्द्वितीयक्षणे चालोकलिङ्गकानुमितीच्छाया उत्पादस्तत्रालोकलिङ्गकानुमित्युपपत्तये

---

भावबोधिनी

तानुमितिनिष्ठविशेष्यताशालीच्छाविरहविशिष्टेति यथाश्रुतार्थः अत्र न विवक्षितः। किन्तु तल्लिङ्गकत्वनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितानुमितिनिष्ठविशेष्यतानिरूप-केच्छाविरहविशिष्टेत्यर्थः। धूमालोकोभयलिङ्गकवह्न्यनुमितिर्जायतामितीच्छायाः आलोकलिङ्गकत्वनिष्ठप्रकारताभिन्ना या धूमलिङ्गकत्वनिष्ठा प्रकारता तन्निरूपितानु-मितिनिष्ठविशेष्यताकत्वमेव अस्ति, न तु तदनिरूपितविशेष्यताकत्वम्। अतः तदनिरूपितविशेष्यताकेच्छा आलोकेनानुमिनुयाम् इत्याकारकेच्छैव। तद्विरह-वैशिष्ट्यं च धूमलिङ्गकोक्तसमूहालम्बनेच्छायामस्तीति तस्याः आलोकलिङ्गकानुमिति-प्रतिबन्धकत्वनिर्वाहः। एवं तल्लिङ्गकत्वनिष्ठप्रकारताभिन्नायां प्रकारतायां तत्साध्य-विशिष्टतत्पक्षविषयकत्वनिष्ठप्रकारताभिन्नत्वमपि निवेशनीयम्। अतः आलोकेन वह्निघटोभयानुमितिः धूमेन वह्न्यनुमितिः जायताम् इति इच्छायाः आलोक-लिङ्गकत्वनिष्ठप्रकारताभिन्ना वह्निविशिष्टपर्वतविषयकत्वनिष्ठप्रकारताभिन्ना च या घट-विषयकत्वनिष्ठा प्रकारता तन्निरूपितानुमितिनिष्ठविशेष्यताकत्वमेव वर्तते। अतः आलोकलिङ्गकानुमितीच्छापदेन तादृशसमूहालम्बनेच्छा न ग्राह्या। किन्तु आलोकेन वह्न्यनुमितिः जायताम् इत्याकारकेच्छैव ग्राह्या। तद्विरहवैशिष्ट्यस्य च आलोकान्यधूमलिङ्गकपूर्वोक्तसमूहालम्बनेच्छायां सत्त्वात् तस्या अपि प्रतिबन्धकत्व निर्वाहः। तथा च तल्लिङ्गकानुमितौ तल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकत्वनिष्ठ-

गादाधरी

तादृशविशेष्यताशालीच्छाविरहवैशिष्ट्यपर्यन्तानुसरणम् । लिङ्गविशेषानुपरक्तानुमितीच्छानामपि निरुक्तोत्तेजकतावच्छेदकाक्रान्ततया तादृशेच्छायाः प्रतिबन्धकत्वाप्रसक्तेरन्यलिङ्गकेति सम्पातायातम् । सिद्धिविशिष्टेच्छामात्रस्य प्रतिबन्धकत्वे सिद्धिविशिष्टघटतदनुमित्यादिगोचरेच्छाकालीनानुगतेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेनाभावानां निवेशनीयतया महागौरवमिति तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकानुमितीच्छात्वेनैव विशेष्यीभूतेच्छानिवेशो बोध्यः ।

---

भावबोधिनी

प्रकारताभिन्नप्रकारत्वानिरूपितानुमितिनिष्ठविशेष्यतानिरूपकेच्छाविरहविशिष्टा अन्यलिङ्गकानुमितीच्छा प्रतिबन्धिकेति फलितम् ।

गादाधर्यां तल्लिङ्गकत्वादीत्यत्र 'आदि' पदेन तत्साध्यविशिष्टतत्पक्षविषयकत्वपरिग्रहः । तल्लिङ्गकत्वनिष्ठप्रकारताभिन्नत्वनिवेशस्य प्रयोजनं धूमालोकोभयलिङ्गकेत्यादिना प्रदर्शितम् । तत्साध्यविशिष्टतत्पक्षविषयकत्वनिष्ठप्रकारताभिन्नत्वस्य प्रयोजनं न वा आलोकेन इत्यादिना प्रदर्शितम् ।

यद्यपीत्यादि । तल्लिङ्गकत्व-तत्साध्यविशिष्टतत्पक्षविषयकत्वनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितानुमितिनिष्ठविशेष्यताकेच्छाभिन्नत्वस्यान्यलिङ्गकानुमितीच्छायां विशेषणत्वोपगमेनापि पूर्वोक्तदोषवारणसंभवात् तादृशेच्छाविरहवैशिष्ट्यनिवेशनं किमर्थम् । न च विनिगमनाविरहः । इच्छाभिन्नत्वनिवेशे स्वरूपसंबन्धेन भेदवैशिष्ट्यं विशेषणं भवति । इच्छाविरहवैशिष्ट्यनिवेशे तु सामानाधिकरण्यसंबन्धेन वैशिष्ट्यं निवेशनीयमिति गौरवम् । अतः लाघवात् पूर्वोक्तविशेष्यताकेच्छाभिन्नत्वमेव निवेशनीयम् इति शङ्कितुराशयः ।

## भावबोधिनी

उपगम एवेति। एवकारेण इच्छाविरहवैशिष्ट्यस्य विशेषणत्वव्यवच्छेदः समूहालम्बनेच्छास्थल इति। धूमालोकोभयलिङ्गकानुमितिर्जायतामित्यादिपूर्वोक्तसमूहालम्बनस्थले इत्यर्थः। अनुमितिरुपपादयितुं शक्यत इति। अनुमितिर्वारयितुं शक्यत इत्यर्थः। समाधत्ते–तथापीति। तथा च ज्ञानेच्छयोः युगपदुत्पत्तिमङ्गीकुर्वतां नवीनानां मते यत्र पर्वतः वह्निव्याप्यालोकवान् वह्निमांश्चेति सिद्ध्युत्पत्तिक्षणे 'पर्वते धूमेन वह्निमनुमिनुयाम्' इति धूमलिङ्गकानुमितीच्छा, तद्द्वितीयक्षणे आलोकेन वह्निमनुमिनुयाम् इति इच्छा, तत्र तदनन्तरक्षणे 'पर्वतो वह्निमान्' इति आलोकलिङ्गकानुमितिः जायते। तत्रत्यायाः धूमलिङ्गकेच्छायाः आलोकलिङ्गकानुमितीच्छाभिन्नत्वमस्तीति आलोकलिङ्गकतादृशानुमितिप्रतिबन्धकत्वापत्तिः। अतः भिन्नत्वमुपेक्ष्य आलोकलिङ्गकत्वादिनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताशालीच्छाविरहवैशिष्ट्यं निवेशितम्। उक्तस्थले धूमलिङ्गकेच्छायाः आलोकलिङ्गकेच्छासमानाधिकरणत्वात् आलोकलिङ्गकेच्छाविरहवैशिष्ट्यं सामानाधिकरण्यसंबन्धेन नास्तीति न प्रतिबन्धकत्वापत्तिः इति भावः।

ननु विशेष्यभूतेच्छायां अन्यलिङ्गकत्वविशेषणं मास्तु। तल्लिङ्गकेच्छाविरहविशिष्टानुमितीच्छा प्रतिबन्धिका इत्येव अस्तु। न च तथा सति पर्वते वह्न्यनुमितिर्जायताम् इत्याकारिकायाः लिङ्गविशेषानुपरक्तानुमितीच्छायाः सिद्ध्यात्मकालोकपरामर्शकालीनायाः आलोकलिङ्गकवह्न्यनुमितिप्रतिबन्धकत्वापत्तिः। तादृशेच्छायाः आलोकलिङ्गकानुमितीच्छाविरहविशिष्टत्वात् इति वाच्यम्। आलोकलिङ्गकानुमितीच्छापदेन हि आलोकलिङ्गकत्ववह्निविशिष्टपर्वतविषयकत्वनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकेच्छा विवक्षिता। लिङ्गविशेषानुपरक्तायाः 'पर्वते वह्निमनुमिनुयाम्' इतीच्छाया अपि तादृशत्वमस्तीति आलोकलिङ्गकेच्छापदेन

भावबोधिनी

लिङ्गविशेषानुपरक्तेच्छाया अपि ग्रहीतुं शक्यतया तद्विरहवैशिष्ट्यस्य तस्यामभावादेव प्रतिबन्धकत्वाप्रसक्तेः अन्यलिङ्गकेत्यस्य विशेषणस्य व्यर्थत्वात् इत्याशङ्क्य इष्टापत्त्या समाधत्ते–**लिङ्गविशेषानुपरक्तेति**। **निरुक्तोत्तेजकतावच्छेदकेति**। तल्लिङ्गकत्वादिनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकेच्छात्वरूपं यत् उत्तेजकतावच्छेदकं तदाश्रयतया इत्यर्थः। **प्रतिबन्धकत्वाप्रसक्तेरिति**। निरुक्तोत्तेजकतावच्छेदकाक्रान्तेच्छाविशिष्टतया तद्विरहरूपविशेषणाभावात् प्रतिबन्धकत्वाप्रसक्तेरिति भावः। **संपातायातमिति**। न तु तस्य प्रयोजनमस्तीति भावः।

ननु अन्यलिङ्गकत्वस्य संपातायातत्वे तल्लिङ्गकानुमितौ तल्लिङ्गकेच्छाविरहविशिष्टेच्छा प्रतिबन्धिकेत्यायाति। तथा सति यत्र पर्वतो वह्निमान् वह्निव्याप्यालोकवाँश्चेत्याकारकः सिद्ध्यात्मकालोकपरामर्शः एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामित्याकारिकेच्छा चास्ति, तत्र आलोकलिङ्गकेच्छाविरहेण तद्विशिष्टायाः तस्याः पर्वतो वह्निमानित्याकारकालोकलिङ्गकानुमितिबन्धकत्वापत्तिः न च विशेष्यभूतायामिच्छायां एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामित्याकारकेच्छाभिन्नत्वमपि निवेशनीयम्, अतो न तस्याः प्रतिबन्धकत्वापत्तिरिति वाच्यम्। एवमपि तत्रैव स्थले घटेच्छाया घटानुमितीच्छाया वा सत्त्वे तस्याः एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामितीच्छाभिन्नायाः प्रतिबन्धकत्वापत्तेः। न चेष्टापत्तिः, तत्र पर्वतो वह्निमानित्यनुमित्युत्पत्तेः संप्रतिपन्नत्वात्। तथा च तत्र घटादीच्छायाः प्रतिबन्धकतावारणाय एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामित्याद्याकारकाननुगतेच्छाविरहविशिष्टत्वं प्रतिबन्धकेच्छायां विशेषणं देयम्। तथा चानन्तेच्छाव्यक्त्यभावनिवेशे गौरवात् तदपेक्षया लाघवात् तत्साध्यविशिष्टतत्पक्षविषयकेच्छा प्रतिबन्धिकेति वक्तव्यम्। घटेच्छायाः एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामितीच्छायाश्च वह्निविशिष्टपर्वतविषय-

गादाधरी

वस्तुतस्तु तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वमप्यन्यलिङ्गकानुमित्सायां न निवेश्यं घटादीच्छाकालीनाननुगतेच्छानां भवन्मतेऽपि सिद्धावुत्तेजकतायाः वक्तव्यतया साम्यात्। मन्मते तत्र घटादीच्छासाधारणरूपेणैवानुमित्साया उत्तेजकत्वोपगमादुक्तस्थले पक्षतानिर्वाहेण तादृशाननुगतेच्छानामन्यलिङ्गकेच्छायामेवोत्तेजकत्वात्।

अत्र चैतादृशगुरुधर्मावच्छिन्नाभावस्य लिङ्गभेदेनानन्तकारणतानां पक्षताकारणतान्तरस्य च कल्पनामपेक्ष्य लिङ्गभेदेन तत्तल्लिङ्गकानुमितीच्छाविरहविशिष्टसिद्धित्व

---

भावबोधिनी

कत्वाभावान्न प्रतिबन्धकतेत्याशयवानाह–सिद्धिविशिष्टेच्छामात्रस्येत्यादिना। मात्रपदेन तल्लिङ्गकत्वव्यवच्छेदः। घटेच्छायाः अनुमितिविषयकत्वनिवेशेन वारणसंभवात् तदनुमित्यादिगोचरेत्युक्तम्। घटानुमितिविषयकेत्यर्थः। तथा च तल्लिङ्गकेच्छाविरहविशिष्टतत्साध्यविशिष्टतत्पक्षविषयकत्वनिष्ठप्रकारताकानुमितिगोचरेच्छा तल्लिङ्गकानुमितौ प्रतिबन्धिकेति सिद्धम्।

अत्र कल्पे तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकानुमितिविषयकेच्छात्वेन विशेष्यभूतेच्छायाः निवेशे गौरवम्। एवं पक्षताशरीरे सिद्धिसत्त्वे घटादीच्छायाः सत्त्वे अनुगतायाः पर्वते वह्निमनुमिनुयामित्याकारायाः अननुगतायाः एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामितीच्छायाः वा असत्त्वे अनुमितिवारणाय सिषाधयिषाविरहवैशिष्ट्यस्य निवेशनीयतया गौरवं च। अतः घटादीच्छासाधारणं प्रतिबन्धकत्वं स्वीक्रियते। तथा सति तत्साध्यविशिष्टतत्पक्षविषयकेच्छात्वेन निवेशाभावेन पक्षताशरीरे सिषाधयिषापदार्थस्य सिद्धिविषयकत्वपरित्यागेन इच्छात्वमात्रेणोत्तेजकत्वोपगमेन च लाघवात्। न चैतत्कल्पे प्रतिबन्धकीभूतेच्छायां पूर्वोक्तदोष-

## गादाधरी

रूपलघुधर्मावच्छिन्नाभावहेतुताकल्पनस्यैव साधुत्वेन पूर्वमतस्यैव सम्यक्तया वाकारोऽनिर्भरसूचनार्थेति वदन्ति ।

परे तु अन्यलिङ्गकत्वप्रकारकानुगतानुमित्सासमवहितसिद्धिदशायामननुगतानुमित्साबलात्तल्लिङ्गकानुमित्युपपत्तये सिद्धौ तादृशेच्छाभावकूटवैशिष्ट्यनिवेशेन पूर्वमते गौरवमेतन्मते चान्यलिङ्गकानुगतानुमित्सारूपोत्तेजकबलादेव तत्रानुमित्युपपत्तेः सिद्धौ तासामभावानिवेशात् ।

---

## भावबोधिनी

वारणाय अननुगतेच्छाविरहवैशिष्ट्यस्य निवेशनीयतया गौरवमिति वाच्यम्। पूर्वकल्पेऽपि सिद्धौ तासामुत्तेजकत्वेन तदभाववैशिष्ट्यनिवेशस्यावश्यकतया साम्यादित्याशयेनाह–वस्तुतस्त्वित्यादिना । मन्मते तत्रेति । सिद्धावित्यर्थः । घटादीच्छासाधारणरूपेणैवेति । इच्छात्वेनेत्यर्थः । एतेन सिद्धिविषयकत्वव्यवच्छेदः । पक्षतानिर्वाहेणेति । घटादीच्छामादायेति। शेषः। तथा चान्यलिङ्गकेच्छायाः प्रतिबन्धकतावादिन्यत्र पक्षे सिद्धिविशिष्टतल्लिङ्गकेच्छाविरहविशिष्टाननुगतेच्छाविरहविशिष्टेच्छा प्रतिबन्धिका तदभावः तल्लिङ्गकानुमितौ कारणम्। एवं इच्छाविरहविशिष्टा या सिद्धिः तदभावरूपा पक्षता च कारणम्। लिङ्गभेदेनानन्तानां प्रतिबन्धकानामभावाश्च कारणमिति महद्गौरवम्। तदपेक्षया लाघवात् तल्लिङ्गकानुमितीच्छाविरह–अननुगतेच्छाविरहविशिष्टसिद्ध्यभावस्य हेतुत्वरूपः पूर्वः पक्ष एव युक्त इति वाकारः अस्मिन्पक्षे अनैर्भर्यसूचकः इत्याह–अत्र चेति। तादृशगुरुधर्मः सिद्धिविशिष्टतल्लिङ्गकेच्छाविरह-अननुगतेच्छाविरहविशिष्टेच्छात्वरूपः। सिद्धिविशिष्टत्वस्याधिकस्य इच्छाप्रतिबन्धकतावच्छेदके प्रवेशात् गौरवम्। लघुधर्मेति । सिद्धिविशिष्टत्वाघटितत्वात् लघुत्वम्।

स्वसंमतं मतमाह–परेत्त्विति। पूर्वमुत्तरस्मिन् कल्पे गौरवादनिर्भर इत्युक्तम्।

## गादाधरी

न चैतन्मतेऽप्यन्यलिङ्गकानुगतानुमित्साप्रतिबन्धकतायामेव तासामुत्तेजकत्वस्यावश्यकतया साम्यमिति वाच्यम्। यतो यत्राननुगतसाध्यानुमित्सात्मकसमूहालम्बनरूपा एवान्यलिङ्गकानुमितीच्छास्तत्रान्यलिङ्गकानुमितीच्छायां तादृशेच्छाव्यक्तिभेदा एव निवेशनीयाः। सिद्धौ तु सामानाधिकरण्यसंबन्धेन तत्तदत्यन्ताभावास्तत्र च तत्कालीनसंयोगाद्यभावानां निवेशमादाय विनिगमनाविरहेण गौरवम्। न च पूर्वमतेऽपि तत्तत्सिद्धिव्यक्तिभेदा एव सिद्धौ निवेशनीयाः न तु तत्तदिच्छाभावा

---

## भावबोधिनी

अधुना पूर्वस्मिन् कल्प एव गौरवमित्युपपाद्यते। तथाहि—यत्र धूमेन वह्निमनुमिनुयामित्याकारिका आलोकान्यधूमलिङ्गकत्वप्रकारिका इच्छा ततः पर्वतो वह्निमान् वह्निव्याप्यालोकवाँश्चेति परामर्शः एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामितीच्छां च युगपत् तत्र तदनन्तरक्षणे आलोकलिङ्गिका पर्वतो वह्निमानित्यनुमितिः जायते। तदुपपत्त्यर्थः सिद्धौ तल्लिङ्गकेच्छाविरहवैशिष्ट्यवत् एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामित्याद्यननुगतेच्छाविरहवैशिष्ट्यमपि पूर्वस्मिन् कल्पे निवेश्यम्। अन्यथा आलोकलिङ्गकेच्छाविरहविशिष्टायाः सिद्धेरेव सत्त्वेन तद्विशिष्टसिद्ध्यभावरूपायाः पक्षतायाः अभावेन आलोकलिङ्गकानुमितेरनिर्वाहात्। तथा च पूर्वमते गौरवम्। एतन्मते तु सकलेच्छासाधारणेच्छात्वावच्छिन्नप्रतियोगिताकाभावविशिष्टसिद्ध्यभावस्यैव पक्षतात्वात् आलोकलिङ्गकानुमितावपि सिद्धौ धूमलिङ्गकानुमितीच्छाया अपि इच्छात्वेनोत्तेजकतया तत्सत्त्वे उत्तेजकाभावविशिष्टसिद्ध्यभावरूपपक्षताया अक्षतत्वात् अनुमित्युपपत्तेः सिद्धावननुगतेच्छाविरहवैशिष्ट्यानिवेशात् लाघवम् इति भावः। अननुगतानुमित्सावलादिति। एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामित्याकारकेच्छाबलादित्यर्थः। तल्लिङ्गकानुमित्युपपत्तय इति। आलोकलिङ्गकानुमित्युपपत्त्यर्थमित्यर्थः। तादृशेच्छाभवेति। अननुगतानुमित्साभावेत्यर्थः। अनुगतानुमित्सेति।

## गादाधरी

इति न विनिगमनाविरहावकाश इति वाच्यम्। सिद्धेरनन्तरं यत्र तादृशसमूहालम्बनेच्छाव्यक्तीनामुत्पत्तिस्तत्र तादृशसिद्धिभेदानां सिद्धौ निवेशे इच्छोत्पत्तिकालेऽनुमित्यापत्तेः। ज्ञानेच्छयोर्युगपदुत्पादमते इच्छासामग्र्या ज्ञानाविरोधित्वात्। यादृशस्थले च सिद्धिजननकाले प्रतिबन्धकोत्तेजकेच्छयोरेकस्या अपरव्यक्तेश्च तत्पूर्वमुत्पत्तिः तत्र द्वितीयक्षणेऽनुमित्युपपत्तये एतन्मतेऽपि तत्तत्सिद्धिभेदा अन्यलिङ्गकेच्छाविशेषणी-

---

## भावबोधिनी

इच्छात्वरूपाननुगतधर्मावच्छिन्नानुमितित्सेत्यर्थः। तादृशाभावेति। अननुगतेच्छाभावेत्यर्थः।

शङ्कते—न चैतन्मतेऽपीति। इच्छात्वेनेच्छाः सिद्धावुत्तेजिकाः अन्यलिङ्गकेच्छास्तु प्रतिबन्धिका इति मतेऽपीत्यर्थः। सिद्धिकालीनतल्लिङ्गकानुमितीच्छाविरहविशिष्टान्यलिङ्गकेच्छायाः प्रतिबन्धकत्वमतेऽपि धूमलिङ्गकानुमितीच्छासमवहितसिद्ध्यात्मकालोकपरामर्शकाले अननुगतेच्छाबलात् अनुमितिः कथम्? आलोकलिङ्गकानुमितीच्छाविरहविशिष्टायाः धूमलिङ्गकानुमितीच्छायाः प्रतिबन्धिकायाः सद्भावात् इति शङ्कायाम् प्रतिबन्धकेच्छायाम् अननुगतेच्छाविरहवैशिष्ट्यमपि निवेश्यते। उक्तस्थले धूमलिङ्गकेच्छायाः अननुगतेच्छाविशिष्टतया न प्रतिबन्धकत्वमिति समाधेयम्। तथा चैतन्मते प्रतिबन्धकेच्छायां अननुगतेच्छाविरहवैशिष्ट्यनिवेशस्यावश्यकतया न लाघवावकाश इति भावः। समाधत्ते-यत्र इति। यत्र एतत्क्षणानन्तरक्षणे वह्न्यनुमितिर्जायताम् धूमलिङ्गकवह्न्यनुमितिश्च जायतामित्याकारकसमूहालम्बनेच्छा सिद्ध्यात्मकालोकपरामर्शश्च तत्र पर्वतो वह्निमानित्यनुमितिर्जायते। तत्र धूमलिङ्गकेच्छायाः नाननुगतेच्छाविरहविशिष्टत्वेन प्रतिबन्धकता किं तु अननुगतेच्छाभिन्नत्वेनैव। तथा च तत्रत्यालोकलिङ्गकानुमितिं प्रति अननुगतेच्छा-

दीधितिः

साधकमानं, साध्यवत्त्वनिश्चयः पाषाणमयत्वादिना पर्वते तेजस्त्वादिना च वह्नेः सिद्धावपि पर्वतत्वेन तत्र वह्नित्वेन च तस्य अनुमितेर्धर्मित्वसाध्यत्वयोरवच्छेदकावनुप्रवेशनीयौ ।

गादाधरी

भूतसिद्ध्यंशे निवेश्या न त्वन्यलिङ्गकेच्छायां तद्विशेषणीभूतसिद्धौ वा तदिच्छात्यन्ताभावः । अतो न तत्कालीनसंयोगादिव्यक्त्यभावनिवेशमादाय विनिगमनाविरहप्रसङ्ग इत्याहुः ।

साधकमानपदस्य सिद्धिकारणपरत्वे पूर्वोक्तदोषप्रसङ्गात् तद्व्याचष्टे-साधकेति । साध्यवत्त्वनिश्चयः । प्रकृतसाध्यवैशिष्ट्यावगाहिनिश्चयः । पाषाणमयो

भावबोधिनी

मिच्छाभाव एव कारणमेतन्मते । पूर्वमते सिद्धौ नाननुगतेच्छाभिन्नत्वं निवेशयितुं शक्यम् अन्यावर्तकत्वादिति अननुगतेच्छाविरहवैशिष्ट्यमेव सामानाधिकरण्य संबन्धेन सिद्धौ निवेशनीयम् । तत्र च तादृशेच्छाविरहवैशिष्ट्यं वा निवेश्यताम् तत्कालीनवायुसंयोगाभाववैशिष्ट्यं वा निवेश्यतामिति विनिगमनाविरहात् उभयोर्निवेशापत्त्या महागौरवमिति भावः ।

न च पूर्वमतेऽपीति । तल्लिङ्गकानुमित्साविरहविशिष्टसिद्ध्यभावः पक्षतेति मतेऽपि पूर्वोक्तसमूहालम्बनेच्छास्थलेऽनुमितिनिर्वाहाय सिद्धावननुगतेच्छाविरहविशिष्टत्वं न निवेश्यते येन पूर्वोक्तदोषः स्यात् । किं तु अननुगतेच्छाकालीनसिद्धिव्यक्तिभिन्नत्वमेव निवेश्यते । अतो न विनिगमनाविरहावकाशः । वायुसंयोगाभाव-

गादाधरी

वह्निमान् पर्वतस्तेजस्वीत्याकारकासमानप्रकारकनिश्चयदशायां पर्वतो वह्निमानित्या-
द्याकारकानुमितेरानुभविकतया यथाश्रुते तदनुपपत्तेः प्रकारविशेषं निवेशयति-
पाषाणमयत्वादिनेति। तत्र – पर्वते। तस्य – वह्नेः। धर्मित्वसाध्यत्वयोः।
उद्देश्यत्वविधेयत्वयोः। अनुप्रवेशनीयावित्यस्य पक्षताशरीरे इत्यादिः। तथा च
पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगादिसंसर्गावच्छिन्नविधेयताकानुमितिं प्रति तद्रूपा-
वच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छि-
न्नस्य सिषाधयिषाविरहविशिष्टस्याभावो हेतुरिति पर्यवसितम्।

---

भावबोधिनी

वैशिष्ट्यं सामानाधिकरण्येन निवेशनीयम्। सिद्धिव्यक्तिभिन्नत्वं तु स्वरूपसंबन्धेनेति
लाघवस्यैव विनिगमकत्वादिति भावः। सिद्धेरनन्तरमित्यादि। यत्रादौ पर्वतो
वह्निमान् वह्निव्याप्यालोकवांश्चेति सिद्ध्यात्मकपरामर्शः ततः एतत्क्षणानन्तरक्षणेऽनु-
मितिर्जायताम् धूमलिङ्गकानुमितिश्च जायतामितीच्छा तत्रालोकलिङ्गकवह्नयनु-
मित्युत्पत्तये यदि अननुगतेच्छाकालीनसिद्धिभिन्नत्वं सिद्धौ निवेश्यते तदा द्वितीयक्षणे
तादृशेच्छाकालीनायाः सिद्धेरेव प्रथमक्षणेऽपि सत्त्वेन तस्यां सिद्धौ तादृशसिद्धि-
भिन्नत्वविरहात् अननुगतेच्छाकालीनसिद्धिभिन्नसिद्ध्यभावरूपपक्षतायाः प्रथमक्षणेऽपि
सत्त्वात् तद्बलात् द्वितीयक्षणे = इच्छोत्पत्तिक्षणेऽनुमित्यापत्तिः। न चेच्छासमग्र्याः
अनुमितिप्रतिबन्धिकायाः प्रथमक्षणे सत्त्वात् द्वितीयक्षणे इच्छैव जायते नानुमितिरिति
वाच्यम्। ज्ञानेच्छयोर्युगपदुत्पाद इति मते इच्छासामग्र्याः ज्ञानप्रतिबन्धकत्वा-
नङ्गीकारात्। तस्मात् सिद्धिभिन्नत्वं न विशेषयितुं शक्यते, अपि तु अननुगते-
च्छाविरहवैशिष्ट्यमेवेति पूर्वमते गौरवमेवेति भावः।

ननु यत्रादौ प्रतिबन्धकीभूता धूमलिङ्गकानुमितीच्छा ततः सिद्ध्यात्मका-

भावबोधिनी

लोकपरामर्शः एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामिति— इच्छा च युगपत्, ततः पर्वतो वह्निमानित्यनुमितिः, तत्र तल्लिङ्गकानुमितीच्छाविरहविशिष्टायाः अन्यलिङ्गकानुमितीच्छारूपायाः प्रतिबन्धिकायाः सत्त्वात् अनुमित्यनुपपत्तिः। तदुपपत्त्यर्थं यदि अन्यलिङ्गकेच्छायां अननुगतेच्छाविरहवैशिष्ट्यं निवेश्यते तदा तत्कालीनवायुसंयोगाद्यभाववैशिष्ट्यनिवेशमादाय विनिगमनाविरहः प्रसजति इत्याशङ्क्य सिद्धिकालीनान्यलिङ्गकेच्छेत्यत्र अन्यलिङ्गकेच्छाविशेषणीभूतायां सिद्धौ अननुगतेच्छाकालीनसिद्धिभिन्नत्वं निवेश्यते। तथा च अननुगतेच्छाकालीनसिद्धिभिन्नसिद्धिविशिष्टा अन्यलिङ्गकेच्छा तल्लिङ्गकानुमितौ प्रतिबन्धिकेति पर्यवसितम्। उक्तस्थलीयसिद्धिः अननुगतेच्छाकालीनेति तद्भिन्ना न भवति। अतः तद्भिन्नसिद्धिविशिष्टेच्छारूपप्रतिबन्धकविरहात् अनुमित्युपपत्तिः। इत्थं च विनिगमनाविरहादेरप्रसक्त्या उत्तरोऽयं कल्प एव युक्ततर इति समाधत्ते—यादृशस्थले चेति। एतादृशरीत्या इच्छाविशेषणीभूतायां सिद्धौ अननुगतेच्छाकालीनसिद्धिभिन्नत्वनिवेशेनैव "यतो यत्राननुगतसाध्यानुमित्सात्मकसमूहालम्बनेच्छारूपा" इत्यादिना प्रदर्शितस्थलीयानुमितेरपि निर्वाहात् तादृशेच्छाव्यक्तिभेदनिवेशनमप्यनावश्यकमिति भाति। प्रतिबन्धकोत्तेजकेच्छयोरित्यत्र प्रतिबन्धकेच्छापदेन धूमलिङ्गकेच्छा; उत्तेजकेच्छापदेन एतत्क्षणानन्तरक्षणेऽनुमितिर्जायतामित्याद्याकारा अननुगतेच्छा विवक्षिता।

एतावता प्रबन्धेन सिषाधयिषाविरहसहकृतसाधकमानाभावः पक्षतेत्यत्र सिषाधयिषाविरहपदस्य व्याख्यानं सम्पन्नम्। अथ साधकमानपदं व्याचष्टे दीधितौ, साधकमानं साध्यनिश्चय इति। तथा व्याख्याने निमित्तमाह—गादाधर्यां साधकमानपदस्येति। पूर्वोक्तदोषप्रसङ्गादिति॥ "नापि साधकबाधकमानाभावः" इति मणिव्याख्यावसरे दीधितौ "साधकबाधकमाने सिद्धिबाधौ" इत्युक्तम्। तत्रावतारिकायाम् "साधकबाधकमानपदस्य सिद्धिबाधहेतुरूपयथाश्रुतार्थपरत्वे सर्वदैवानु-

भावबोधिनी

मित्यनुपपत्तिः । "अनुमितिपूर्वं सिद्धिबाधहेतुभूतचक्षुरादेः सिद्धिहेतुभूतपरामर्शस्य च सर्वत्रैव सत्त्वात्" इति यो दोष उक्तः तत्प्रसङ्गादित्यर्थः । साध्यवत्तानिश्चय इत्यनेन हि साध्यप्रकारकनिश्चय इत्यर्थो बोध्यते । तथा सति अन्यपक्षकसाध्यप्रकारकनिश्चयस्य प्रकृतपक्षसाध्यवैशिष्ट्यावगाह्यनुमितौ प्रतिबन्धकत्वापत्तिरित्यतो व्याचष्टे प्रकृतपक्षसाध्यवैशिष्ट्यावगाहिनिश्चय इति । तथा च प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकनिश्चयोऽत्र विवक्षितः । अतो नान्यपक्षकनिश्चयस्य प्रतिबन्धकत्वापत्तिरिति भावः । एवमपि यत्र पाषाणमयत्वेन पर्वतावगाही पाषाणमयो वह्निमानिति निश्चयः तेजस्त्वेन वह्न्यवगाही पर्वतस्तेजस्वीति निश्चयो वा वर्तते तत्र तयोरपि पर्वतविशेष्यकवह्निप्रकारकनिश्चयरूपतया पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकत्वं स्यात् । अतः विशेष्यतायां प्रकृतपक्षतावच्छेदकावच्छिन्नत्वस्य प्रकारतायां प्रकृतसाध्यतावच्छेदकावच्छिन्नत्वस्य च निवेशः कार्यः । पाषाणमयो वह्निमान् इति निश्चयस्य पाषाणमयत्वावच्छिन्नविशेष्यताकत्वेऽपि प्रकृतपक्षतावच्छेदकपर्वतत्वावच्छिन्नविशेष्यताकत्वाभावात् पर्वतस्तेजस्वीति निश्चयस्य तेजस्त्वावच्छिन्नप्रकारताकत्वेऽपि प्रकृतसाध्यतावच्छेदकवह्नित्वावच्छिन्नप्रकारताकत्वाभावात् न तयोः पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतेति भावः । एवं संसर्गविशेषोऽपि निवेशनीयः, अन्यथा पर्वतः समवायेन वह्निमानित्याकारकनिश्चयस्य पर्वतः संयोगेन वह्निमानित्यनुमितिप्रतिबन्धकत्वापत्तेः ।

तथा च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताकनिश्चयः प्रतिबन्धकः, सिषाधयिषाविरहविशिष्टतादृशनिश्चयाभावरूपपक्षता कारणमिति निष्कर्षः । तदाह—पाषाणमय इत्यादिना ।

प्रतिबध्यतावच्छेदकशरीरे प्रकारतामुपेक्ष्य विधेयतानिवेशस्य प्रयोजनमाह—

## गादाधरी

पर्वतो वह्निमानित्यादिसिद्धिदशायां वह्निमान् पर्वतो घटवानित्याद्यनुमित्युदयात् तत्प्रतिबध्यतावच्छेदककोटौ प्रकारतामुपेक्ष्य विधेयतानिवेशनम्। विधेयता च वह्निमनुमिनोमीत्यनुव्यवसायनियामकः पक्षतावच्छेदकव्यावृत्तो विषयताविशेषः। स्वरूपतः पर्वतत्ववह्नित्वादिप्रकारकसिद्धिदशायां जातिमान् वह्निमान् पर्वतो जातिमत्वानित्याद्यनुमित्युत्पत्तेः शुद्धपर्वतत्ववह्नित्वादिप्रकारकसिद्धिदशायां अधिकविषयिण्याः सुन्दरः पर्वतो वह्निमान्, पर्वतस्सुन्दरवह्निमानित्याद्यनुमितेरुत्पत्त्या च प्रतिबध्यदिशि पर्वतत्वा-

---

## भावबोधिनी

पर्वतो वह्निमानित्यादि इति। तथा च वह्निमान् पर्वतो घटवानित्याकारकघटविधेयकवह्न्युद्देश्यतावच्छेदककानुमितेरपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्वेन तां प्रति पर्वतो वह्निमानित्याकारकनिश्चयस्य प्रतिबन्धकत्ववारणाय वह्नित्वावच्छिन्नप्रकारतामुपेक्ष्य वह्नित्वावच्छिन्नविधेयतानिवेशः। तन्निवेशे च वह्निमान् पर्वतो घटवानित्याकारकानुमितेः घटत्वावच्छिन्नविधेयताकत्वेन वह्नित्वावच्छिन्नविधेयताकत्वाभावात् प्रतिबध्यतावच्छेदकानाक्रान्ततया न तां प्रति पर्वतो वह्निमानिति सिद्धेः प्रतिबन्धकतापत्तिरिति भावः। ननु विधेयताया अपि प्रकारतारूपत्वात् वह्निमान् पर्वतो घटवानित्यनुमितेः कुतो न वह्नित्वावच्छिन्नविधेयताकत्वमित्यत्राह—विधेयता चेति। यदि विधेयता प्रकारतारूपा स्यात् तदा वह्निमान् पर्वतो घटवानित्यनुमित्यनन्तरं वह्निमनुमिनोमीत्यनुव्यवसायः स्यात्। अतः प्रकारताविलक्षणविषयताविशेष एव अनुव्यवसायेनोल्लिख्यत इति अनुमितौ व्यवसायात्मिकायां सैव विषयता निरूपकतया वर्तत इति वक्तव्यमिति भावः। विशेष्यतामुपेक्ष्य उद्देश्यतानिवेशस्तु पर्वते वह्निरिति वह्निविशेष्यकानुमित्यनन्तरं पर्वतोद्देश्यकवह्निविधेयकानुमितिमानित्यनुव्यवसायानुपपत्तिः। अत उद्देश्यतापि विशेष्यताविलक्षणा।

गादाधरी

वच्छिन्नेत्यादिना किंचिदविशेषितपर्वतत्वाद्विपर्याप्तावच्छेदकताकत्वमेव विवक्षणीयम्, तदर्थश्च पर्वतत्वादिनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वम्. (तेन पर्वतो वह्निमानिति सिद्धिदशायां जातिमान्पर्वतो जातिमद्वह्निमानित्याद्यनुमितेर्नानुपपत्तिः) पर्वतो वह्निमानित्याद्यनुमितो जातिमान्वह्निमान्पर्वतो जातिमद्वानित्यादिसिद्धेरप्रतिबन्धकतया प्रतिबन्धकदिश्यपि पर्वतत्वावच्छिन्नेत्यादिना किंचिदविशेषिततत्तदवच्छिन्नत्वमेव विवक्षणीयम्। तदर्थश्च निरवच्छिन्नतवृत्त्यवच्छेदकताकत्वमित्यवधेयम्।

---

भावबोधिनी

ननु जातित्वेन पर्वतत्वावगाहिन्याः जातिमान् वह्निमानित्यनुमितेरपि पर्वतत्वजात्यवच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयतानिरूपकतया, जातित्वेन-वह्नित्वावगाहिन्याः पर्वतो जातिमद्वानित्याकारकानुमितेरपि पर्वतत्वावच्छिन्नोद्देश्यता-निरूपितवह्नित्वावच्छिन्नविधेयताकतया च तादृशानुमितिं प्रति पर्वतो वह्निमानित्या-कारकसिद्धेः प्रतिबन्धकत्वापत्तिरित्याशङ्क्य शुद्धपर्वतत्वावच्छिन्नत्वस्योद्देश्यतायां शुद्धवह्नित्वावच्छिन्नत्वस्य विधेयतायां च निवेशान्न दोष इति इति समाधत्ते—स्वरूपत इत्यादिना। शुद्धपर्वतत्वावच्छिन्नत्वं च पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकता-कत्वम्। जातिमान् वह्निमानित्याकारकानुमितेः जातित्वावच्छिन्नपर्वतत्वनिष्ठावच्छे-दकताकोद्देश्यताकत्वात् न तस्याः पर्वतो वह्निमानिति सिद्धिप्रतिबध्यत्वम्। एवं शुद्धवह्नित्वावच्छिन्नविधेयताकत्वं च वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकविधे-यतानिरूपकत्वम्। पर्वतो जातिमद्वानित्याकारकानुमितेः जातित्वावच्छिन्नवह्नित्व-निष्ठावच्छेदकताकविधेयताकत्वात् न तस्या अपि पर्वतो वह्निमानिति सिद्धिप्रति-बध्यता। नन्वेवमपि सुन्दरपर्वतो वह्निमान् इत्याकारकानुमितेः पर्वतत्वसुन्दरत्वो-भयावच्छिन्नोद्देश्यताकायाः पर्वतत्वांशे धर्मान्तरानवगाहिन्याः पर्वतत्वनिष्ठनिरवच्छि-न्नावच्छेदकताकोद्देश्यताकत्वात् तां प्रति, पर्वतः सुन्दरवह्निमानित्यनुमितेः सुन्दरत्व-

दीधितिः

यदि च पर्वतत्वसामानाधिकरण्येन एकत्र साध्यसिद्धावपि विनानुमित्सां अन्यत्र तादृशानुमितिरानुभाविकी, तदा धर्मिविशेषोऽपि निवेश्यः नान्यथा ।

---

गादाधरी

ननु पर्वतत्वावच्छिन्नविशेष्यताकानुमितौ पर्वतत्वावच्छिन्नविशेष्यताकसिद्धेः प्रतिबन्धकत्वे पर्वतत्वेन एकपर्वतविशेष्यकसिद्धिदशायां तेन रूपेणान्यपर्वते साध्यानुमित्यनुदयापत्तिरत आह—यदि चेति । पर्वतत्वांशे अवच्छेदकत्वावगाहि यत्किञ्चिद्व्यक्तिविशेष्यकसिद्धिदशायां तेन रूपेण धर्म्यन्तरे अनुमित्यनुत्पादस्य निर्विवादतया सामानाधिकरण्येनेति । एकत्र—एकधर्मिणि । अनुमित्सासत्त्वे विशेषणाभावादेव विशिष्टाभावनिर्वाहात् धर्मिविशेषनिवेशनमफलमतो विनाप्यनुमित्सामिति । अन्यत्र-

---

भावबोधिनी

वह्नित्वोभयावच्छिन्नविधेयताकायाः निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयतानिरूपकत्वात् तां प्रति च पर्वतो वह्निमानित्याकारकसिद्धेः प्रतिबन्धकत्वापत्तिरिति चेत्—न । पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्य शुद्धपर्वतत्वावच्छिन्नेत्यनेन, वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्य शुद्धवह्नित्वावच्छिन्नेत्यनेन, वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्य शुद्धवह्नित्वावच्छिन्नेत्यनेन च विवक्षितत्वात् । सुन्दरपर्वतो वह्निमानित्याकारकानुमितेः पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेयकताभिन्ना या सुन्दरत्वनिष्ठावच्छेदकता तन्निरूपकोद्देश्यताकत्वात्, जातिमान् वह्निमानित्यनुमितेः पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्ना या जातित्वावच्छिन्ना अवच्छे-

भावबोधिनी

दकता तन्निरूपकोद्देश्यताकत्वात्, पर्वतः सुन्दरवह्निमानित्यनुमितेः वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नसुन्दरत्वनिष्ठावच्छेदकतानिरूपकविधेयताकत्वात् पर्वतो जातिमद्वानित्यनुमितेः वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नजातित्वावच्छिन्नावच्छेदकताकविधेयताकत्वाच्च न तासामनुमितीनां पर्वतो वह्निमानिति सिद्धिप्रतिबध्यत्वम् ।

एवं प्रतिबन्धकतावच्छेदकशरीरेऽपि विशेष्यतायां प्रकारतायां च शुद्धपर्वतत्वावच्छिन्नत्वं शुद्धवह्नित्वावच्छिन्नत्वं च निवेशनीयम् । अन्यथा पर्वतो वह्निमान् इत्यनुमितिं प्रति जातिमान् वह्निमानिति सिद्धेः पर्वतो जातिमद्वानिति सिद्धेश्च प्रतिबन्धकत्वापत्तेः । शुद्धपर्वतत्वावच्छिन्नत्वं च पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकत्वनिरूपकत्वमात्रम्, न तु पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वपर्यन्तम् । सुन्दरपर्वतो वह्निमानिति सिद्धेरपि पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकताया इष्टत्वात् । एवं शुद्धवह्नित्वावच्छिन्नत्वं वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदताकत्वमात्रम्, न तु वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वपर्यन्तम्, पर्वतः सुन्दरवह्निमानिति सिद्धेरपि पर्वतो वह्निमानित्यनुमितिबन्धकताया इष्टत्वात् ।

तथा च पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकपर्वतनिष्ठोद्देश्यतानिरूपितवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकवह्निनिष्ठविधेयतानिरूपकानुमितित्वावच्छिन्नं प्रति पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकपर्वतनिष्ठविशेष्यतानिरूपितवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकवह्निनिष्ठप्रकारतानिरूपकनिश्चयः प्रतिबन्धक इति प्रतिबध्यप्रतिबन्धकभावः फलितः ।

अनुमितिद्विविधेत्यादिग्रन्थः 'पक्षतावच्छेदकस्य सामानाधिकरण्येन'

गादाधरी

अन्यधर्मिणि । धर्मिविशेषानन्तर्भावेऽपि वक्ष्यमाणरीत्या सामानाधिकरण्येन सिद्धिदशायामवच्छेदकावच्छेदेनानुमितौ बाधकाभावात् तादृशेति । सामानाधिकरण्यमात्रावगाहीत्यर्थः । धर्मिविशेषोऽपीति । तथा च पर्वतत्वाद्यवच्छिन्नतत्तत्पर्वतनिष्ठोद्देश्यताकानुमितौ पर्वतत्वाद्यवच्छिन्नतत्पर्वतादिविशेष्यकसाध्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वमिति भावः । अन्यथा—तादृशानुमितेरानुभाविकत्वविरहे । धर्मिविशेषो निवेश्य इत्यनुषज्यते । अनुमितिर्द्विविधा, पक्षतावच्छेदकसाध्ययोस्सामानाधिकरण्यमात्रावगाहिनी

भावबोधिनी

इत्यादि दीधितेरवतारिकारूपः । अस्यायं सारांशः—अनुमितिर्द्विविधा पक्षतावच्छेदकसाध्ययोः एकाधिकरणवृत्तित्वरूपसामानाधिकरण्यमात्रविषयिणी तयोः अवच्छेद्यावच्छेदकभावविषयिणी च । अवच्छेद्यावच्छेदकभावोऽपि द्विविधः स्वरूपसंबन्धरूपः व्याप्यव्यापकभावरूपश्चेति । मूलावच्छिन्नो वृक्षः कपिसंयोगीत्याकारकानुमितिः पक्षतावच्छेदकस्य मूलस्य साध्यस्य कपिसंयोगस्य च स्वरूपसंबन्धरूपमवच्छेद्यावच्छेदकभावं विषयीकरोति न तु व्याप्यव्यापकभावम् । अग्रावच्छिन्नवृक्षस्यापि आधेयतासंबन्धेन मूलवत्त्वात्, तत्र कपिसंयोगाभावसत्त्वेन तस्य मूलव्यापकत्वाभावात् प्रागभावकालावच्छिन्नमूलवति वृक्षे कपिसंयोगाभावाच्च । वस्तुतः स्वरूपसंबन्धरूपावच्छेदकत्वभानमनुभावानुरोधात् । तच्च तत्कालावच्छिन्नमूलस्याक्षतम् । मणिकाराणामपि बाधग्रन्थे गन्धप्रागभावकालावच्छिन्नो घटो गन्धवानित्याकारायां स्वरूपसंबन्धरूपावच्छिन्नत्वावगाहिन्यामनुमितौ गन्धप्रागभावकालावच्छिन्नो घटो गन्धाभाववानिति बाधकग्रहस्य, मूलरूपदेशावच्छिन्नो वृक्षः कपिसंयोगीत्यनुमितौ मूलावच्छिन्नो वृक्षः कपिसंयोगाभाववानिति बाधग्रहस्य च प्रतिबन्धकतया बाधः असिद्ध्याद्यसंकीर्णो हेत्वाभास इत्युपपादयताम् अनुमितौ स्वरूपसंबन्धरूपावच्छेद्यावच्छेदकभाव

## गादाधरी

तयोरवच्छेद्यावच्छेदकभावावगाहिनी च। अवच्छेद्यावच्छेदकभावोऽपि क्वचित्स्वरूपसंबन्धविशेषः, यथा मूलावच्छिन्नो वृक्षः संयोगीत्यादौ मूलादिसंयोगाद्योः। तत्रान्यादृशस्य तस्य दुर्वचत्वात्। तदवगाहिन्यामेव चानुमितौ पक्षतावच्छेदकदेशकालावच्छेदेन बाधग्रहस्य विरोधितया बाधस्यासिद्धिव्यभिचारासंकरं मणिकृद्व्यवस्थापयिष्यति। क्वचिच्च व्याप्यव्यापकभावः। यथा पृथिवी रूपवतीत्यादौ पृथिवी-

---

## भावबोधिनी

भानमनुमतम्। एवं क्वचित् पक्षतावच्छेदकसाध्ययोर्व्याप्यव्यापकभावोऽप्यनुमितौ भासते। यथा पृथिवी रूपवतीत्यनुमितौ रूपे पृथिवीत्वव्यापकत्वं भासते। मणिकृतामपि व्याप्यव्यापकभावभानं संमतम्। केवलव्यतिरेकिग्रन्थे पृथिवी इतरभिन्नेत्यनुमितौ पृथिव्येकदेशे घटादौ इतरभेदस्य सिद्धत्वात् अंशतः सिद्धसाधनं दोष इत्याशङ्क्य सर्वा पृथिवी इतरभिन्नेति पृथिवीत्वव्यापकत्वेन इतरभेदावगाह्यनुमितेरुद्देश्यतया पृथिव्येकदेशे इतरभेदसिद्धेः तादृशानुमितिप्रतिबन्धकत्वं नास्तीति न दोष इत्युपपादयद्भिर्मणिकारैः व्याप्यव्यापकभावभानं स्वीकृतमेव।

तत्र व्याप्यव्यापकभावरूपावच्छेद्यावच्छेदकभावभानं त्रेधा वक्तुं शक्यते। पृथिवी रूपवतीत्यत्र साध्ये रूपे पक्षतावच्छेदकं पृथिवीत्वं व्यापकत्वरूपावच्छिन्नत्वसंबन्धेन धर्मिपारतन्त्र्येण प्रकारतया भासते। अतः अनुमितिः न पृथिवीत्वावच्छिन्नरूपवतीत्याकारा, अपि तु पृथिवी रूपवतीत्याकारैव। एव पर्वतो वह्निमानित्यत्रापि वह्नौ पर्वतत्वं व्यापकत्वसंबन्धेन प्रकारतया भासते। अथ वा पर्वते पर्वतत्वव्यापकत्वविशिष्टसंयोगसंबन्धेन वह्नेर्भानम्। पर्वतवह्न्योः संसर्गतया भासमाने संयोगसंबन्धे पर्वतत्वव्यापकत्वरूपस्य पर्वतत्वावच्छिन्नत्वस्य संबन्धतावच्छे-

## गादाधरी

त्वादिरूपाद्यो:, तत्र मणिकृतैव पृथिव्यामितरभेदानुमाने अंशे घटे सिद्धसाधनमा-शंक्य सर्वा पृथिवी इतरभिन्नेत्युद्देश्यप्रतीतेरभावात् पक्षतावच्छेदकनानात्वेहि तत् इति समाधानस्य वक्ष्यमाणत्वात् पक्षतावच्छेदकस्य साध्यांशे धर्मिपारतन्त्र्येण प्रकारस्या-वच्छिन्नत्वं संबन्धविधया भासते, अतोऽवच्छेदकावच्छेदेनानुमितेर्न पर्वतत्वाद्यवच्छिन्न-वह्निमान् पर्वत इत्याकारता ।

अथ वा पक्षांशे संबन्धतया भासमानसाध्यसंबन्ध संबन्धतावच्छेदकतया पक्षतावच्छेदकावच्छिन्नत्वभानम्, पक्षतावच्छेदकावच्छिन्नत्वविशिष्टसाध्यीयत्वेनैव वा

---

## भावबोधिनी

दकतया भानमिति यावत् । अथ वा पर्वतत्वव्यापकत्वविशिष्टं यत् साध्यं तत्प्रति-योगिकत्वेन पर्वते वह्नेः संयोगो भासत इति ।

तत्र व्याप्यव्यापकभावरूपावच्छेद्यावच्छेदकभावावगाह्यनुमितिं प्रति पक्षता-वच्छेदकसामानाधिकरण्येन साध्यावगाहिसिसिद्धिर्न प्रतिबन्धिका । पर्वतो वह्निमा-निति सिद्धिदशायां पर्वतः सुन्दरवह्निमानित्यनुमितेर्जायमानतया न्यूनविषयकसिद्धेः अधिकविषयकानुमित्यप्रतिबन्धकत्वात् । एतदभिप्रायेणैव अवच्छेदकावच्छेदेनानुमितौ अंशतः सिद्धसाधनं न दोष इति मणिकारैरुक्तम् । अंशतः सिद्धसाधनं नाम सामानाधिकरण्येन सिद्धिः । तथा चावच्छेदकावच्छेदेनानुमितौ अवच्छेदकावच्छेदेन सिद्धिरेव प्रतिबन्धिका । सामानाधिकरण्येनानुमितिं प्रति तु अवच्छेदकावच्छेदेन सिद्धिः सामानाधिकरण्येन सिद्धिश्च प्रतिबन्धिका । न्यूनविषयकानुमितावधिक-विषयकसिद्धेः प्रतिबन्धकत्वात् । यथा पर्वतो वह्निमानित्यनुमितौ पर्वतः सुन्दर-वह्निमानिति सिद्धेः इति फलितम् । तदेव दीधितावुक्तमिति ।

## दीधितिः

पक्षतावच्छेदकस्य सामानाधिकरण्येन साध्यसिद्धौ सत्यामपि तदवच्छेदेनानुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेन अनुमितिं प्रति तदवच्छेदेन सिद्धेः

## गादाधरी

पक्षे तत्संबन्धभानमित्यन्यत्र विवेचितम् । अवच्छेदकावच्छेदेनानुमितिः पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिसिद्धिदशायामपि जायते, न्यूनविषयकसिद्धिदशायामधिकानुमितेस्सर्वानुभवसिद्धत्वात्, अत एव यत्रावच्छेदकावच्छेदेनानुमितेरुद्देश्यता तत्र नांशतस्सिद्धसाधनं दोष इत्यतस्तदेवोपपादयति—पक्षतावच्छेदकेति । सामानाधिकरण्येन सामानाधिकरण्यमात्रेण । तदवच्छेदेन—पक्षतावच्छेदकावच्छेदेन । सिद्धेः— सिद्धेरेव । सामानाधिकरण्यमात्रावगाहिसिद्धेः प्रतिबन्धकत्वं एवकारव्यवच्छेद्यम् । अयं भावः

## भावबोधिनी

अन्यावृत्तस्य तस्येति । व्याप्यव्यापकभावरूपस्यावच्छेद्यावच्छेदकभावस्येत्यर्थः । पक्षतावच्छेदकनानात्वे हि तदिति । सिद्धसाधनमित्यर्थः । अनित्ये वाङ्मनसी इत्यादौ । साध्यीयत्वेनेति । साध्यप्रतियोगिकत्वेनेत्यर्थः । धर्मिपारतन्त्र्येणेति । यत्र स्वातन्त्र्येण साध्ये पक्षतावच्छेदकस्य विशेषणत्वं तत्रैवानुमितेः पर्वतत्वावच्छिन्नवह्निमान् पर्वत इत्याकारकतेति भावः । सिद्धेः न्यूनविषयकत्वं व्याप्यव्यापकभावाविषयकत्वात् । अधिकविषयकत्वं व्याप्यव्यापकभावविषयकत्वम् । अवच्छेदकावच्छेदेन साध्यसिद्धेरपि सामानाधिकरण्यविषयकत्वात् तद्व्यवच्छेदार्थं सामानाधिकरण्येनेत्यस्य सामानाधिकरण्यमात्रेणेति व्याख्यानं कृतम् । अवच्छेद

## गादाधरी

पर्वतो वह्निमानित्यादिसिद्धिदशायां पर्वतः सुन्दरवह्निमानित्याकारकानुमितेरुत्पत्त्या विधेयतावच्छेदकतायाः पर्याप्तिः प्रतिबध्यतावच्छेदककोटौ निवेशनीया । एवं संयोगादिना वह्नेस्सिद्धावपि संयुक्तसंयोगादिना वह्न्याद्यनुमित्युत्पत्त्या संसर्गताया अपि पर्याप्तिर्निवेशनीया । एवं संयोगादिना साध्यस्य दण्डोपलक्षितपुरुषादेस्सिद्धावपि विशिष्टनिरूपितसंयोगादिना दण्डिपुरुषाद्यनुमित्युत्पत्त्या संसर्गतावच्छेदकताया अपि

---

## भावबोधिनी

कावच्छेदेनानुमितौ सामानाधिकरण्येन सिद्धेः प्रतिब न्धकत्ववच्छेदाय सिद्धेरेवेति व्याख्यानं कृतम् ।

अयं भाव इत्यादि । अवच्छेदकावच्छेदेनानुमितेः सामानाधिकरण्यमात्रावगाहिसिद्धिप्रतिबध्यत्वाभावः अनेन ग्रन्थेन उपपाद्यते । पर्वतत्ववह्न्योः सामानाधिकरण्यावगाहिनी सिद्धिः तयोः सामानाधिकरण्यावगाह्यनुमितौ प्रतिबन्धिकेत्युक्तौ पर्वतः सुन्दरवह्निमानित्यनुमितेरपि पर्वतत्ववह्न्योः सामानाधिकरण्यावगाहितया तां प्रत्यपि पर्वतो वह्निमानिति सिद्धेः प्रतिबन्धकत्वं स्यात् । तद्वारणाय वह्नित्वपर्याप्तावच्छेदकताकविधेयताकत्वं प्रतिबध्यतावच्छेदककोटौ निवेशनीयम् । पर्वतः सुन्दरवह्निमानित्यनुमितौ विधेयतावच्छेदकतायाः सुन्दरत्वेऽपि पर्याप्ततया वह्नित्वमात्रपर्याप्तत्वं नास्तीति न तस्याः प्रतिबध्यत्वम् । एवं पर्वतः संयोगसंबन्धेन वह्निमानिति सिद्धिदशायां पर्वतः संयुक्तसंयोगेन वह्निमानित्यनुमितेरुत्पत्त्या संयोग-"र्याप्तसंसर्गताकत्वं प्रतिबध्यतावच्छेदककोटौ निवेशनीयम् । संयुक्तप्रतियोगिकत्वविशिष्टसंयोग एव संयुक्तसंयोगेन वह्निमान् इत्यनुमितौ संसर्गता पर्याप्ता न शुद्धसंयोग इति न तस्याः संयोगेन वह्निमानिति सिद्धिप्रतिबध्यत्वम् । एवं संयोग-

## गादाधरी

पर्याप्तिर्निवेशनीया। एवं चावच्छेदकावच्छेदेनानुमितौ शुद्धवह्नित्वादौ शुद्धसंयोगत्वादौ वा विधेयतावच्छेदकतायाः संसर्गतावच्छेदकताया वा अपर्याप्ततया तादृशानुमितेर्न सामानाधिकरण्यमात्रावगाहिसिद्धिप्रतिबध्यत्वमिति।

प्राञ्चस्तु—व्यापकतायाः संसर्गतयाः भाने मानाभावात्पक्षतावच्छेदकाक्रान्तयावद्व्यक्तिविषयकानुमितिरेव पक्षतावच्छेदकावच्छेदेनानुमितिरिति वदन्ति, तन्मते मणिकारोक्तन्यायेन अंशतस्सिद्धसाधनस्यानुगतरूपावच्छिन्ननानाव्यक्तिपक्षकानुमितावदोषत्वे तत्र सामानाधिकरण्यमात्रावगाहिन्यास्सिद्धेरविरोधितया पक्षतावच्छेदकव्यापककोद्देश्यता-

---

## भावबोधिनी

संबन्धेन दण्डोपलक्षितपुरुषवानिति सिद्धेः विशिष्टसंयोगेन दण्डिपुरुषवानिति अनुमितिप्रतिबन्धकत्ववारणाय संयोगत्वपर्याप्तसंसर्गतावच्छेदकताकत्वं प्रतिबध्यतावच्छेदककोटौ निवेश्यम्। उक्तानुमितौ ससर्गतावच्छेदकतायाः वैशिष्ट्येऽपि पर्याप्ततया संयोगत्वपर्याप्तत्वं नास्तीति न प्रतिबध्यता। इत्थं च पर्वतत्ववह्न्योः सामानाधिकरण्यावगाहिसिद्धेः प्रतिबध्यतावच्छेदकं पर्वतत्वपर्याप्तावच्छेदकताकोद्देश्यतानिरूपितवह्नित्वपर्याप्तावच्छेदकताकविधेयतानिरूपकसंयोगत्वपर्याप्तावच्छेदकताकसंयोगपर्याप्तसंसर्गतानिरूपकानुमितित्वम्। तच्च अवच्छेदकावच्छेदेनानुमितौ नास्ति। पर्वतत्वावच्छिन्नत्वविशिष्टवह्नेर्विधेयतया तदवच्छेदकतायाः पर्वतत्वावच्छिन्नत्वेऽपि पर्याप्तिः। अथ वा पर्वतत्वावच्छिन्नत्वविशिष्टसंयोगस्यैव संसर्गतया भानात् संसर्गतावच्छेदकतायाः पर्वतत्वावच्छिन्नत्वेऽपि पर्याप्तत्वात्। अतः अवच्छेदकावच्छेदेनानुमितेर्न सामानाधिकरण्यमात्रेण सिद्धिप्रतिबध्यत्वमित्याशयः।

प्राञ्चस्त्विति। पर्वतत्वस्य वह्नेश्च मध्ये व्यापकत्वरूपमवच्छिन्नत्वं संसर्गतया भासत इत्यत्र प्रमाणाभावात् व्यापकत्वसंबन्धेन पर्वतत्वविशिष्टवह्न्यवगाह्यनु-

भावबोधिनी

मितिरवच्छेदकावच्छेदेनानुमितिरिति वक्तुं न शक्यते। अतः पर्वतत्वाश्रययावत्पर्वतविशेष्यकानुमितिः पर्वतत्वावच्छेदेनानुमितिः। पर्वतत्वव्यापकोद्देश्यताकानुमितिरिति यावत्। मणिकारैः यत्र पक्षतावच्छेदकं नाना अनित्ये वाङ्मनसी इत्यादौ तत्रैवांशतः सिद्धसाधनं दोष इति कथनात् पर्वतत्वादिरूपैकधर्मावच्छिन्नानेकव्यक्तिपक्षकस्थले अंशतः सिद्धिरूपायाः सामानाधिकरण्येन सिद्धेरप्रतिबन्धकत्वमेतन्मते। तथा च पर्वतत्वव्यापकोद्देश्यताकवह्न्यनुमितौ पर्वतत्वावच्छेदेन वह्निसिद्धिः प्रतिबन्धिका, पर्वतत्वव्यापकोद्देश्यताकान्यानुमितौ पर्वतत्वावच्छेदेन पर्वतत्वसामानाधिकरण्येन च वह्निसिद्धिः प्रतिबन्धिकेति फलितम्। एवं अनित्ये वाङ्मनसी इत्यनुमितिः पक्षतावच्छेदकव्यापकोद्देश्यताकान्यानुमितिः तां प्रति सिद्धिसामान्यं विरोधि। पक्षतावच्छेदकसमानाधिकरणानां सकलोद्देश्यतानामेकसंबन्धतेत्यग्रिमनिष्कर्षे चालिनीन्यायेनानुमितेर्वाक्त्वमनस्त्वयोर्व्यापकत्वमेव। तथा च पक्षतावच्छेदकनानात्वे वागनित्येति सिद्धेर्वाङ्मनसे अनित्ये इत्यनुमितिविरोधित्वात् सिद्धिसामान्यप्रतिबध्यत्वनिर्वाहः।

न च विषयभेदेनेति। अनुमितिनिरूपितायाः उद्देश्यतारूपविषयताया अपि उद्देश्यरूपविषयभेदेन भिन्नत्वात् पर्वतभेदेन पर्वतनिष्ठा उद्देश्यतापि भिन्ना। पर्वतत्वं तु निखिलपर्वतनिष्ठम्। तथा च चालिनीन्यायेन पर्वतरूपाणां सर्वासामेवोद्देश्यतानां पर्वतत्ववन्निष्ठात्यन्ताभावप्रतियोगितया पर्वतत्ववन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपं पर्वतत्वव्यापकत्वं कस्यामप्युद्देश्यतायां नास्तीति पक्षतावच्छेदकव्यापकोद्देश्यताया अप्रसिद्धिरिति भावः। नानाव्यक्तिपक्षस्थल इति। एकव्यक्तिपक्षकस्थले अयं वृक्षः कपिसंयोगी एतत्त्वादित्यादौ पक्षतावच्छेदकस्य एकव्यक्तिमात्रवृत्तितया एकव्यक्तिरूपाया उद्देश्यतायाः पक्षतावच्छेदकव्यापकत्वं संभवतीत्याशयः।

## गादाधरी

कान्यत्वमेव सिद्धिसामान्यप्रतिबध्यतावच्छेदककोटौ निवेशनीयम्। न च विषयभेदेन विषयताभेदात् पक्षतावच्छेदकावच्छेदेनानुमितेर्विषयतानामपि प्रत्येकं पक्षतावच्छेदकाव्यापकत्वमेवेति तादृशविषयतायाः नानाव्यक्तिपक्षस्थले अप्रसिद्धिरिति वाच्यम्। उद्देश्यतासंबन्धेन पक्षतावच्छेदकव्यापकान्यत्वस्यैवानुमितिविशेषणत्वोपगमात्। दीधितिकारस्यावच्छेदकावच्छेदेन अनुमितावच्छेद्यावच्छेदकभावस्य क्वचित्स्वरूपसंबन्धात्मकस्येव व्याप्यव्यापकभावस्यापि भानमेवानुमतम्, भागासिद्धेर्दोषत्वनिर्वाहार्थं पक्षता-

---

## भावबोधिनी

उद्देश्यतासंबन्धेनेति। स्वनिरूपितोद्देश्यतासंबन्धेन पक्षतावच्छेदकव्यापिका या अनुमितिः तदन्यत्वं सिद्धिसामान्यप्रतिबध्यतावच्छेदकम्। यस्यामनुमितौ सर्वेऽपि पर्वता विषयाः तस्यामनुमितौ उद्देश्यतासंबन्धेन पर्वतत्वव्यापकत्वमस्ति। पर्वतत्वाश्रयेषु सर्वेषु स्वनिरूपितोद्देश्यतासंबन्धेनानुमितेः सत्त्वात्। अतो न व्यापकत्वाप्रसिद्धिरिति भावः।

दीधितिकारस्येति। अयमत्र प्रघट्टकार्थः--अवच्छेदकावच्छेदेनानुमितौ स्वरूपसंबन्धरूपः अवच्छेद्यावच्छेदकभावः मूलावच्छिन्नो वृक्षः कपिसंयोगी इत्यादौ यथा भासते, तथैव व्याप्यव्यापकभावरूपः अवच्छेद्यावच्छेदकभावोऽपि पक्षतावच्छेदकसाध्ययोः भासत इति अङ्गीकरणीयम्। पक्षतावच्छेदकावच्छेदेन साध्यानुमितौ पक्षतावच्छेदकावच्छेदेन हेत्ववगाही परामर्शः कारणमिति च अवश्यं वक्तव्यम्। अन्यथा पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावावगाहिभागासिद्धिज्ञानस्य परामर्शप्रतिबन्धकत्वासंभवात् भागासिद्धेः हेत्वाभासत्वानुपपत्तेः। एवं सति 'शिखरविशिष्टपर्वतः वह्निमान्' इत्याकारकानुमितौ शिखरवह्न्योः अवच्छेद्यावच्छेदकभावावगाहिन्यां शिखरे हेतोः तत्संबन्धस्य वा अवच्छेदकत्वावगाही शिखरावच्छिन्न-

## भावबोधिनी

पर्वतः वह्निव्याप्यधूमवान् इत्याकारकपरामर्शस्य हेतुत्वं वक्तव्यम्। तच्च न संभवति। शिखरस्य धूमसंबन्धरहितस्य धूमतत्संबन्धनिरूपितावच्छेदकताविरहात् इत्याशङ्कामुद्भाव्य पक्षतावच्छेदके साध्यतत्संबन्धान्यतरनिरूपितानतिरिक्तवृत्तित्व-रूपावच्छेदकत्वावगाहिन्यां अनुमितावेव पक्षतावच्छेदकावच्छेदेन हेत्ववगाही परामर्शः भागासिद्धेः दोषत्वनिर्वाहार्थं हेतुरिति स्वीक्रियते। पक्षतावच्छेदके स्वरूप-संबन्धरूपसाध्यनिरूपितावच्छेदकत्वावगाहिन्यां अनुमितौ तु पक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञानं कारणमिति नाङ्गीक्रियते। अतः शिखरावच्छिन्नपर्वतः वह्निमान् इत्यनुमितौ शिखरे अवच्छेदकत्वानवगाही पर्वतः वह्निव्याप्यधूमवान् इति परामर्श एव कारणम्, तस्मान्न दोषः इति समाधानं 'अवच्छेदकत्वयोः वस्तुनोः भेदात्' इत्यनेन दीधितिकारो वक्ष्यति। तेन पक्षतावच्छेदके साध्यं प्रति अनतिरिक्त-वृत्तित्वरूपं स्वरूपसंबन्धरूपं च अवच्छेदकत्वम् इति द्विविधमवच्छेदकत्वमनुमितौ भासत इति स्पष्टीकृतम्। तत्र अनतिरिक्तवृत्तित्वं व्याप्यत्वरूपम्। तथा च अवच्छेदकावच्छेदेनानुमितौ व्याप्यव्यापकभावरूपः अवच्छेद्यावच्छेदकभावोऽपि भासत इति दीधितिकारसंमत इति लभ्यते। यदि व्याप्यव्यापकभावमानं दीधिति-कारानुमतं स्यात् तर्हि 'पर्वतत्वसामानाधिकरण्येन एकत्र साध्यसिद्धौ' इति दीधितिग्रन्थे 'एकत्र' इत्येतेनैव सर्वत्र साध्यसिद्धिरूपा या प्राचीनानुमता अवच्छेदकावच्छेदेन सिद्धिः तद्व्यावृत्तिसंभवे तद्व्यावृत्तिप्रयोजनकस्य सामानाधिकरण्येन इत्यस्य वैयर्थ्यं स्यात्।

एवञ्च पक्षतावच्छेदकव्यापकोद्देश्यताकानुमितिः अवच्छेदकावच्छेदेनानुमितिः। पक्षतावच्छेदकव्यापकोद्देश्यताकान्यानुमितित्वं सिद्धिसामान्यप्रतिबध्यतावच्छेदकम्, इति प्राचीनानां मतम्। साध्ये तत्संबन्धे वा संबन्धविधया संसर्गतावच्छेदक-

गादाधरी

वच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञानकारणताया आवश्यकत्वात्, शिखरविशिष्टपर्वतो वह्निमानित्यादौ शिखरे हेतोस्तत्संबन्धस्य वा अवच्छेदकताविरहेण हेत्वसिद्धेरावश्यकतेत्याशंक्य पक्षतावच्छेदके अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहिन्यामनुमितौ तदवच्छेदेन हेतुमत्ताज्ञानस्य हेतुताया भागासिद्धेर्दोषत्वार्थमुपगमेपि स्वरूपसंबन्धरूपावच्छेदकत्वावगाहिन्यामनुमितौ पक्षतावच्छेदकावच्छेदेन

---

भावबोधिनी

विधया वा पक्षतावच्छेदकव्यापकत्वावगाहिनी अनुमितिः अवच्छेदकावच्छेदेनानुमितिः। पक्षतावच्छेदकसामानाधिकरण्येनानुमितित्वं सिद्धिसामान्यप्रतिबध्यतावच्छेदकमिति दीधितिकृन्मतम्। अनयोर्मध्ये दीधितिकृतां मतमेव युक्तम्। प्राचीनमतेऽपि विधेयतावच्छेदकतादीनां पर्याप्तेर्निवेश आवश्यक इति पूर्वमुक्तत्वात्। सिद्धिसामान्यप्रतिबध्यतावच्छेदककोटौ पक्षतावच्छेदकव्यापकोद्देश्यताकान्यत्वस्याधिकस्य निवेशनीयतया गौरवात्। यतः पक्षोद्देश्यकसाध्यविधेयकत्वे सति पक्षतावच्छेदकव्यापकोद्देश्यताकान्यत्वमात्रं न प्रतिबध्यतावच्छेदकम्। तथा सति पर्वतो वह्निमान् इति सिद्धिदशायां पर्वतः सुन्दरवह्निमानित्यनुमित्यनुपपत्तेः। किं तु पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकपर्याप्तावच्छेदकताकसाध्यनिष्ठविधेयताकत्वसहितम्। तथा च गौरवमिति।

एवं प्राचीनमते सिद्धिसामान्याभावदशायां अवच्छेदकावच्छेदेन अनुमितौ उत्पद्यमानायां सिद्धिसामान्याभावस्य कार्यतावच्छेदकं यत् पक्षतावच्छेदकव्यापकोद्देश्यताकान्यानुमितित्वं तदवच्छिन्नस्य उत्पत्त्यापत्तिः। सिद्धिसामान्यस्य यत् प्रतिबध्यतावच्छेदकं तदेव हि सिद्धिसामान्याभावस्य कार्यतावच्छेदकम्।

## गादाधरी

हेतुमत्ताज्ञानापेक्षा नोपेदते इति समाधानस्य स्वयं अवच्छेदकत्वयोर्वस्तुनोर्भेदादित्यनेनाग्रे वक्ष्यमाणत्वात्; एवं व्यापकताभानस्य तदननुमतत्वे पर्वतत्वसामानाधिकरण्ये-नैकत्र साध्यसिद्धावित्यत्रैकत्रेत्यनेनैवावच्छेदकावच्छेदेन या सिद्धिस्तत्त्वाभावलाभे तल्लाभप्रयोजनकस्य सामानाधिकरण्येनेत्युपादानस्यानर्थक्याच्च । युज्यते चैतदेव मतम् । प्राचीनमतेऽप्युक्तयुक्त्या विधेयतावच्छेदकत्वादिपर्याप्तिनिवेशस्यावश्यकत्वात्तादृशोद्देश्यता-

......

## भावबोधिनी

ननु दीधितिकृन्मतेऽपि पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वपर्याप्तावच्छेदकताकविधेयताकानुमितित्वमेव सिद्धिसामान्यप्रतिबध्यतावच्छेदकम् । पर्वतत्वव्यापकत्वविशिष्टवह्नित्वपर्याप्तावच्छेदकताकविधेयताकानुमितित्वं वा वह्नित्वपर्याप्तावच्छेदकताकपर्वतत्वव्यापकत्वविशिष्टसंयोगत्वावच्छिन्नसंसर्गताकवह्निनिष्ठविधेयताकानुमितित्वं वा अवच्छेदकावच्छेदेन सिद्धेः प्रतिबध्यतावच्छेदकम् इति वक्तव्यम् । तथा च सिद्धिसामान्याभावकाले अवच्छेदकावच्छेदेन अनुमितौ उत्पद्यमानायां सिद्धिसामान्याभावस्य कार्यतावच्छेदकं यत् शुद्धवह्नित्वापर्याप्तावच्छेदकताकविधेयताकानुमितित्वं शुद्धसंयोगत्वपर्याप्तावच्छेदकताकसंसर्गताकानुमितित्वं वा तदवच्छिन्नानुमितेः उत्पत्त्यापत्तिः इति चेन्न इष्टापत्तेः । तत्कालीनायां अवच्छेदकावच्छेदेन अनुमितौ पर्वतत्वव्यापकत्वविशिष्टे वह्नित्वे संयोगत्वे वा पर्याप्तः विषयताविशेष इव शुद्धवह्नित्वे शुद्धसंयोगत्वे वा पर्याप्तोऽपि विषयताविशेषः स्वीक्रियते । एकत्र एकज्ञाननिरूपितविषयताद्वयाङ्गीकारे क्षतिविरहात् । प्राचीनमते तु नैवं वक्तुं शक्यम् । एकत्रानुमितौ पक्षतावच्छेदकव्यापकोद्देश्यताकत्व-पक्षतावच्छेदकव्यापकोद्देश्यताकान्यत्वयोः विरोधात् पक्षतावच्छेदकव्यापकोद्देश्यताकानुमितौ जायमानायां तदन्यानुमितिरपि इष्टैवेति वक्तुमशक्यत्वात्-इति ।

## गादाधरी

कान्यत्वस्याधिकस्य निवेशनीयतया गौरवात्। एवं सिद्धिसामान्यशून्यतादशायामवच्छेदकावच्छेदेनानुमितावुत्पद्यमानायां सिद्धयभावबलात्तत्कार्यतावच्छेदकीभूतपक्षतावच्छेदकव्यापकोद्देश्यताकान्यानुमितित्वावच्छिन्नस्यापत्तेश्च। अस्मन्मते च सिद्धिसामान्याभावकालीनायामवच्छेदकावच्छेदेनानुमितौ विशिष्टवह्नित्वे विशिष्टसंयोगत्वे वा पर्याप्तविषयताविशेष इव शुद्धवह्नित्वे शुद्धसंयोगत्वे वा पर्याप्तोऽपि विषयताविशेषः स्वीक्रियते। एकज्ञानस्यैकत्र विषये विषयताद्वयोपगमे क्षतिविरहादिति। सिद्धि-

---

## भावबोधिनी

क्वचिदिति। मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ। आवश्यकत्वात् इति कुत्रचित्पक्षे हेत्वभावविषयकज्ञानस्य पक्षतावच्छेदकाश्रयेषु सर्वेषु धूमावगाहि ज्ञानं प्रत्येव प्रतिबन्धकत्वात् इति भावः। अवच्छेदकताविरहेणेति। धूमसंबन्धिनः शिखरस्यैव धूमावच्छेदकत्वात्, शिखरे धूमसंबन्धविरहात् इति भावः। अवच्छेदकत्वयोर्वस्तुनोः भेदादिति। स्वरूपसंबन्धरूपम् अवच्छेदकत्वं अनतिरिक्तवृत्तित्वरूपम् अवच्छेदकत्वमिति, अवच्छेदकत्वस्य द्विविधत्वात् इत्यर्थः। तदननुमतत्व इति। दीधितिकारासंमतत्व इत्यर्थः। एतदेव मतमिति। दीधितिकृतां मतमित्यर्थः। उक्तयुक्त्येति। 'पर्वतो वह्निमान्' इति सिद्धिदशायां 'पर्वतः सुन्दरवह्निमान्' इत्यनुमित्यनुरोधरूपया युक्त्या इत्यर्थः। विधेयतावच्छेदकत्वादिपर्याप्तीति। आदिपदेन संसर्गतावच्छेदकतायाः पर्याप्तिर्गृह्यते। तादृशोद्देश्यताकान्यत्वस्येति। पक्षतावच्छेदकव्यापकोद्देश्यताकान्यत्वस्येत्यर्थः।

एवं प्राचीनमतसिद्धस्य अवच्छेदकावच्छेदेन अनुमितित्वस्य अवच्छेदकावच्छेदेन हेतुमत्ताज्ञानकार्यतावच्छेदकत्वं निराकृत्य स्वमतसिद्धावच्छेदकावच्छेदेनानुमितिपरामर्शयोः कार्यकारणभावं व्यापकतायाः भानासंभवशङ्कावारणाय व्यवस्थाप-

## गादाधरी

सामान्याभावकार्यतावच्छेदकावच्छिन्नोत्पत्तिरिष्टैव । न चावच्छेदकावच्छेदेनानुमितौ व्यापकतायास्संसर्गतया भानोपगमे तादृशानुमितावक्च्छेदकावच्छेदेन हेतुमत्ताज्ञानस्य पृथक्कारणत्वकल्पने गौरवम्; एतन्मते तत्तत्पर्वतोद्देश्यकानुमितौ तत्तत्पर्वतविशेष्यक-परामर्शस्य हेतुतया अर्थवशादेव यावत्पर्वतविषयकपरामर्शात्तथानुमितेरुत्पादात्तादृशानु-मितौ परामर्शस्य स्वतन्त्रहेतुत्वाकल्पनाद्व्यापकतायास्संसर्गविधया भानस्य क्वचिद-

---

## भावबोधिनी

यितुं शङ्कते—न चावच्छेदकावच्छेदेनेति । दीधितिकारमते अवच्छेदकावच्छेदेनानु-मितौ व्यापकतायाः संसर्गतया भानोपगमे तादृशानुमितौ अवच्छेदकावच्छेदेन हेतुमत्ताज्ञानस्य भागासिद्धेः दोषत्वनिर्वाहार्थं पृथक्कारणत्वं कल्पनीयमिति गौरवम्। प्राचीनमते तु तत्तत्पर्वतोद्देश्यकानुमितौ तत्तत्पर्वतविशेष्यकपरामर्शस्य कारणतया यत्र यावत्पर्वतविशेष्यकः परामर्शोऽस्ति तत्र अर्थात् यावत्पर्वतोद्देश्यकानुमितेः उत्पादात् यावत्पर्वतोद्देश्यकानुमितौ तादृशपरामर्शस्य पृथक्कारणतायाः अकल्पनात् लाघवम्। तन्मते व्यापकतायाः संसर्गतया भानं नैवाङ्गीक्रियते इति भावः।

समाधत्ते—यत्रैकःपरामर्श इत्यादिना । प्राचीनमते यत्र एकः परामर्शः कतिपयपर्वतविषयकः अन्यः परामर्शः तदितरयावत्पर्वतविषयकः तत्रापि यावत्पर्वत-विषयकानुमितेः उत्पत्त्यापत्तिः । परामर्शैक्यस्य अप्रयोजकत्वात् । न चेष्टापत्तिः। द्वयोः परामर्शयोः एकस्यापि अवच्छेदकावच्छेदेन हेत्वनवगाहित्वात् अवच्छेदका-वच्छेदेन हेतुमत्ताज्ञानं विना अवच्छेदकावच्छेदेन अनुमितेः असंभवात् ।

ननु अवच्छेदकावच्छेदेन अनुमित्युत्पादकपरामर्शसिद्धिविशेषाभावघटितसाम-ग्र्यां एकं प्रयोजकत्वम् । तदनुत्पादकपरामर्शसिद्धिसामान्याभावघटितसामग्र्यां

## गादाधरी

ध्यनभ्युपगमादिति वाच्यम्; यत्रैकः परामर्शो वर्तते कतिपयपर्वतविषयकः, अन्यश्च तदितरयावत्पर्वतविषयकस्तत्राप्यवच्छेदकावच्छेदेनानुमितेरुत्पादापत्तः। न चेष्टापत्तिः, अवच्छेदकावच्छेदेन हेतुमत्ताज्ञानं विना अवच्छेदकावच्छेदेनानुमित्यनुत्पादस्य सर्वसम्मतत्वात्तत्र च कस्यापि परामर्शस्य भवन्मतसिद्धाया अवच्छेदकावच्छेदेन हेतुमत्तावगाहिताया असम्भवात्। एवं यत्र पक्षतावच्छेदकताघटकसंबन्धेन पक्षतावच्छेदकमवृत्ति तत्र तेन संबन्धेन पक्षतावच्छेदकाक्रान्ताप्रसिद्धया अनुमितिद्वैविध्यानुपपत्तिश्च तन्मते। अपि चावच्छेदकावच्छेदेनानुमितेः अवच्छेद्यावच्छेदकभावरूपा-

---

## भावबोधिनी

अपरं प्रयोजकत्वम् इति न प्रथमदोषावकाशः। अवच्छेदकावच्छेदेन परामर्शसत्त्वे सामानाधिकरण्येन परामर्शस्य तदनुत्पादकत्वाभावात्। तेन क्वचित् सामानाधिकरण्येन परामर्शोत्तरं अवच्छेदकावच्छेदेन परामर्शसत्त्वेऽपि न क्षतिः। एवं समानविशेष्यकपरामर्श एव नियामकः। समानविशेष्यकत्वञ्च तत्संसर्गावच्छिन्नतन्निष्ठप्रकारताशालित्वे सति तद्विशेष्ययावद्विशेष्यकत्वम्। तद्विशेष्यान्यूनविशेष्यकत्वमिति यावत्। अन्यथा अस्मिन्मते इन्धनपरामर्शोत्तरं वह्निपरामर्शात् यदि वह्नीन्धनयोः अनुमितिः तदा ममापि इष्टापत्तिरेव इत्यत आह—एवमिति। पक्षतावच्छेदकाक्रान्तयावद्विशेष्यकानुमितिः अवच्छेदकावच्छेदेनानुमितिः। तदाक्रान्तयत्किञ्चिद्विषयकानुमितिः सामानाधिकरण्येनानुमितिः इति प्राचीनमते यत्र पक्षतावच्छेदकतावच्छेदकसंबन्धेन पक्षतावच्छेदकं अवृत्ति, तत्र 'काञ्चनमयः पर्वतः वह्निमान्' इत्यादौ स्वरूपसंबन्धेन काञ्चनमयत्वाश्रयस्य पक्षस्य अप्रसिद्धया उक्तरीत्या अनुमितिद्वैविध्यं नोपपद्यते। पर्वतस्यापि कालिकसंबन्धेन काञ्चनमयत्वाश्रयतया अप्रसिद्धिः न सङ्गच्छत इति पक्षतावच्छेदकताघटकसंबन्धेनेत्युक्तम्। अनुमितिद्वैविध्येति।

## भावबोधिनी

पक्षतावच्छेदकाक्रान्तयावत्पक्षविशेष्यकानुमिति – तदाक्रान्तयत्किञ्चित्पक्षव्यक्तिविषयकानुमितिद्वैविध्येत्यर्थः ।

ननु पक्षतावच्छेदकताघटकसंबन्धेन पक्षतावच्छेदकवत्त्वेन भासमानयावद्व्यक्तिविशेष्यकानुमितिः अवच्छेदकावच्छेदेनानुमितिः तादृशयत्किञ्चिद्व्यक्तिविशेष्यकानुमितिः सामानाधिकरण्येनानुमितिः इति स्वीकारात् नोक्तदोष इत्यत आह- अपि चेति । अवच्छेदकावच्छेदेनानुमितौ यदि अवच्छेद्यावच्छेदकभावः अधिकतया न भासते, तर्हि सामानाधिकरण्यमात्रेण सिद्धिदशायां यावत्पर्वतविशेष्यकानुमितिरूपायाः अवच्छेदकावच्छेदेनानुमितेः उत्पत्तौ किं बीजम् । सिद्ध्यविषयीभूतधर्मिविषयकत्वमेव बीजमिति वक्तुं न शक्यते । सामानाधिकरण्येण सिद्ध्यविषयीभूतकतिपयपर्वतादिविषयकानुमितेरपि उत्पादसंभवात् यावत्पर्वतोद्देश्यकानुमित्युत्पत्त्यनुपपत्तेः । दीधितिकारमते तु अवच्छेदकावच्छेदेनानुमितौ अवच्छेदकावच्छेदेन हेतुमत्ताज्ञानस्य पृथक्कारणतास्वीकारात् तादृशपरामर्श एव सामानाधिकरण्यमात्रेण सिद्धिदशायां अवच्छेदकावच्छेदेनानुमितेरुत्पत्तौ बीजमिति भावः ।

तादृशानुमितेरिति । अवच्छेदकावच्छेदेनानुमितेरित्यर्थः । तथाविधसिद्धिदशायामिति । सामानाधिकरण्यमात्रेण सिद्धिदशायामित्यर्थः ।

एतावता प्रबन्धेन पक्षतावच्छेदकव्यापकोद्देश्यताकान्यानुमितित्वं सिद्धिसामान्यप्रतिबध्यतावच्छेदकमिति प्राचीनमतम् । तन्मते पक्षतावच्छेदकसाध्ययोः व्याप्यव्यापकभावोऽनुमितौ न भासते । पक्षतावच्छेदकावच्छेदेनानुमितित्वं सिद्धिसामान्यप्रतिबध्यतावच्छेदकमिति दीधितिकृन्मतम् । एतन्मते पक्षतावच्छेदकसाध्ययोः व्याप्यव्यापकभावोऽनुमितौ भासते पक्षतावच्छेदकनानात्व एवांशतः

## गादाधरी

धिकविषयानवगाहित्वे सामानाधिकरण्यमात्रेण सिद्धिदशायां तादृशानुमितेरुत्पत्तौ बीजाभावः, सिद्ध्यविषयीभूतधर्मिविषयकत्वस्य तद्बीजत्वे तथाविधसिद्धिदशायां सिद्ध्यविषयकतिपयपर्वतादिविषयकानुमितेरप्युत्पादौचित्यात् ।

अथ मणिकृता पक्षतावच्छेदकैक्ये अंशतस्सिद्धसाधनस्यादोषत्वोपगमेपि तदितरप्राचीनैरनुमितिमात्र एवांशतस्सिद्धसाधनस्यापि दोषत्वमुपेयते; अत एव तेषां

---

## भावबोधिनी

सिद्धसाधनं दोष इत्यादिकमुपपादितम् । प्राचीनमते पक्षतावच्छेदकव्यापकोद्देश्यताकान्यत्वस्य प्रतिबध्यतावच्छेदककोटौ निवेशनीयतया गौरवमिति चोक्तम् । इदानीं प्राचीनमत एव लाघवमिति शङ्कते—अथ मणिकृतेत्यादिना । यत्र पक्षतावच्छेदकमेकं तत्र पर्वतो वह्निमानित्यादौ अंशतःसिद्धसाधनं न दोषः । कस्मिंश्चित् पर्वते वह्निनिश्चयेऽपि पर्वतत्वावच्छेदेन वह्न्यनुमितेर्जायमानत्वात् इति मणिकृतः । तदतिरिक्ताः प्राचीनास्तु तत्रापि अंशतः सिद्धसाधनं दोषत्वेनाङ्गीकुर्वन्ति । अत एव तन्मतमवलम्ब्य शब्दोऽनित्यः कृतकत्वादित्यनुमाने पक्षतावच्छेदकशब्दत्वाक्रान्ते ध्वन्यात्मकशब्देऽनित्यत्वस्य सिद्धत्वात् अंशतः सिद्धसाधनं दोष इत्याशङ्क्य तद्वारणाय पक्षे वर्णात्मकत्वरूपं विशेषणं निवेशितम् । पक्षतावच्छेदकैक्यस्थलेऽप्यंशतः सिद्धसाधनस्य दोषत्वादेव पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादिति अनुमानमिष्यते न तु गन्धवती तरेभ्यो भिद्यते गन्धवत्त्वादिति । पक्षतावच्छेदकहेत्वोरैक्यात् गन्धव्यापकेतरभेदसामानाधिकरणो गन्ध इति व्याप्तिग्रहे इतरभेदसामानाधिकरण्यस्य गन्धे भाने तुल्यवित्तिवेद्यतया गन्धसामानाधिकरण्यस्यापि इतरभेदे भानात् अंशतः सिद्धसाधनरूपदोषात् सकलपृथिव्यामितरभेदविषयकानुमितेरयोगात् । न च पक्षतावच्छेदकाश्रयकिञ्चित्पक्षे साध्यसिद्धावपि पक्षता-

गादाधरी

मतमालम्ब्य मणिकृतापि शब्दानित्यत्वानुमाने ध्वन्यादावंशतस्सिद्धसाधनवारणाय वर्णात्मकत्वादिविशेषणं पक्षे निवेशितम्, अत एव गन्धादिरूपपक्षतावच्छेदकस्य पृथिव्यामितरभेदादौ साध्ये हेतुता नाचार्यैरनुमन्यते। व्याप्तिग्रह एव हेतुरूपपक्षतावच्छेदकसाध्ययोस्सामानाधिकरण्यभानेन सिद्धसाधनात्सकलपृथिवीविषयकानुमितेरप्ययोगात्। न चांशतस्साध्यसिद्धावप्यधिकधर्मिविषयकतया यावत्पर्वतादिविषयकानुमित्युत्पाद उचितः, अधिकधर्मिविषयकानुमितेस्सिद्धिदशायामुत्पादे च वागनित्येत्यादिसिद्धि-

भावबोधिनी

वच्छेदकावच्छेदेनानुमितिः भवितुमर्हति। तादृशानुमितेः अधिकधर्मिविषयकत्वात् तथा च यत्र पक्षतावच्छेदकमेकं तत्र कथं अंशतः सिद्धसाधनं दोषः स्यादिति वाच्यम्। पक्षतावच्छेदकाश्रययत्किञ्चित्पक्षविषयकसिद्धिदशायाम् अधिकधर्मिविषयकानुमितेः स्वीकारे 'वाक्अनित्या' इत्याकारकसिद्धिदशायां 'वाङ्मनसी अनित्ये' इत्याकारकसमूहालम्बनानुमितेः अधिकविषयिण्याः उत्पत्तिसंभवात् पक्षतावच्छेदकनानात्वस्थलेऽपि अंशतः सिद्धसाधनस्य अदोषत्वप्रसङ्गात्। नवीनैरपि पक्षतावच्छेदकैक्यस्थल एव अंशतः सिद्धसाधनस्य अदोषत्वस्वीकारात्। एवञ्च प्राचीनमतेऽपि सामानाधिकरण्येन सिद्धेः अवच्छेदकावच्छेदेन सिद्धेश्च पक्षतावच्छेदकव्यापकोद्देश्यताकाम् अवच्छेदकावच्छेदेनानुमितिं प्रत्यपि प्रतिबन्धकतया सिद्धिसामान्यप्रतिबध्यतावच्छेदककोटौ पक्षतावच्छेदकव्यापकोद्देश्यताकान्यत्वं न निवेश्यते इति लाघवम्। दीधितिकारमते तु अवच्छेदकावच्छेदेनानुमितिं प्रति सामानाधिकरण्येन सिद्धिरूपायाः अंशतस्सिद्धेः अप्रतिबन्धकतया पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन सिद्धिः प्रतिबन्धिका। सिषाधयिषाविरहविशिष्टायाः अस्याः अभावः पक्षता। पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति पक्षता-

भावबोधिनी

वच्छेदकसामानाधिकरण्येन सिद्धेः तदवच्छेदेन सिद्धेश्च प्रतिबन्धकतया सिषाधयिषाविरहविशिष्टसिद्धिसामान्याभावः पक्षतेति पक्षताद्वयस्य स्वीकरणीयतया गौरवम् ।

न च प्राचीनमते पक्षतावच्छेदकावच्छेदेन अनुमितौ साध्ये पक्षतावच्छेदकव्यापकत्वभानानङ्गीकारात् यस्य पक्षतावच्छेदकसामानाधिकरण्येन साध्याभावावगाही बाधनिश्चयो वर्तते, तस्य पक्षतावच्छेदकसामानाधिकरण्येन बाधनिश्चयाविषयीभूतकतिपयधर्मिविशेष्यकानुमितिः यथा जायते, तथा सकलधर्मिविषयकानुमितिरपि भवितुमर्हति । समानविषयकबाधनिश्चयस्यैव प्रतिबन्धकत्वात् । तथा च अवच्छेदकावच्छेदेनानुमितौ उद्देश्यायां अंशतो बाधस्य दोषत्वं न स्यात् इति वाच्यम् । तादृशस्थले अंशतो बाधस्य अदोषत्वेऽपि पक्षतावच्छेदकसामानाधिकरण्यावगाहिसाध्यविशिष्टबुद्धौ तदवगाहिसमानविषयकसाध्याभावनिश्चयस्य प्रतिबन्धकतायाः प्राचीनैरङ्गीकृततया तादृशस्थले अंशतो बाधस्य दोषत्वसंभवात् । एवञ्च यावत्पक्षविषयकानुमितौ यावत्पक्षविशेष्यकहेतुमत्ताज्ञानं कारणम् । यत्किञ्चित्पक्षविशेष्यकहेत्वभावप्रकारकज्ञानस्य तादृशहेतुमत्ताज्ञानप्रतिबन्धकतया भागासिद्धेः हेत्वाभासत्वनिर्वाहः ।

एवं प्राचीनमते यत्र सकलपर्वतानां एकपरामर्शविषयत्वं नास्ति, किन्तु कश्चन परामर्शः कतिपयपर्वतविषयकः अन्यः परामर्शः तदतिरिक्तसकलपर्वतविषयकः इत्येवं परामर्शद्वयविषयता तत्र तादृशपरामर्शद्वयात् यावत्पर्वतविषयकानुमितिरूपा अवच्छेदकावच्छेदेन अनुमितिः स्यादिति यदापादनं पूर्वं कृतम् तत् प्राचीनमते इष्टमेवेतिएतावत्पर्यन्तं अथेत्यादिपूर्वपक्षग्रन्थस्य सारांशः ।

## गादाधरी

दशायामनित्ये वाङ्मनसे इत्यादिसमूहालम्बनानुमित्युत्पादस्याप्यौचित्यात्, न हि तत्र कस्याप्यनुमितिरभिमता; नवीनैरपि पक्षतावच्छेदकैक्य एवांशतस्सिद्धसाधनस्यादोषत्वोपगमात्। एवं च नवीनमत एवावच्छेदकावच्छिन्नत्वावगाहितदनवगाह्यनुमितिभेदेन पक्षताद्वयस्य स्वीकरणीयतया गौरवम्। न च विशिष्टबुद्धौ धर्मितावच्छेदकव्यापकत्वभानानुपगमे पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिबाधदशायां तत्सामानाधिकरण्येन तादृशबाधाविषयधर्मिविषयिण्याः कतिपयधर्मिविशेष्यकानुमितेरिव सकलधर्मिविषयकानुमितेरप्युत्पादौचित्यात् अवच्छेदकावच्छेदेनानुमितावुद्देश्यायामप्यंशतो बाधस्या-

---

## भावबोधिनी

समाधत्ते-मैवमित्यादिना। अवच्छेदकावच्छेदेन विशिष्टबुद्धौ व्यापकत्वभानं यदि नाङ्गीक्रियते, तर्हि सामानाधिकरण्येन तदभावज्ञानं प्रति अवच्छेदकावच्छेदेन विशिष्टबुद्धेः प्रतिबन्धकतायां व्यापकत्वभानं प्रयोजकमिति वक्तुमशक्यतया तत्प्रयोजकं प्राचीनमते दुर्वचनम्। न च प्राचीनमते येन रूपेण यो धर्मी प्रतिबध्यबुद्धौ भासते, तेन रूपेण तद्धर्मिविषयकत्वं विपरीतज्ञाननिष्ठायां प्रतिबन्धकतायां प्रयोजकम् इति वाच्यम्। तथा सति गन्धत्वसामानाधिकरण्येन जलवृत्तित्वावगाहि- 'गन्धो जलवृत्तिर्नवा' इत्याकारकसंशयं प्रति गन्धत्वावच्छेदेन जलावृत्तित्वावगाही 'गन्धो जलावृत्तिः' इत्याकारकनिश्चयः यथा प्रतिबन्धकः, तथा पार्थिवगन्धत्वावच्छेदेन जलावृत्तित्वावगाही 'पार्थिवगन्धो जलावृत्तिः' इत्याकारकनिश्चयोऽपि प्रतिबन्धकः स्यात्। पार्थिवगन्धस्यैव प्रतिबध्ये संशये प्रतिबन्धके निश्चये च विषयत्वात्। उभयोः समानविषयकत्वे विशेषाभावात्। नवीनमते तु अवच्छेदकावच्छेदेन विशिष्टबुद्धौ व्यापकत्वभानोपगमात् शुद्धगन्धत्वावच्छेदेन जलावृत्तित्वनिश्चये शुद्धगन्धत्वव्यापकत्वं जलावृत्तित्वे भासते। पार्थिवगन्धत्वा-

गादाधरी

दोषतापत्तिरिति वाच्यम्, सामानाधिकरण्यमात्रावगाहिन्यां विशिष्टवुद्धौ समानविषयकतथाविधविपरीतनिश्चयप्रतिबन्धकतायाः प्राचीनानुमततया अंशतो बाधस्य दोषतोपपत्तेः, एवं च यावत्पक्षविषयकानुमितौ यावत्पक्षविशेष्यकहेतुमत्ताज्ञानापेक्षया तद्विरोधितया भागासिद्धेरपि दोषतानिर्वाहः। एवं यत्र सकलपर्वतानां नैकपरामर्शविषयता अपि तु परामर्शद्वयविषयता तत्र यावत्पर्वतविषयकानुमितिरूपावच्छेदकावच्छेदेनानुमितिः प्राचीनमते इष्टैव (नवीनमतेपि तत्र

---

भाववोधिनी

वच्छेदेन जलावृत्तित्वनिश्चये 'पार्थिवगन्धत्वव्यापकत्वं भासते। तेन च व्यापकत्वे अभावप्रतियोगितावच्छेदककोटौ पार्थिवत्वस्य प्रवेशाप्रवेशाभ्यां भिन्ने। तथा च 'गन्धो जलवृत्तिर्नवा' इति संशयं प्रति शुद्धगन्धत्वव्यापकत्वावगाहिनिश्चय एव प्रतिबन्धकः इति विशेषः संभवतीति भावः।

ऐकरूप्येणेति। समानविशेष्यक एव बाधनिश्चयो विरोधी। समानविशेष्यकत्वं च तत्संसर्गावच्छिन्न–तद्धर्मावच्छिन्न-प्रतियोगिताकाभावत्वावच्छिन्न- प्रकारताकत्वे सति तद्विशेष्यान्यूनविशेष्यकत्वम् इत्याशयः।

उभयेति। विशेषिताविशेषितधर्मनिरूपितविलक्षणाधिकरणताघटिततया व्यापकतयोः भेदात्। तथा च गन्धत्वव्यापकत्वं गन्धत्वाधिकरणवृत्तिअन्योन्याभाव-प्रतियोगितावच्छेदकत्वावच्छिन्नाभावः। पार्थिवगन्धत्वव्यापकत्वं पार्थिवगन्धत्वाधिकरणवृत्त्यन्योन्याभाव–प्रतियोगिताच्छेदकत्वावच्छिन्नभावः तत्र प्रतियोगितावच्छेदकयोः धर्मयोः भेदात् अभावरूपव्यापकतयोः भेद इति आशयः।

'तत्सामानाधिकरण्येनानुमितिं' इत्यादिदीधितिं व्याचष्टे– पक्षताच्छेदकसामा-

### गादाधरी

तादृशानुमितेरावश्यकत्वादिति) अवच्छेदकावच्छेदेनानुमितौ तादृशपरामर्शस्य हेतुत्वाकल्पनेनाप्येतन्मते लाघवम्; मैवम्, अवच्छेदकावच्छेदेन विशिष्टबुद्धौ व्यापकत्वभानानुपगमे व्यापकत्वभानस्य सामानाधिकरण्येन विपरीतज्ञानप्रतिबन्धकत्वप्रयोजकत्वासम्भवेन तत्प्रयोजकस्य दुर्वचतापत्तेः। न चैकरूपेण समानधर्मिविषयकत्वमेव विपरीतज्ञानप्रतिबन्धकत्वे बीजम् तथा सति पार्थिवगन्धत्वाद्यवच्छेदेन जलावृत्तित्वादिनिश्चयस्यापि शुद्धगन्धत्वाद्यवच्छेदेन तन्निश्चयस्येव गन्धो जलवृत्तिर्नवेत्यादौ

---

### भावबोधिनी

नाधिकरण्येत्यादिना। पूर्वं पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका न तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरिति निरूपितम्। इदानीं पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति सिद्धिसामान्यं प्रतिबन्धकमिति निरूप्यते। तत्र इयं युक्तिः-पर्वतत्वसामानाधिकरण्येन पर्वतत्वावच्छेदेन च वह्निनिश्चयदशायां पर्वतत्वसामानाधिकरण्यमात्रावगाहिनी अनुमितिः न जायते। पक्षतावच्छेदकाश्रये साध्यसंबन्धः पक्षतावच्छेदकसामानाधिकरण्यम्। उभयोरपि सिद्धयोः पक्षतावच्छेदकवति साध्यसंबन्धस्य भानात् पक्षतावच्छेदकसामानाधिकरण्यावगाहित्वं वर्तते। अनुमितेरपि सिद्धिविषयातिरिक्तः विषयः न भवति। तथा च पर्वतत्वसामानाधिकरण्यमात्रावगाहिन्यामनुमितौ तत्सामानाधिकरण्यावगाहिन्योः उभयोरपि सिद्धयोः प्रतिबन्धकत्वं युक्तमित्याशयेन दीधितिकारैः सिद्धिमात्रस्यैव विरोधित्वमित्युक्तम्। अवच्छेदकावच्छेदेनानुमितेरपि सामानाधिकरण्यविषयकत्वात् तस्याः सिद्धिसामान्यप्रतिबध्यत्वव्यावृत्त्यर्थं तत्सामानाधिकरण्येन इति दीधितेः पक्षतावच्छेदकसामानाधिकरण्यमात्रेण इति विवरणं कृतम्। 'मात्र'शब्देन सामानाधिकरण्याति-

## गादाधरी

गन्धत्वसामानाधिकरण्यमात्रेण जलवृत्तित्वादिसंशये विरोधिताप्रसङ्गादुभयोरेव निश्चययो-र्गन्धत्वादिना तदाश्रययावद्धर्मिणि ग्राह्याभावावगाहितया अविशेषात्, विरोधिविषय-कत्वाविशेषे धर्मितावच्छेदककोटावधिकभानस्याविरोधिताबीजत्वाभावात्। द्वितीयस्य विरोधित्वे प्रथमस्यापि तथात्वौचित्यात्। नव्यमते उभयनिश्चयविषयव्यापकतयो-र्भेदेन विशेषसम्भवात्। एतेनावच्छेदकावच्छेदेनानुमितौ व्यापकत्वभानापेक्षया लाघवात् यावद्धर्मिवृत्त्यखण्डैकविषयताभ्युगम एवोचितः, तदन्यविषयतैव सिद्धिसामा-

---

## भावबोधिनी

रिक्ताच्छेद्यावच्छेदकभावविषयकत्वं व्यवच्छिद्यते। ननु प्रतिबध्यतावच्छेदकशरीरे अवच्छेद्यावच्छेदभावाववगाहित्वस्य निवेशे सत्येव सामानाधिकरण्यमात्रावगाह्यनुमितेः सिद्धिसामान्यप्रतिबध्यत्वं निर्वहति। तत्र तन्निवेशे च सिद्धिसामान्याभावकार्यता-वच्छेदककुक्षावपि तन्निवेशस्य आवश्यकतया यत्र प्रथमतः बाधनिश्चयः, ततः पक्षतावच्छेदकसामानाधिकरण्येन हेत्ववगाही परामर्शः, ततः पक्षतावच्छेदकावच्छेदेन हेत्ववगाही परामर्शः तत्र सिद्धिसामान्यशून्यतादशायां उक्तपरामर्शबलात् अवच्छे-दकावच्छेदेनानुमितौ उत्पद्यमानायां सिषाधयिषाविरहविशिष्टसिद्धिसामान्याभावरूप-कारणबलात् तत्कार्यतावच्छेदकावच्छिन्नायाः अवच्छेद्यावच्छेदकभावावगाहित्व-शून्याया अनुमितेरापत्तिरित्यत आह-**अवच्छेद्यावच्छेदकभावानवगाहित्वं चेति**। तथा च प्रतिबध्यतावच्छेदकशरीरे अवच्छेद्यावच्छेदकभावानवगाहित्वनिवेशेऽपि कार्यता-वच्छेदकशरीरे अनिवेशात् नोक्तापत्तिरिति भावः।

ननु सामान्यतः सिद्ध्यभावरूपपक्षताबलात् अवच्छेदकावच्छेदेन परामर्श-शून्यकाले सामानाधिकरण्येन अनुमितौ जायमानायां अवच्छेदकावच्छेदेन अनु-

गाधादरी

न्यप्रतिबध्यतावच्छेदिका; सिद्धिसामान्याभावकालीनानुमितौ च तादृशैकधर्मिमात्रवृत्तिविषयतापीष्यत इति न कोपि दोष इति परास्तम्।

पक्षतावच्छेदकसामानाधिकरण्येन तदवच्छेदेन च वह्निसिद्धिदशायां सामानाधिकरण्यमात्रावगाहिन्यनुमितिर्न जायते, उभयोरेव सिद्ध्योः पक्षतावच्छेदकवति साध्यसंबन्धरूपतदुभयसामानाधिकरण्यावगाहितया तादृशानुमितेस्तदतिरिक्तानवगाहित्वात्। अतस्तथाविधानुमितावुभयविधसिद्ध्योरेव प्रतिबन्धकत्वं दर्शयति– तत्सामानाधिकरण्येति। तत्सामानाधिकरण्यमात्रेण–पक्षतावच्छेदकसामानाधिकरण्य–

---

भावबोधिनी

मितेर्वारणाय अवच्छेद्यावच्छेदकभावानवगाहित्वं कार्यतावच्छेदककोटौ निवेशनीयमेव इत्यत आह–पर्याप्तिनिवेशादेवेति। पर्वतत्वपर्याप्तावच्छेदकताक–उद्देश्यतानिरूपित – संयोगपर्याप्तसंसर्गताक–वह्नित्वपर्याप्तावच्छेदकताकविधेयताशाल्यनुमितित्वं कार्यतावच्छेदकमिति अवश्यं स्वीकरणीयम्। अन्यथा पक्षतादशायां 'सुन्दरपर्वतः वह्निमान्', 'पर्वतः सुन्दरवह्निमान्', 'पर्वतः संयुक्तसंयोगेन वह्निमान्', इत्याद्यनुमितेः प्रसङ्गात्। तथा च अवच्छेद्यावच्छेदकभावावगाह्यनुमितेः पर्वतत्वव्यापकत्वविशिष्टसंयोगपर्याप्तसंसर्गताकत्वेऽपि शुद्धसंयोगपर्याप्तसंसर्गताकत्वविरहाद् पूर्वोक्तापत्तिवारणसंभवात् कार्यतावच्छेदकशरीरे अवच्छेद्यावच्छेदकभावानवगाहित्वनिवेशनं व्यर्थमिति भावः।

सामानाधिकरण्यमात्रावगाह्यनुमितिं प्रति अवच्छेदकावच्छेदेन सामानाधिकरण्येन च सिद्धेः किं एकरूपेण प्रतिबन्धकत्वम् उत भिन्नभिन्नरूपेण इति जिज्ञासायां आह–प्रतिबन्धकता चेति। यद्युभयसाधारणेति। साध्याभावा-

दीधितिः

## तत्सामानाधिकरण्येनानुमितिं प्रति सिद्धिमात्रस्यैव विरोधित्वम्

---

गादाधरी

मात्रेण। अवच्छेदकावच्छेदेनानुमितेरपि सामानाधिकरण्यावगाहितया तद्व्यावर्तनाया-वच्छेद्यावच्छेदकभावावगाहित्वव्यवच्छेदार्थकं मात्रपदम्। अवच्छेद्यावच्छेदकभावानव-गाहित्वं च न सिद्ध्यभावजन्यतावच्छेदककोटौ निवेशनीयम्; उक्तदिशाऽऽपत्तिसंभ-वात्; पर्याप्तिनिवेशादेवोपपत्तेर्वैयर्थ्याच्चेत्यवधेयम्। सिद्धिमात्रस्येति। मात्रपदं कृत्स्नार्थकम्। तथा च पक्षतावच्छेदकावच्छेदेन तत्सामानाधिकरण्येन च सिद्धे-रित्यर्थः। प्रतिबन्धकता चोभयविधसिद्ध्योः संसर्गतादीनां पर्याप्तिमनिवेश्यैकरूप्ये-

---

भावबोधिनी

प्रकारकत्वे सति साध्यप्रकारकज्ञानत्वं अवच्छेदकावच्छेदेन सामानाधिकरण्येन च सिद्धिसाधारणमित्यर्थः।

ननु 'पर्वतः वह्निमान् वह्न्यभाववान् च' इति समुच्चयात्मकज्ञाने संशयवैलक्षण्याय प्रकारभेदेन विशेष्यताभेदस्य स्वीकारात् वह्निनिष्ठप्रकारतानिरूपि-तायां विशेष्यतायां वह्न्यभावनिष्ठप्रकारत्वानिरूपितत्वस्य सद्भावात् समुच्चयस्य सिद्धिपदेन अग्रहणार्थं विरोधविषयकत्वमपि निवेशनीयम्। तथा च पर्वतत्वा-वच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविषयतानिरूपित—विरोधविषयतानिरूपित-वह्न्यभावत्वावच्छिन्नप्रकारताशून्यत्वे सति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोग-संबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिज्ञानत्वं पर्वते वह्निनिश्चयत्वम् इति पर्यवसितम्। येषां मते संशये नियमतः विरोधभानं नाङ्गीक्रियते तन्मते संशय-साधारणं एतद्रूपं कथं प्रतिबन्धकतावच्छेदकं स्यात् इत्यत आह अन्यथा पुनरिति।

गादाधरी

णैव यद्युभयसाधारणनिश्चयत्वं शक्यते निर्वक्तुम्; अन्यथा पुनः पृथक्पृथगेवेति ध्येयम् ।

यत्तु सामानाधिकरण्येनानुमितौ तथाविधसिद्धेरवच्छेदकावच्छेदेन सिद्धि-व्यावृत्तरूपेण प्रतिबन्धकत्वेपि तत्रावच्छेदकावच्छेदेन सिद्धेर्न प्रतिबन्धकताधिक्यम् अवच्छेदकावच्छेदेनानुमितौ तस्यापि प्रतिबन्धकत्वे कल्पनीये अवच्छिन्नसंयोगादिपर्याप्त-संसर्गताकत्वस्य प्रतिबध्यतावच्छेदके अवश्यं निवेशनीयतया अवच्छिन्नत्वातिरिक्तधर्मा-नवच्छिन्नसंयोगादिनिष्ठसंसर्गताकत्वस्यैव च तदर्थतया शुद्धसंयोगादिसंसर्गकानुमिति-

---

भावबोधिनी

पृथक्पृथगेवेति । सामानाधिकरण्येन तदभावाप्रकारकत्वे सति अवच्छेदकावच्छेदेन तत्प्रकारकत्वम् अवच्छेदकावच्छेदेन तन्निश्चयत्वम् । अवच्छेदकावच्छेदेन साध्या-भावाप्रकारकत्वे सति सामानाधिकरण्येन साध्यप्रकारकज्ञानत्वं सामानाधिकरण्येन साध्यनिश्चयत्वम् इति भावः ।

एतावता प्रबन्धेन पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदका-वच्छेदेन सिद्धिः प्रतिबन्धिका । पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन सिद्धिः तत्सामानाधिकरण्येन सिद्धिश्च पृथक् प्रतिबन्धिका इति प्रतिबध्यप्रतिबन्धकभावत्रितयं कल्पनीयमिति सिद्धम् । तत्र प्रतिबध्यप्रति-बन्धकभावद्वयकल्पनेनैव इष्टसिद्धिरिति केषाञ्चिन्मतम् अनुवदति—यत्तु सामानाधि-करण्येनेत्यादिना । अयमाशयः सामानाधिकरण्येनानुमितौ सामानाधिकरण्येन सिद्धिः प्रतिबन्धिका इति एकः प्रतिबध्यप्रतिबन्धकभावः । अवच्छेदकावच्छेदेन अनुमितौ अवच्छेदकावच्छेदेन सिद्धिः प्रतिबन्धिकेति अपरः प्रतिबध्यप्रतिबन्धकभावः । तत्र

## गादाधरी

साधारण्येन तादृशप्रतिबन्धकतयैवोपपत्तिरिति; तदसत्, सामानाधिकरण्येनानुमिनुयामवच्छेदकावच्छेदेनानुमिनुयामित्याद्याकारकेच्छानां पृथगुत्तेजकताया वक्ष्यमाणतया पृथक्प्रतिबन्धकताकल्पनस्यावश्यकत्वात् ।

ननु सिद्धिदशायां पक्षतावच्छेदकावच्छेदेनानुमिनुयामित्याकारकसिषाधयिषासत्त्वे असति चावच्छेदकावच्छेदेन हेतुमत्तापरामर्शे सामानाधिकरण्यमात्रावगाहिपरामर्शात्तादृशानुमित्यापत्तिः, तथाविधसिषाधयिषासत्त्वेन पक्षतायाः अक्षतत्वादित्यत आह—इत्थं चेति । इत्थं च उक्तयुक्त्या पक्षतावच्छेदकावच्छिन्नत्वतत्सामानाधिकरण्य-

---

## भावबोधिनी

द्वितीये प्रतिबध्यतावच्छेदकं यत् पक्षतावच्छेदकावच्छिन्नत्वविशिष्टसंयोगादिपर्याप्तसंसर्गताकत्वम् तत् पक्षतावच्छेदकावच्छिन्नत्वातिरिक्तधर्मानवच्छिन्नसंयोगादिनिष्ठसंसर्गताकत्वरूपम् । तच्च अवच्छेदकावच्छेदेनानुमितिसामानाधिकरण्येनानुमित्युभयसाधारणम् । अवच्छेदकवच्छेदेनानुमितौ संयोगे पर्वतत्वावच्छिन्नत्वस्य विशेषणत्वेऽपि तदतिरिक्तधर्मस्य अविशेषणतया तदतिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वस्य सद्भावात् । सामानाधिकरण्येनानुमितौ शुद्धसंयोगस्य भानेऽपि पर्वतत्वावच्छिन्नत्वातिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वमक्षतम् । एवञ्च एकेनैव प्रतिबध्यप्रतिबन्धकभावेन अवच्छेदकावच्छेदेनानुमितिं सामानाधिकरण्येनानुमितिं च प्रति अवच्छेदकावच्छेदेन सिद्धेः प्रतिबन्धकत्वलाभः । तथा चात्र मते लाघवमिति । तस्या अपीति । अवच्छेदकावच्छेदेन सिद्धेरपीत्यर्थः । तन्मतं निराकरोति तदसदित्यादिना । सामानाधिकरण्येन सिद्धिसत्त्वे सामानाधिकरण्येन 'अनुमिनुयाम्' इत्याकारकेच्छासत्त्वे अनुमित्युत्पत्त्या तादृशेच्छाविरहविशिष्टायाः तादृशसिद्धेरेव प्रतिबन्धकत्वं वक्तव्यम् । एवं अवच्छेदकावच्छेदेन सिद्धिसत्त्वे अवच्छेदकावच्छेदेन अनुमिनुयाम् इति इच्छा-

दीधितिः

इत्थं च लिङ्गभेदन्यायोऽप्यनुसरणीय.। साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी; एवं च पक्षविशेष्यकसिद्ध्यनन्तरमपि साध्यविशेष्यकानुमितिर्जायते तुल्यन्यायात्। समानाकारकसिद्धेः प्रतिबन्धकत्वे पर्यवसानात्।

---

गादाधरी

मात्रावगाह्यनुमित्योः सिद्ध्योः पृथक् पृथक् प्रतिबन्धकत्वे च। लिङ्गभेदन्याय इति। यथा तत्तल्लिङ्गकानुमितौ सिद्धेः प्रतिबन्धकतायां तत्तल्लिङ्गकानुमितीच्छैवोत्तेजिका, न त्वन्यविधानुमितीच्छा, तथा पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिनीमनुमितिं प्रति सिद्धेः प्रतिबन्धकतायां तादृशानुमितीच्छैव उत्तेजिका, न त्वन्यविधानुमितीच्छा, इति स्वीकरणीयमिति नातिप्रसङ्ग इत्यर्थः। यदि पर्वते वह्निरित्याकारकसाध्यनिश्चयानन्तरं पर्वतो वह्निमानित्याद्याकारिकानुमितिर्जायते, तदा साध्यविशेष्यकानुमितौ साध्यविशेष्यकसिद्धेः प्रतिबन्धकत्वेऽपि सामान्यतः साध्यपक्षवैशिष्ट्यावगाह्यनुमितौ तादृश-

---

भावबोधिनी

सत्त्वे अनुमितेरुत्पत्त्या तादृशेच्छाविरहविशिष्टायाः तादृशसिद्धेः प्रतिबन्धकत्वं वक्तव्यम्। यदा तु अवच्छेदकावच्छेदेन अनुमितेः सामानाधिकरण्येनानुमितेश्च एकरूपेण अवच्छेदकावच्छेदेन सिद्धिप्रतिबध्यत्वम् उच्यते, तर्हि अवच्छेदकावच्छेदेनानुमितिं प्रति अवच्छेदकावच्छेदेन अनुमिनुयाम् इत्याकारकेच्छाविरहविशिष्टसिद्ध्यभावः कारणमिति कारणत्वकल्पने सामानाधिकरण्येन अनुमिनुयाम् इत्याकारकेच्छाविरह-

## गादाधरी

सिद्धित्वेन नैकं प्रतिबन्धकत्वं कल्पनीयम्, अपि तु विशिष्यैव प्रतिबन्धकताद्वयम्, अगत्या गौरवस्यादोषत्वादित्याशयेनाह– साध्यविशेष्यकेति। द्वयोस्समानविषयकत्वे विशेषणविशेष्यभावे वैपरीत्यमकिंचित्करमित्यभिप्रायेणानिर्भरसूचनाय प्रामाणिकान्ते- इत्युक्तम्। मणिकारस्य तु समानप्रकारकसिद्धेरेव प्रतिबन्धकत्वमनुमतम्। पृथिव्यामितरभेद इति साध्यविशेष्यकानुमित्यनन्तरं तदात्मकविशेषणज्ञानसहकृताद्व्यतिरेकिपरामर्शादेव पृथिवी इतरभिन्नेति पक्षविशेष्यकानुमितेरुत्पादस्य तेन व्यतिरेकिग्रन्थे वक्ष्यमाणत्वात्।

---

## भावबोधिनी

कालेऽपि तादृशकारणबलात् सामानाधिकरण्येनानुमित्यापत्तिः। तद्वारणाय सामानाधिकरण्येनानुमितिं प्रति सामानाधिकरण्येन इच्छाविरहविशिष्टसामानाधिकरण्येन सिद्ध्यभावः कारणम्। अवच्छेदकावच्छेदेनानुमितिं प्रति तादृशेच्छाविरहविशिष्टतादृशसिद्ध्यभावः कारणम् इति पृथक्पृथगेव कार्यकारणभावः प्रतिबध्यप्रतिबन्धकभावश्च कल्पनीय इति न लाघवावकाशः इति भावः।

ननु पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेनानुमिनुयामित्याकारकेच्छाविरहविशिष्टसिद्ध्यभावः कारणम् तत्सामानाधिकरण्येनानुमितिं प्रति पक्षतावच्छेदकसामानाधिकरण्येनानुमिनुयामित्याकारकेच्छाविरहविशिष्टसिद्ध्यभावः कारणम् इति पृथक् पृथक् कारणत्वं वक्तव्यम्। अन्यथा यत्र पक्षतावच्छेदकसामानाधिकरण्यमात्रेण हेत्ववगाही सिद्ध्यात्मकः परामर्शोऽस्ति पक्षतावच्छेदकावच्छेदेन साध्यमनुमिनुयामित्याकारकेच्छा च वर्तते, तत्र पक्षतावच्छेदकसामानाधिकरण्यमात्रेण साध्यावगाह्यनुमित्यापत्तिः, पक्षतावच्छेदकावच्छेदेनानुमिनुयामित्याकारकेच्छाविरहविशिष्टसिद्ध्यभावरूपपक्षताया अक्षतत्वादित्याशयेनाह दीधितौ–

गादाधरी

पक्षविशेष्यिकैवेति। तथा च विशिष्य प्रकारताविशेषं निवेश्यैव प्रतिबध्यप्रतिबन्धकभावः कल्पनीय इति भावः। तत्र तादृशानुमित्यभावस्य प्रामाणिकत्वे तु उभयविधज्ञानसाधारणपक्षसाध्यवैशिष्ट्यमात्रगाहिनिश्चयत्वस्यानतिप्रसक्तस्य सुवचत्वे उभयविधसिद्ध्योरनुगतरूपेणैव प्रतिबन्धकता; प्रतिबध्यतावच्छेदकं तु पक्षविशेष्यकसाध्यप्रकारकानुमितित्वादिकमेव, न त्वनुगतम्; पक्षविशेष्यकसाध्यप्रकारकानुमितिर्जायताम्, साध्यविशेष्यकपक्षप्रकारकानुमितिर्जायतामित्याकारिकयोरिच्छयोः पृथक्पृथगुत्तेजकत्वानुरोधात्।

---

भावबोधिनी

इत्थं चेति। गादाधर्यां–तादृशानुमित्यापत्तिरिति। सामानाधिकरण्यमात्रेण साध्यावगाह्यनुमित्यापत्तिरित्यर्थः। अनुमित्योरिति– सप्तमीद्विवचनान्तम्। अनुमिती प्रति इत्यर्थः। सिद्ध्योरिति षष्ठीद्विवचनान्तम्। तथेति। साध्यतावच्छेदकपर्याप्तविधेयतावच्छेदकताकपक्षोद्देश्यताकानुमितौ तादृशपक्षोद्देश्यकत्वावच्छिन्नविषयताकेच्छात्वेन, पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यतावच्छेदकपर्याप्तविधेयतावच्छेदकताकपक्षोद्देश्यकानुमितौ तादृशानुमितित्वेनोत्तेजकत्वमित्यर्थः। तदात्मकेति। अनुमित्यात्मकेत्यर्थः। साध्यनिष्ठप्रकारतानिरूपितपक्षनिष्ठविशेष्यताशाल्यनुमितिं प्रति साध्यनिष्ठप्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालिनिश्चयः प्रतिबन्धकः, पक्षनिष्ठप्रकारतानिरूपितसाध्यनिष्ठविशेष्यताशाल्यनुमितिं प्रति पक्षनिष्ठप्रकारतानिरूपितसाध्यनिष्ठविशेष्यताशालिनिश्चयः प्रतिबन्धक इति कल्पनीयमिति भावः।

तत्र तादृशानुमित्यभावस्येति। साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमित्यभावस्य प्रामाणिकत्व इत्यर्थः। सुवचत्व इति। पक्षसाध्यवैशिष्ट्यावगाहित्वं साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतासंबन्धानवच्छिन्नपक्षप्रकारताभिन्नप्रकृतपक्षविष-

## गादाधरी

एवञ्च—साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमित्युत्पत्तेः प्रामाणिकत्वे च तुल्यन्यायादिति। पर्यवसानादित्यस्य हेतुः। समानाकारकसिद्धेरिति। अन्यूनाकारकसिद्धेरित्यर्थः। पर्वतः सुन्दरवह्निमानित्यादिसिद्धिदशायामपि न्यूनविषयिण्याः पर्वतो वह्निमानित्याद्यनुमितेरनुत्पादादधिकविषयकसिद्धेरविरोधित्वे अवच्छेदकावच्छेदेन सिद्धेस्सामानाधिकरण्येनानुमितौ प्रतिबन्धकतालेखनस्यासङ्गतेः। अत एम जातिशक्तिवादे गोत्वत्वेन गोवृत्तित्वानुमानं सिद्धसाधनान्न सम्भवतीति अविशिष्टहेतुना विशिष्टसाध्यसाधन एव सिद्धसाधनानवकाशो न तु विशिष्टेनाविशिष्टसाधनेऽपीति जात्या व्यक्त्यनुमानपक्षमाक्षिप्य मिश्रा " अर्थापत्त्या वा तत्सिद्धि "रिति मूलमवतारयामासुः।

---

## भावबोधिनी

यतानिरूपितसाध्यतावच्छेदकसंबन्धानवच्छिन्नप्रकारतान्यसाध्यविषयताशालित्वे सति संशयान्यज्ञानत्वम्। तेन पर्वतवान् वह्निः, वह्नौ पर्वतः इति ज्ञानयोर्व्युदासः। विशेष्यतावच्छेदकविशेषणभावानापन्नविरोधविषयतानिरूपितसाध्यतदभावद्वयविषयताशून्यत्वं संशयान्यत्वम्। एवं पक्षांशेऽपि तदूह्यम्। साध्याभावप्रकारितानवच्छिन्नत्वं साध्यविषयतायां वा निवेश्यमिति कृष्णम्भट्टः।

पृथक्पृथगुत्तेजकत्वानुरोधादिति। अन्यथा सिद्धिकाले साध्यप्रकारकपक्षविशेष्यकानुमितिर्जायताम् इतीच्छासत्त्वे साध्यविशेष्यकपक्षप्रकारकानुमितिः, साध्यविशेष्यकपक्षप्रकारकानुमितिर्जायताम् इति इच्छासत्त्वे साध्यप्रकारकपक्षविशेष्यकानुमितिर्वा स्यादिति भावः।

समानाकारकसिद्धेरित्यस्य अन्यूनानतिरिक्ताकारकसिद्धेरित्यर्थं स्वरससिद्धं परित्यज्य अन्यूनाकारकसिद्धेरित्यर्थकथने बीजमाह-पर्वतः सुन्दरवह्निमानिति। पर्वतः सुन्दरवह्निमानिति निश्चयसत्त्वे पर्वतो वह्निमानित्यनुमितेरनुत्पत्त्या पर्वतो वह्निमा-

भावबोधिनी

मानित्यनुमितिं प्रति तादृशनिश्चयस्य प्रतिबन्धकत्वमिष्टम्। अनुमित्यविषयसुन्दरत्वविषयकस्योक्तनिश्चयस्य पर्वतो वह्निमानित्यनुमित्यनतिरिक्तविषयकत्वाभावात् प्रतिबन्धकत्वं न स्यादित्यालोच्य अन्यूनाकारकसिद्धेरिति व्याख्यानं कृतमिति भावः। एवं व्याख्याने उपष्टम्भकतया दीधितिग्रन्थं प्रदर्शयति-अधिकविषयकसिद्धेरिति। अवच्छेदकावच्छेदेन सिद्धेः पक्षतावच्छेदकव्यापकत्वरूपाधिकविषयतया तस्याः सामानाधिकरण्येनानुमितिविरोधित्वं वदतां दीधितिकाराणामधिकविषयकसिद्धेः प्रतिबन्धकत्वमिष्टमिति भावः। प्रतिबन्धकतालेखनस्येति। "तत्सामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रस्यैव विरोधित्वम्" इति दीधितिग्रन्थोऽत्र विवक्षितः।

अधिकविषयकसिद्धेरविरोधित्वे मिश्राणां ग्रन्थमपि प्रमाणयति- अत एवेति। पदानां जातौ शक्तिरिति मीमांसकमते व्यक्तेरनुमानेनार्थापत्त्या वा ज्ञानं इति वक्तव्यम्। तत्र गोत्वं गोवृत्ति गोत्वत्वादित्यनुमानाकारः। गोत्वत्वं च गवेतरवृत्तित्वविशिष्टनिखिलगोवृत्तित्वम्। गोत्वं गोवृत्तित्वव्याप्यगोत्वत्ववदिति परामर्शे पक्षे गोवृत्तित्ववत्त्वस्य भानात् साध्यनिश्चयो जात इति कथं गोत्वं गोवृत्ति इत्यनुमितिर्भवितुमर्हति, सिद्धेरनुमितिप्रतिबन्धकत्वादित्याशङ्क्य अर्थापत्त्या वा तत्सिद्धिरिति मणावुक्तम्। यदि अधिकविषयकसिद्धेर्नानुमितिप्रतिबन्धकत्वम्, तदा गवेतरावृत्तित्वरूपाधिकविषयकसिद्धेरप्रतिबन्धकतया अनुमितेः संभवात् अर्थापत्त्या वेति पक्षान्तरावतरणं न घटेत। तथा च अधिकविषयकसिद्धेरप्यनुमितिप्रतिबन्धकत्वं मिश्रसंमतमिति भावः। सिद्धसाधनानवकाश इति। न्यूनविषयकत्वादिति भावः। न तु विशिष्टेनेति। अन्यूनविषयकत्वादिति भावः। परामर्शद्वयस्येति। पक्षे साध्यव्याप्यमित्याकारकस्य, साध्यव्याप्यवान् पक्ष इत्याकारकस्य च परामर्शस्येत्यर्थः। अनुगतरूपेणेति। व्याप्यपक्षवैशिष्ट्यावगाहिज्ञानत्वेनेत्यर्थः। अप्रसिद्धसाध्यकस्थल इति। पृथिवी इतरभिन्ना इत्यादावित्यर्थः। तत्र पृथिवीतर-

## गादाधरी

ननु साध्यविशेष्यकानुमितिस्तावन्न सर्वत्रानुभवसिद्धा, पर्वतो वह्निमानित्याकारिकाया एवानुमितेरनुभवात् व्याप्यविशेष्यकपरामर्शादपि पक्षविशेष्यकानुमित्युत्पादस्य परामर्शद्वयस्यानुगतरूपेण हेतुतावादिनोपि सम्मतत्वात्; किंत्वप्रसिद्धसाध्यकस्थले विशेषणज्ञानादिविरहेण साध्यविशेषणकानुमितेरनुपपत्त्या साध्यविशेष्यकानुमितिरुपेयते, एवं च पक्षविशेष्यकसिद्धिदशायामपि तादृशानुमितेरप्रामाणिकतया तदनभ्युपगमे क्षतिविरह इति तां प्रति पक्षसाध्यवैशिष्ट्यावगाहिज्ञानत्वेनोभयसिद्धिसाधारण्येनापि प्रतिबन्ध-

---

## भावबोधिनी

भेदरूपस्य साध्यस्य पक्षादन्यत्र अप्रसिद्धत्वादित्यर्थः । विशेषणज्ञानादिविरहेणेति । विशेषणं-साध्यम । अनुमितेः साध्यरूपविशेषणविशिष्टपक्षविषयकतया विशिष्टबुद्धित्वात् विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया साध्याप्रसिद्धिस्थले साध्यरूपविशेषणज्ञानाभावेन साध्यवान् पक्ष इत्याकारकानुमितेरसंभवादिति भावः । विशेषणज्ञानादीत्यादिपदेन विशेषणतावच्छेदकप्रकारकज्ञानपरिग्रहः । साध्यविशेष्यकानुमितिरिति । पृथिव्यामितरभेद इत्याकारकानुमितिरित्यर्थः । तादृशानुमितेरिति । साध्यविशेष्यकानुमितेरित्यर्थः । तदनभ्युपगम इति । साध्यविशेष्यकानुमित्यनङ्गीकार इत्यर्थः । तां प्रतीति । साध्यविशेष्यकानुमितिं प्रतीत्यर्थः ।

उच्छृङ्खलेति । वह्निः इत्याकारकपक्षविशेषणतानापन्नतया साध्यविषयकनिश्चयदशायामित्यर्थः । तादृशानुमितिप्रतिबन्धकतायामिति । साध्यविशेष्यकानुमितिप्रतिबन्धकतायामित्यर्थः । पक्षादीत्यादिपदेन पक्षसाध्यसंबन्धो गृह्यते । साध्यतावच्छेदकप्रकारकत्वनिवेशप्रयोजनमाह-तेनेतरत्वेति । साध्यप्रसिद्धिरित्यस्य साध्यविषयकज्ञानमिति यथाश्रुतार्थस्वीकारे 'भेदः' इत्याकारकनिश्चयस्यापि भेदत्वेन रूपेण इतरभेदरूपसाध्यविषयकतया तस्य पृथिव्यामितरभेद इत्याकारकसाध्यविशेष्य-

## गादाधरी

कत्वं सम्भवतीत्यभिप्रेत्य मतान्तरमाह–तादृशानुमितिमिति । साध्यविशेष्यकानुमिति-मित्यर्थः । सिद्धिमात्रम्–साध्यविशेष्यिका पक्षविशेष्यिका च सिद्धिरित्यर्थः । ननु उच्छृङ्खलसाध्यज्ञानदशायामपि साध्यविशेष्यकानुमितिरप्रामाणिकी, तत्र साध्यविशेषणकानुमितेरेव सम्भवादिति तादृशानुमितिप्रतिबन्धकतायां पक्षादिविषयतायाः सिषाधयिषाविरहस्य निश्चयत्वस्य च निवेशनं गौरवायेत्यभिसन्धायाह–साध्यप्रसिद्धिरिति· साध्यतावच्छेदकप्रकारकज्ञानमित्यर्थः । तेनेतरत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती

---

## भावबोधिनी

कानुमितिप्रतिबन्धकत्वापत्त्या तादृशनिश्चयदशायां इतरत्वव्यापकीभूताभावप्रतियोगि-पृथिवीत्ववती पृथिवीत्याकारकपरामर्शात् पृथिव्यामितरभेद इत्याकारकानुमितिर्नोपपद्यते । साध्यतावच्छेदकप्रकारकनिश्चय इत्यर्थे तु इतरभेदत्वप्रकारकनिश्चय एव तादृशः न तु भेदत्वप्रकारकः । इतरभेदत्वप्रकारकनिश्चयस्तु नास्तीति नानुमित्यनुपपत्तिरिति भावः । परामर्शे पृथिवीतरभेदाभावत्वेन व्यापकत्वविशेषणतया साध्याभावस्य भानं न संभवति । पृथिवीतरभेदस्याप्रसिद्धेः । अतः पृथिवीतरत्वेन तस्य भानमित्याशयेन इतरत्वव्यापकीभूतेत्युक्तम् । न च तत्रेति । अप्रसिद्धसाध्यकस्थले साध्यविशेषणकानुमितिर्न संभवतीत्यर्थः ।

एतावता साध्यविशेष्यकानुमितिं प्रति साध्यतावच्छेदकप्रकारकनिश्चयः प्रतिबन्धक इत्यायातम् । इतरभेदत्वावच्छिन्नमुख्यविशेष्यकज्ञानत्वावच्छिन्नं प्रति इतरभेदत्वप्रकारकनिश्चयः प्रतिबन्धक इति यावत् । एवं सति इतरभेद इति निश्चयदशायां पृथिव्यामितरभेद इत्यनुमितिवत् इतरभेदः प्रमेय इत्यनुमितेरप्यनुपपत्तिः । तस्या अपीतरभेदत्वावच्छिन्नमुख्यविशेष्यकत्वेन प्रतिबध्यतावच्छेदकाक्रान्तत्वात् । तदर्थम् इतरभेदत्वावच्छिन्नमुख्यविशेष्यकत्वे सति इतरभेदत्वावच्छिन्नविधेयकज्ञानत्वम्

## गादाधरी

पृथिवीत्यादिपरामर्शाद्भेदत्वादिना साध्यज्ञानसत्त्वेऽपि पृथिव्यामितरभेद इत्याकारकानुमितेर्नानुपपत्तिः। न च तत्र पृथिवीतरभिन्नेत्येतादृशानुमितेस्संभवः, विशेषणतावच्छेदकीभूतेतरभेदत्वादिप्रकारकज्ञानविरहात्। अथेतरभेदत्वादिप्रकारकज्ञानस्य यदीतरभेदत्वाद्यवच्छिन्नमुख्यविशेष्यज्ञानत्वं प्रतिबध्यतावच्छेदकम्, तदा तथाविधज्ञानदशायामितरभेदत्वाद्यवच्छिन्नपक्षकप्रमेयत्वाद्यनुमितेरप्यनुपपत्तिः, तद्धर्मावच्छिन्नविधेयकत्वस्याधिकस्य निवेशेऽपीतरभेदः प्रमेयः पृथिवीतरभिन्नेत्यादिसमूहालम्बनानुमिते-

---

## भावबोधिनी

इतरभेदत्वप्रकारकज्ञानप्रतिबध्यतावच्छेदकमित्युच्यते चेत्, इतरभेद प्रमेयः, पृथिवी इतरभिन्नेत्याकारकसमूहालम्बनानुमितेरनुपपत्तिः; तस्या इतरभेदविशेष्यकत्वात् तद्विधेयकत्वाच्च। तद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नमुख्यविशेष्यताकत्वे सति तद्धर्मावच्छिन्नोद्देश्यतानिरूपिततद्धर्मावच्छिन्नविधेयताकत्वं तद्धर्मप्रकारकनिश्चयप्रतिबध्यतावच्छेदकं इति स्वीकारे यद्यप्युक्तदोषो न भवति। तद्धर्मपदेन प्रमेयत्वत्वस्य ग्रहणे तदवच्छिन्नप्रकारतानिरूपितेतरभेदत्वावच्छिन्नविशेष्यताकस्योक्तसमूहालम्बनस्य प्रमेयत्वत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताकत्वविरहात पृथिव्यामितरभेद इत्यनुमितेरेव प्रतिबध्यतावच्छेदकाक्रान्तता। पृथिवीत्वावच्छिन्नप्रकारतानिरूपितेतरभेदत्वावच्छिन्नमुख्यविशेष्यताकत्वात् पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताकत्वाच्च। तथापि गोत्वाभावत्वप्रकारकनिश्चयदशायां गोत्वाभावो गोत्वाभाववानित्याकारकानुमितेरनुपपत्तिः। तादृशानुमितेर्गोत्वाभावत्वावच्छिन्नप्रकारतानिरूपितगोत्वाभावत्वावच्छिन्नविशेष्यताकत्वात् गोत्वाभावत्वावच्छिन्नोद्देश्यतानिरूपितगोत्वाभावत्वावच्छिन्नविधेयताकत्वाच्च प्रतिबध्यतावच्छेदकाक्रान्तत्वादित्याशयेन अथेत्यादिः आक्षेपग्रन्थः प्रवृत्तः।

गादाधरी

गोत्वाभावो गोत्वाभाववानित्यनुमितेश्चानुपपत्तिः ।

अत्र केचित्;—पृथवीतरभिन्नेत्यादिसाध्यविशेषणकानुमितौ तथाविधप्रत्यक्षादि-साधारणी विशेष्यतावच्छेदकताभिन्नप्रकारतैव विधेयता, साध्यविशेष्यकानुमितौ च ततोन्या; तथा च प्रकारताभिन्नविधेयतैव साध्यप्रसिद्धिप्रतिबध्यतावच्छेदिकेति नानुपपत्तिरित्याहुः । तन्न; प्रकारताविशेषस्य विधेयतात्वोपगमे जलभेदे तेजोभेद

---

भावबोधिनी

अत्र केचिदिति । पृथिवी इतरभिन्नेत्याकारकसाध्यविशेषणकानुमितौ इतरभेद-निष्ठा या विधेयता सा पक्षतावच्छेदकताभिन्ना प्रकारता । पृथिवीत्वनिष्ठायाः पक्षतावच्छेदकतारूपायाः प्रकारतायाः विधेयतात्वव्यावृत्तये प्रकारतायां पक्षतावच्छेदकताभिन्नेति विशेषणम् । 'पृथिव्यामितरभेदः' इत्याकारकसाध्यविशेष्यकानुमितौ इतरभेदनिष्ठा या विधेयता सा प्रकारतारूपा न, किं तु ततो भिन्ना । तथा च प्रकारताभिन्नविधेयताशाल्यनुमितिं प्रति साध्यप्रसिद्धिः प्रतिबन्धिका । गोत्वाभावो गोत्वाभाववानित्यनुमितिनिरूपितगोत्वाभावनिष्ठविधेयतायाः प्रकारतारूपत्वात् न तस्याः गोत्वाभावत्वप्रकारकनिर्णयरूपसाध्यप्रसिद्धिप्रतिबध्यतावच्छेदकत्वम् । एवं इतरभेदः प्रमेयः, पृथिवीतरभिन्नेतिसमूहालम्बनानुमितिनिरूपितविधेयतायाः इतरभेदनिष्ठायाः प्रकारतारूपत्वात् न तस्याः इतरभेदत्वप्रकारकनिर्णयरूपसाध्य-प्रसिद्धिप्रतिबध्यतावच्छेदकत्वमिति भावः ।

इतरभेदवती पृथिवीत्यादौ इतरभेदमनुमिनोमीत्यनुव्यवसायवारणाय विशेष्यतावच्छेदकताभिन्नेति प्रकारताविशेषणमिति कृष्णम्भट्टः ।

केचिन्मतं दूषयति—तन्नेत्यादिना । यदि प्रकारताविशेष एव विधेयता,

## गादाधरी

इत्याकारकतेजोभेदादिसाध्यकानुमितेर्जलभेदविधेयकत्वापातात् । न चाधेयतासंबन्धावच्छिन्नप्रकारताव्यावृत्तं तदिति वाच्यम्; तथा सत्याधेयतासंबन्धेन जलभेदादिसाध्यकतादृशानुमितेरपि तद्विधेयकत्वानुपपत्तेः । यदि च यत्राधेयत्वं साध्यतावच्छेदकसंबन्धस्तत्र विधेयत्वमतिरिक्तमित्युच्यते; तदा तत्संबन्धेन जलभेदसाध्यकानुमितौ प्रकारताभिन्नविधेयताशालिन्यां साध्यप्रसिद्ध्यभावव्यभिचारो दुर्वारः ।

---

## भावबोधिनी

तदा जलभेदे तेजोभेदः इत्याकारकसाध्यविशेष्यकानुमितेः तेजोभेदविधेयिकायाः जलभेदविधेयकत्वापत्तिः । जलभेदे पक्षतावच्छेदकताभिन्नायाः प्रकारतायाः सत्त्वात् न चेष्टापत्तिः, जलभेदमनुमिनोमीत्यनुव्यवसायापत्तेः इति भावः । न चाधेयतासंबन्धेति । तथा चाधेयतासंबन्धावच्छिन्नप्रकारताभिन्ना प्रकारतैव विधेयतारूपा । जलभेदे तेजोभेद इत्यनुमितौ जलभेदस्य आधेयतासंबन्धेन प्रकारत्वात् आधेयतासंबन्धावच्छिन्नप्रकारताभिन्नप्रकारतायाः जलभेदेऽभावात् न तस्याः जलभेदविधेयकत्वमिति भावः । तदिति । विधेयत्वमित्यर्थः । तथा सतीति । यत्र आधेयतासंबन्धेन जलभेदः साध्यः तेजोभेदः पक्षः तत्र जलभेदे तेजोभेद इत्यनुमितेर्जलभेदविधेयकत्वानुपपत्तिः । जलभेदे आधेयतासंबन्धावच्छिन्नप्रकारताभिन्नप्रकारतायाः विरहात् इति भावः । तादृशानुमितेरिति । जलभेदे तेजोभेद इत्याकारकानुमितेरित्यर्थः ।

वस्तुतस्त्विति । पृथिव्यामितरभेद इत्याकारकानुमितेः इतरभेदत्वावच्छिन्नाप्रकारत्वात् इतरभेदत्वावच्छिन्नविधेयकत्वाच्च इतरभेदत्वप्रकारकज्ञानप्रतिबध्यतावच्छेदकत्वम् । तथा च इतरभेदत्वप्रकारकज्ञानसत्त्वे पृथिवी इतरभिन्नेत्याकारिका साध्यप्रकारिकैव अनुमितिर्जायते, न तु इतरभेदाप्रकारिका पृथिव्यामितरभेद इत्याकारिका । यत्र जलभेदत्वप्रकारकनिश्चयोऽस्ति तत्र जलभेदत्वावच्छिन्नप्रकारिका तेजोभेदो जल-

## गादाधरी

वस्तुतस्तु तद्धर्मावच्छिन्नाप्रकारकत्वे सति तद्धर्मावच्छिन्नविधेयकताकानुमितित्वमेव तद्धर्मप्रकारकज्ञानप्रतिबध्यतावच्छेदकम्; साध्यप्रसिद्धिस्थले च साध्यप्रकारिकैवानुमितिर्जायते, न तु तदप्रकारिकेति न तत्र व्यभिचारः।

अत एव- साध्यविशेष्यकानुमितौ साध्यप्रसिद्धः प्रतिबन्धकत्वादेव। प्रसिद्धसाध्यकस्थले-अभावरूपसाध्यप्रसिद्धिस्थले, न तु भावसाध्यकस्थल इत्यर्थः; तत्र परामर्शस्य नियमतः साध्यघटितव्याप्तिविषयकतया साध्यविशेष्यकानुमितेरप्रसिद्धया साध्यप्रसिद्धिप्रतिबन्धकतायाः कल्पयितुमशक्यत्वात् उपष्टम्भासङ्गतेः। स्वनिरूपित-

---

## भावबोधिनी

भिन्न इत्याकारैवानुमितिर्जायते न तु तेजोभेदे जलभेद इत्याकारेति न काप्यनुपपत्तिरिति भावः।

स्वनिरूपितेत्यादि। केवलभेदत्वप्रकारकज्ञानसत्त्वे इतरभेदविशेष्यकानुमित्युदयात् व्यभिचार इति पर्याप्तिनिवेशः। स्वनिरूपितप्रकारतानवच्छेदकत्वस्वनिरूपितविधेयतावच्छेदकतापर्याप्त्याश्रयत्वोभयसंबन्धेन अनुमितिं प्रति विषयतावच्छेदकतासंबन्धेन ज्ञानं प्रतिबन्धकमिति यावत्। इतरभेद इत्याकारकं ज्ञानं विषयतावच्छेदकतासंबन्धेन इतरभेदत्वे वर्तते। तत्र तादृशोभयसंबन्धेन पृथिव्यामितरभेद इत्याकारकानुमितिः न जायते। अत्र तत्कालीनत्व- तत्पुरुषीयत्वनिवेशनं, वृत्त्यनियामकसंबन्धावच्छिन्नप्रतिबध्यतादिस्वीकारः स्वत्वस्य संबन्धाघटकत्वेऽप्रसिद्धिः, तद्घटकत्वेऽननुगमश्चेत्याशयेन आपातत इत्युक्तम्। अप्रयोजकत्वादिति। अप्रसिद्धस्यापादयितुमशक्यतया तत्साधारणप्रतिबन्धकताया अकिंचित्करत्वादिति भावः।

यत्तु यत्रेति। यत्र वह्नित्वेन महानसीयवह्निमात्रविषयकः वह्निव्याप्यधूम-

### दीधितिः

अत एव प्रसिद्धसाध्यकस्थले पक्षविशेष्यिकैवानुमितिरनुभूयत इति।

---

### गादाधरी

प्रकारतानवच्छेदकत्वविशिष्टविधेयतावच्छेदकतापर्याप्त्याश्रयत्वरूपविषयनिष्ठप्रत्यासत्त्या अनुमितिं प्रति विषयतावच्छेदकतासंबन्धेन ज्ञानस्य सर्वसाधारण्येन प्रतिबन्धकताया आपातत उक्तिसम्भवेऽपि साध्याघटितव्यतिरेकव्याप्तिविषयकपरामर्शघटितसामग्र्या एव साध्यविशेष्यकानुमित्युत्पादप्रयोजकतायाः क्लृप्तत्वात्, भावसाध्यकस्थले साध्यविशेष्यकानुमितेरप्रसिद्ध्या साध्यविशेषणकानुमितेः साध्यविशेष्यकत्वे तादृशप्रतिबन्धकतायाः अप्रयोजकत्वादुपष्टम्भासङ्गतितादवस्थ्यात्।

---

### भावबोधिनी

वान् पर्वत इत्याकारकः परामर्शः तत्र धूमस्य पर्वतवृत्तित्वज्ञानबलात् पर्वते वह्नित्वेन पर्वतीयवह्निर्भासमान; पर्वते वह्निरित्येवं विशेष्यतयैव भासते, न तु पर्वतो वह्निमानित्येवं विशेषणतया। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेन पूर्वं पर्वतीयवह्निरूपविशेषणज्ञानविरहात्। तथा च भावसाध्यकस्थलेऽपि साध्यविशेष्यकानुमितेः प्रसिद्ध्या तत्र साध्यप्रसिद्धेः प्रतिबन्धकतायाः कल्पयितुं शक्यतया अत एवेत्युपष्टम्भसंगतेः प्रसिद्धसाध्यकस्थले इत्यस्य भावाभावसाधारणतया व्याख्यानमुचितमिति भावः। तत्तुच्छमिति। फलबलकल्प्यत्वादिति। तथा चान्योन्याश्रय इति भावः। सामान्यलक्षणाया अनङ्गीकारेऽप्याह—विशिष्टविशेषणकबुद्धाविति। पर्वतो वह्निमानिति बुद्धिः वह्नित्वविशिष्टपर्वतीयवह्निविशेषणकबुद्धिः। तां प्रति विशेषणज्ञानं न कारणम्। किन्तु विशेषणतावच्छेदकप्रकारकज्ञानमेव कारणम्।

## गादाधरी

यत्तु यत्र महानसीयवह्निमात्रविषयकः परामर्शः तत्र पक्षधर्मताबलात्पर्वते पर्वतीयवह्निर्भासमानो विशेषणज्ञानविरहेण विशेष्यतयैव भासत इति भावसाध्यकस्थलेपि साध्यविशेष्यकानुमितिसम्भव इति; तत्तुच्छम्, सामान्यलक्षणायाः प्रत्यासत्तित्वमते महानसीयवह्निविषयकपरामर्शे पर्वतीयवह्न्यभानप्रयोजकस्य दुर्लभत्वात्, न च स्मरणात्मकपरामर्शे कदाचिदुद्बोधकविरहात्तदभानसंभवः, उद्बोधकस्य फलबलकल्प्यत्वात्। विशिष्टविशेषणबुद्धौ विशेषणज्ञानहेतुताया निर्युक्तिकत्वात् विशेषणतावच्छेदकप्रकारकज्ञानस्य चाक्षतत्वात्पर्वतीयवह्न्यविषयकपरामर्शादपि वह्नित्वेन तद्वह्निविशेषणकानुमितिसम्भवाच्च।

---

## भावबोधिनी

तत्तु वह्नित्वेन महानसीयवह्निविषयके परामर्शे सत्यप्यक्षतमेव। परामर्शे वह्नित्वस्य प्रकारतया भानात्। तथा च तादृशपरामर्शादपि पर्वतो वह्निमानिति वह्नित्वेन पर्वतीयवह्निविशेषणकानुमितिसंभवात् साध्यविशेष्यकानुमितेरप्रसिद्ध्या साध्यप्रसिद्धिप्रतिबन्धकताया भावसाध्यकस्थले कल्पयितुमशक्यतया उपष्टम्भासंगतेः अभावरूपसाध्यप्रसिद्धिस्थले इति व्याख्यानमेवोचितमिति भावः।

इदानीं साध्यप्रसिद्धिप्रतिबन्धकतां दूषयति—इदमत्रावधेयमिति। साध्यविशेष्यकानुमितिं प्रति साध्यप्रसिद्धेः प्रतिबन्धकत्वे यत्र साध्यतावच्छेदकप्रकारकनिर्णयरूपा साध्यप्रसिद्धिरस्ति साध्यविशेष्यकानुमितिर्जायतामितीच्छा चास्ति तत्र साध्यविशेष्यकानुमितिर्न स्यात्। अतः साध्यविशेष्यकानुमितिर्जायतामित्याकारकेच्छाविरहविशिष्टसाध्यप्रसिद्धेः साध्यविशेष्यकानुमितिप्रतिबन्धकत्वं वक्तव्यम्। न च तत्र साध्यविशेषणकानुमितिरेव जायत इति वाच्यम्। पक्षविशेष्यकसिद्धिरूपसाध्यप्रसिद्धिसत्त्वे पक्षविशेष्यकसाध्यविशेषणकानुमितेरसंभवात्। तथा च तत्र

## गादाधरी

इदमत्रावधेयम् । साध्यप्रसिद्धिप्रतिबन्धकतायामपि साध्यविशेष्यकानुमितित्व-प्रकारकेच्छाया उत्तेजकत्वमावश्यकम्; अन्यथा पक्षविशेष्यकसिद्धिदशायां तादृशेच्छा-सत्त्वे साध्यविशेष्यकानुमित्यपलापापत्तेः । सिद्ध्यसमवहितसाध्यप्रसिद्धिदशायां साध्य-विशेषणकानुमितेस्सम्भवेन तत एवोद्देश्यसंशयनिवृत्त्यादिसंभवे साध्यविशेष्यकानुमित्यनुप-गमोऽपि न क्षतिकर इत्यभिप्रेत्यैव साध्यप्रसिद्धेस्तद्विरोधित्वमुररीकृतं ग्रन्थकृता । प्रकृते च साध्यविशेषणकानुमित्युत्पादासम्भवेन तादृशानुमित्यपलापानौचित्यात् । तथा च यत्र

---

## भावबोधिनी

जायमानायाः साध्यविशेष्यकानुमितेरपलापायोगात् । इत्थं च यत्र सिद्ध्यनात्मिका साध्यप्रसिद्धिरस्ति, अनुमित्सा चास्ति व्यतिरेकपरामर्शश्च वर्तते तत्र साध्यविशेष्यिका साध्यविशेषणिका चानुमितिः प्रसज्यते । तत्र साध्यप्रसिद्धिरूपविशेषणज्ञानं साध्य-विशेषणकानुमितेः प्रसञ्जकम् । अनुमित्सा साध्यविशेष्यकानुमितेः प्रसञ्जिका । न चेष्टापत्तिः, एकविधात् परामर्शात् द्विविधानुमितेरनुभवविरुद्धत्वात् । तस्मात् साध्यप्रसिद्धेः साध्यविशेष्यकानुमितिप्रतिबन्धकत्वं दुर्वचम् । न च दीधितिकारैः तस्याः प्रतिबन्धकत्वं कुत उक्तमिति वाच्यम् । यत्र सिद्ध्यनात्मिका साध्य-प्रसिद्धिर्वर्तते तत्र साध्यविशेषणकानुमितिः सिद्धिरूपप्रतिबन्धकविरहात् विशेषण-ज्ञानवशाच्च भवितुमर्हति । तत एव चानुमितिफलभूतः संशयनिवृत्त्यादिः संभवति । एवं च तत्र साध्यविशेष्यकानुमितिर्न जायत इत्याशयेन साध्यप्रसिद्धेः साध्यविशेष्य-कानुमितिप्रतिबन्धकत्वकथनात् इति ग्रन्थकार्थः । सिद्ध्यसमवहितेति । पक्षः साध्य-वानित्येवंरूपा न भवति या साध्यप्रसिद्धिः वह्निरित्याद्याकारकनिर्णयः तद्दशाया-मित्यर्थः । सिद्ध्यसमवहितेत्युक्तेः साध्यविशेषणकानुमितिसंभवाय । अन्यथा साध्यविशेषणकानुमितीच्छाविरहविशिष्टसाध्यविशेषणकसिद्धिरूपप्रतिबन्धकसद्भावेन सा

गादाधरी

सिद्ध्यसमवहिता साध्यप्रसिद्धिरथ चानुमित्सा तत्र व्यतिरेकिपरामर्शात् साध्यविशेष्यिका तद्विशेषणिका चानुमितिरापद्यते। नह्येकविधादेव परामर्शादेकदा द्विविधानुमितिरानुभाविकी, तस्माद्व्यतिरेकिपरामर्शात्साध्यप्रसिद्धिदशायामपि साध्यविशेष्यिकाया एवानुमितेः स्वीकारस्समुचितः; सिद्धिप्रतिबन्धकत्वापेक्षया साध्यप्रसिद्धिप्रतिबन्धकतायामवच्छेदकलाघवमकिंचित्करमेव। व्यतिरेकिपरामर्शात्—क्वचित्साध्यविशेषणकानुमितिस्वीकारे तादृशानुमितिं प्रति व्यतिरेकिलिङ्गकत्वान्वयिलिङ्गकत्वप्रकारकानुमित्सां पृथगुत्तेजकीकृत्य सिद्धेः प्रतिबन्धकताद्वयेनैव गौरवात्।

---

भावबोधिनी

न स्यात्। तादृशानुमितीति। साध्यविशेष्यकानुमितीत्यर्थः। तस्मादिति। साध्यप्रसिद्धिप्रतिबन्धकताया दुर्वचत्वादित्यर्थः। व्यतिरेकिपरामर्शादिति। साध्यघटितव्यतिरेकव्याप्त्यवगाहिपरामर्शात् इतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्याकारकादित्यर्थः। तेन साध्यघटितव्यतिरेकव्याप्त्यवगाहिपरामर्शात् पर्वते वह्निरित्याकारकानुमितेः नापत्तिः। व्यतिरेकिपरामर्शात् साध्यप्रसिद्धिस्थले साध्यविशेषणकानुमितेः स्वीकारे व्यतिरेकिपरामर्शजन्यानुमितिर्जायताम् अन्वयिपरामर्शजन्यानुमितिर्जायतामितीच्छयोः पृथगुत्तेजकतानुसारेण सिद्धेः प्रतिबन्धकताद्वयमिति गौरवं च स्यादिति भावः। सिद्ध्यसमवहितसाध्यप्रसिद्धिस्थले अदोषादुक्तं सिद्धेरिति। साध्यप्रकारकानुमितौ व्यतिरेकिलिङ्गकानुमित्साविरहविशिष्टसाध्यप्रसिद्धित्वेन प्रतिबन्धकत्वे तादृशानुमित्साविरहदशायां साध्यप्रसिद्धिसत्त्वे साध्यप्रकारकानुमितिर्न स्यादित्यतः सिद्धिपर्यन्तानुधावनम्।

येषां मते साध्यविशेष्यिका नानुमितिस्तन्मतमाह—परे त्विति। यादृशीति। तथा च तदनुमितेर्यथा साध्यप्रतियोगिकत्वविशिष्टस्वरूपसंबन्धावच्छिन्नविषयता तथैव शुद्धस्वरूपसंबन्धावच्छिन्नविषयतापि स्वीक्रियत इत्यर्थः।

## गादाधरी

परे तु — अप्रसिद्धसाध्यस्थलेऽपि साध्यविशेषणिकैवानुमितिर्जायते; इतरभेदत्वादिरूपविशेषणतावच्छेदकप्रकारकज्ञानविरहेऽपि 'विशष्ये विशेषणं तत्र च विशेषणान्तर' मिति न्यायेनैव पृथिवी इतरभिन्नेत्याद्यनुमितिसम्भवात्। न च लाघवानवकाशः, तादृशानुमितिं प्रत्येव साध्यप्रसिद्धिप्रतिबन्धकताया अवश्यकल्पनीयत्वादिति वाच्यम्; तथाविधानुमितौ यादृशी विषयता तस्याः साध्यप्रसिद्धिकालीनविशिष्टवैशिष्ट्यावगाह्यनुमितिसाधारण्योपगमात्; साध्यविशेष्यकानुमित्यनुपगमे साध्यप्रसिद्धि-

---

## भावबोधिनी

अयमत्र परे तु मतसारार्थः—इतरभेदादिरूपाप्रसिद्धसाध्यकस्थलेऽपि साध्यविशेषणिकैवानुमितिर्जायते। न च साध्यविशेषणकानुमितेः साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहितया तां प्रति साध्यतावच्छेदकरूपविशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वात् इतरभेदत्वप्रकारकज्ञानं विना कथमितरभेदविशेषणिका पृथिवी इतरभिन्नेत्याकारिकानुमितिर्भवेदिति वाच्यम्। विशेष्ये विशेषणं तत्र च विशेषणान्तरमितिन्यायेन इतरभेदत्वप्रकारकज्ञानाभावेऽपि इतरभेदविशेषणकानुमितेः तत्र संभवात्। विशिष्टवैशिष्ट्यावगाहिमर्यादया जायमानायामनुमितावेव विशेषणतावच्छेदकप्रकारकज्ञानस्यापेक्षितत्वात्। न च साध्यविशेष्यकानुमितिस्थलामिषिक्तां तादृशानुमितिं प्रत्येव साध्यप्रसिद्धेः प्रतिबन्धकतायाः कल्पनीयत्वात् किमत्र पक्षे लाघवमिति शङ्कनीयम्। विशेष्ये विशेषणमितिरीत्या जायमानायां पृथिवी इतरभिन्नेत्यनुमितौ यादृशी शुद्धस्वरूपसंबन्धावच्छिन्ना विषयता तस्याः साध्यप्रसिद्धिकालीनायां विशिष्टवैशिष्ट्यावगाहिन्यामनुमितावपि स्वीकारात् तादृशविषयताशालिविशिष्टवैशिष्ट्यावगाह्यनुमितौ यथा न साध्यप्रसिद्धेः प्रतिबन्धकत्वम्, तथा तच्छालिन्यां विशेष्ये विशेषणमिति रीत्या जायमानायामनुमितावपि साध्यप्रसिद्धेर्न प्रतिबन्धकत्वकल्पनमिति लाघवसद्भावात्। न च पक्षः साध्यवानिति सिद्धिकाले

गादाधरी

प्रतिबन्धकताया एवाकल्पनात्। न च सिद्धिकाले तथाविधानुमितिवारणाय तत्र सिद्धेः साध्यप्रसिद्धेर्वा प्रतिबन्धकत्वकल्पनाधिक्यमावश्यकमिति वाच्यम्; विशिष्टवैशिष्ट्यानुमितिस्थलीयसिद्धिप्रतिबन्धकतयैवोपपत्तेः, इतरभेदत्वादिना इतरभेदादिविधेयकानुमितित्वस्य तत्स्थलीयप्रतिबध्यतावच्छेदकस्योभयसाधारणत्वादिति।

यत्तु विशिष्टवैशिष्ट्यानुमितौ विशिष्टवैशिष्ट्यावगाहिनी सिद्धिरेव विरोधिनी, न तु केवलं 'विशेष्ये विशेषण' मितिरीत्या जायमानापि सा तथा;

---

भावबोधिनी

विशेष्ये विशेषणमिति रीत्या साध्यविशेषणकानुमितेर्वारणाय सिद्धेः साध्यप्रसिद्धेर्वा प्रतिबन्धकत्वमवश्यं कल्पनीयमिति गौरवमिति वाच्यम्। सिद्धिकाले विशिष्टवैशिष्ट्यावगाह्यनुमितेर्वारणाय तादृशानुमितिं प्रति सिद्धेः प्रतिबन्धकत्वेऽवश्यकल्पनीये इतरभेदत्वावच्छिन्नेतरभेदविधेयकानुमितित्वावच्छिन्नं प्रति सिद्धेः प्रतिबन्धकत्वं कल्प्यते। प्रतिबध्यतावच्छेदकस्य इतरभेदत्वावच्छिन्नेतरभेदविधेयकानुमितित्वस्य च विशेष्ये विशेषणमिति रीत्या जायमानायामनुमितावपि सत्त्वेन तां प्रति पृथक्प्रतिबन्धकत्वाकल्पनेन लाघवात् इति।

पक्षादिविषयतायाः अप्रवेशेन लाघवात् साध्यप्रसिद्धेर्वेत्युक्तम्। यत्तु विशिष्टेत्यादि। विशिष्टप्रतियोगिकत्वविशिष्टसंसर्गावच्छिन्नविषयताकानुमितिः विशिष्टवैशिष्ट्यानुमितिः तां प्रति विशिष्टवैशिष्ट्यावगाहिनी = विशिष्टप्रतियोगिकत्वविशिष्टसंसर्गावच्छिन्नविषयताशालिनी सिद्धिरेव, प्रतिबन्धिका न तु विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति रीत्या जायमाना सिद्धिः। तस्याः संसर्गांशे विशिष्टप्रतियोगिकत्वानवगाहनेन अनुमितौ च तदवगाहनेन अनुमित्यपेक्षया न्यूनविषयकत्वात्। अनुमित्यन्यूनविषयकसिद्धेरेवानुमितिप्रतिबन्धकत्वात्। एवं च विशेष्ये विशेषणमिति

## गादाधरी

तस्यास्संसर्गांशे विशिष्टनिरूपितत्वानवगाहितया न्यूनविषयकत्वात्। एवं च केवलं 'विशेष्ये विशेषण'मिति न्यायेनानुमितेरुपगमे तादृशसिद्धिदशायां तस्या वारणाय तत्र तादृशसिद्धेर्विरोधित्वकल्पनाधिक्यमावश्यकमेवेति किमपराद्धं साध्यविशेष्यकानुमितिस्वीकारेण विशिष्टवैशिष्ट्यानवगाहिसाध्यविशेषणकानुमितेरनभ्युपगमेन ? प्रतिबध्यप्रतिबन्धकभावसाम्यादिति; तदपि तुच्छम्; विशिष्टनिरूपितवैशिष्ट्यज्ञानमात्रविरोधिबाधादिकाले केवलं 'विशेष्ये विशेषणं' मिति न्यायेनानुमितेस्सर्वसम्मत-

---

## भावबोधिनी

रीत्याप्यनुमितिर्यद्यङ्गीक्रियते तदा विशेष्ये विशेषणमिति रीत्या सिद्धिदशायां तादृशानुमितिवारणाय तां प्रति तादृशसिद्धेः प्रतिबन्धकत्वं पृथक् कल्पनीयमिति अस्मिन्मतेऽपि गौरवम्। एवं च प्रतिबध्यप्रतिबन्धकभावसाम्ये सति अप्रसिद्धसाध्यकस्थले साध्यविशेष्यकानुमितिरेव स्वीक्रियताम्। किमिति विशेष्ये विशेषणमिति न्यायेन साध्यविशेषणकानुमितिस्वीकारेणेति यत्तुकाराभिप्रायः।

केवलमिति। शुद्धसंसर्गानवच्छिन्नप्रकारताकेत्यर्थः। सा तथेति। सिद्धिविरोधिनीत्यर्थः। तस्याः = विशेष्ये विशेषणमिति रीत्या जायमानायाः सिद्धेः। तादृशसिद्धिदशायाम् = विशेष्ये विशेषणमिति न्यायेन सिद्धिदशायाम्। तस्याः विशेष्ये विशेषणमिति न्यायेनानुमितेः। विशिष्टवैशिष्ट्यानवगाहीत्यनेन स्वमते तृतीयप्रतिबन्धकताकल्पनाधिक्यं नास्तीत्यावेद्यते।

तदपि तुच्छमित्यादिखण्डनग्रन्थस्यायं सारांशः-विशेष्ये विशेषणमिति न्यायेनानुमितिरवश्यमङ्गीकरणीया। विशिष्टप्रतियोगिकत्वविशिष्टसंसर्गावच्छिन्नप्रतियोगिताकाभाववत्ताग्रहरूपबाधनिश्चयकाले विशिष्टवैशिष्ट्यज्ञानस्यानुदयेऽपि विशेष्ये विशे-

## गादाधरी

तया तादृशसिद्धेः प्रतिबन्धकताया आवश्यकत्वेन साध्यविशेष्यकानुमितितिस्वीकर्तुरधिकप्रतिबन्धकताकल्पनस्य दुर्वारत्वादिति ।

यदि च विशिष्टप्रतियोगिकविलक्षणवैशिष्ट्यानवगाहिन्यपि विशिष्टविशेषणकज्ञाने विशिष्टविशेषणज्ञानमपेक्षितम्; तदा तुल्ययुक्त्या विशिष्टविशेष्यकज्ञानेऽपि विशिष्टविशेषणज्ञानहेतुतया साध्यतावच्छेदकविशिष्टविशेष्यकानुमितिरपि अप्रसिद्धसाध्यकस्थले न संभवति । न च विशेष्यज्ञानस्य विशिष्टबुद्धावहेतुतया तद्विशेषस्यापि

---

## भावबोधिनी

षणमिति न्यायेनानुमितिर्जायत इति सर्वसंमतत्वात् । तथा च तथाविधानुमितिं प्रति विशेष्ये विशेषणमितिन्यायेन जायमानायाः सिद्धेः प्रतिबन्धकत्वमावश्यकमेव साध्यविशेष्यकानुमितेः स्वीकारे तां प्रति साध्यप्रसिद्धेः प्रतिबन्धकत्वमधिकं कल्पनीयमिति गौरवम् इति ।

यदि चेत्यादि । इतरभेदत्वविशिष्टविशेषणकं ज्ञानं विशिष्टवैशिष्ट्यावगाहि, वा भवतु तदनवगाहि विशेष्ये विशेषणमिति रीत्या वा भवतु, उभयत्र विशिष्टविशेषणविषयकं ज्ञानमपेक्षितम् । विशेषणतावच्छेदकप्रकारकं ज्ञानमपेक्षितमिति यावत् । तद्विना विशेष्ये विशेषणमिति न्यायेनापि पृथिवी इतरभिन्नेत्यनुमितिर्न भवत्येव इति यद्युच्यते, तदा तुल्ययुक्त्या विशिष्टविशेष्यकज्ञानेऽपि विशिष्टविशेष्यज्ञानं नाम विशेष्यतावच्छेदकप्रकारकं ज्ञानमपेक्षितम् । तथा च इतरभेदत्वप्रकारकज्ञानं विना पृथिव्यामितरभेद इत्याकारिका साध्यविशेष्यिका अनुमितिरपि न स्यात् इति भावः । विशिष्टप्रतियोगिकविलक्षणवैशिष्ट्येति । विशिष्टप्रतियोगिकत्वविशिष्टसंसर्गे स्वापर्याप्तविषयतापर्याप्त्यधिकरणतत्कत्वं वैलक्ष्यण्यम् ।

## गादाधरी

न तद्विशेषहेतुतेति वाच्यम्; सामान्यप्रत्यासत्तिजन्यज्ञाने व्यभिचारेण सामान्यहेतुत्वासम्भवेऽपि तुल्यरूपोभयविशेषणावगाहिज्ञानस्यान्यकविशिष्टे अपरविशेषणकत्ववारणाय विशेषहेतुताया आवश्यकत्वात्। अन्यथा विशेषणज्ञानस्यापि विशिष्टबुद्धिहेतुताया उच्छेदात्। अत एव विशिष्टवाक्यार्थविशेष्यकशाब्दबोधे अवान्तरवाक्यार्थज्ञानापेक्षा। न च साध्यविशेष्यकानुमितौ तुल्यरूपयोरेव पक्षविधेयतावच्छेदकयोस्सा-

---

## भावबोधिनी

न च विशेष्यज्ञानस्येति।विशिष्टबुद्धौ विशेषणज्ञानमेव हेतुः न तु विशेष्यज्ञानम्। तथा च विशिष्टविशेष्यकज्ञानरूपे विशिष्टबुद्धिविशेषे विशिष्टविशेष्यज्ञानरूपस्य विशेष्यज्ञानविशेषस्य न कारणत्वम्। अतः विशेष्यतावच्छेदकप्रकारकज्ञानं विनापि साध्यविशेष्यकानुमितिर्भवितुमर्हतीति शङ्कितुराशयः। सामान्यप्रत्यासत्तीति। यत्र सामान्यलक्षणप्रत्यासत्त्या विशिष्टबुद्धिर्जायते यथा इन्द्रियसंयुक्तघटविशेष्यकज्ञानप्रकारीभूतघटत्वेन सन्निकर्षेण घटा इत्याकारकघटत्वविशिष्टनिखिलघटबुद्धिः तत्र पूर्वं विशेष्याणां घटानां ज्ञानं विनापि तस्या उत्पत्त्या व्यतिरेकव्यभिचारेण विशेष्यज्ञानस्य विशिष्टबुद्धावहेतुत्वेऽपि यत्र तुल्यरूपतया = परस्परधर्मितावच्छेदकत्वविशेषणत्वरहिततया विशेषणद्वयावगाहिनी विशिष्टबुद्धिर्जायते नीलसुन्दर इत्यादौ तत्र विशिष्टबुद्धेः एकविशिष्टे अपरविशेषणकत्ववारणाय विशिष्टबुद्धौ विशेष्यज्ञानस्य हेतुत्वमावश्यकमिति विशिष्टविशेष्यकज्ञाने विशिष्टविशेष्यज्ञानस्य हेतुत्वमावश्यकमिति विशेष्यतावच्छेदकप्रकारकज्ञानमन्तरा साध्यविशेष्यकानुमितिर्न भवितुमर्हतीति समाधातुराशयः। अन्यथेति। सामान्यहेतुताविरहमात्रेण विशेषहेतुताविरहोपगम इत्यर्थः। उच्छेदादिति। विशेषणतावच्छेदकप्रकारकनिर्णयस्थले विशेषणज्ञानत्वेनान्यथासिद्धत्वेनाहेतुत्वापातादिति भावः।

### दीधितिः

अत्र च व्याप्तिस्मरणादिना पूर्वानुमित्सानाशे परामर्शकाले च सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैव अनुमितिः, तथैव कारणीभूतस्य विशिष्टाभावस्य संपत्तेरित्युपाध्यायाः ।

---

### गादाधरी

ध्यांश प्रकारता, नत्वेकविशिष्यांशे अपरस्येति न विशिष्टज्ञानापेक्षेति वाच्यम्; निर्विशेष्यतावच्छेदकानुमितेरनुभवविरुद्धत्वात् प्रत्यक्षस्य च निर्धर्मितावच्छेदकस्याभ्युपगमात्, प्राथमिकाभावप्रत्यक्षे प्रतियोग्यधिकरणयोरभावविशेषणतया भानोपपत्तिः । तथा च साध्यविशेष्यकानुमितिर्निर्युक्तिकैवेति वदन्ति ।

---

### भावबोधिनी

अत एवेति । विशिष्टविशेष्यकज्ञाने विशिष्टविशेष्यकज्ञानस्य हेतुत्वादेवेत्यर्थः । राज्ञः पुरुषः सुन्दर इत्यत्र राजनिरूपितस्वत्ववान् पुरुषः इति राज्ञः पुरुषः इति वाक्यस्यार्थः । तादृशपुरुषः सुन्दराभिन्न इति महावाक्यार्थः । राजनिरूपितस्वत्ववत्पुरुषविशेष्यकसुन्दराभेदविषयकमहावाक्यार्थबोधे राजनिरूपितस्वत्ववत्पुरुषरूपावन्तवाक्यार्थविषयकज्ञानस्य विशिष्टविशेष्यकबोधे विशिष्टविशेष्यज्ञानविधया हेतुत्वमित्याशयः ।

न च साध्यविशेष्यकेति । पृथिव्यामितरभेद इति साध्यविशेष्यकानुमितौ पृथिव्याः इतरभेदत्वस्य च द्वयोरितरभेदे विशेषणतया भानम् । न तु इतरभेदत्वविशिष्टे पृथिव्यास्तथा भानम् । तथा च तस्या अनुमितेः विशिष्टविशेष्यकत्वाभावात् विशिष्टविशेष्यज्ञानापेक्षा नास्ति इति भावः । निर्विशेष्यतावच्छेदकेति । पृथिव्याः इतरभेदत्वस्य च इतरभेदे प्रकारतया भाने तयोर्विशेष्यतावच्छेदकस्यान्यस्य

गादाधरी

अथ जलत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्यादिपरामर्शा-द्भेदत्वादिरूपविशेषणज्ञानं विना स्वरूपतस्तत्प्रकारिकायाः पृथिव्यां जलभेद इत्या-द्याकारिकाया अनुमितेरेव कथमुत्पत्तिरिति चेन्न; कथंचितत्र जलीयत्वादिमात्रपुर-स्कारेणैवाभावानुमित्युपगमादिति कृतं पल्लवितेन ।

ननु सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वेपि "सन्देहवत्परा-मर्शपूर्वमित्यादिग्रन्थेन सिषाधयिषापक्षतापक्षोक्तस्य व्यभिचारस्य सिद्धिकालीनानु-

---

भावबोधिनी

धर्मस्याभानात् सानुमितिर्निर्विशेष्यतावच्छेदकिका इति वाच्यम् । तथाविधानुमिति-श्चानुभवविरुद्धेत्याशयः । नन्वेवं प्राथमिकाभावप्रत्यक्षं न स्यात्, अभावस्य विशेषणत्वे विशेषणतावच्छेदकप्रकारकनिर्णयमुद्रया विशेष्यत्वे च विशेष्यतावच्छेदक-प्रकारकनिर्णयमुद्रया ग्रहस्यापेक्षणादित्यत आह—प्रत्यक्षस्य चेति । एवं चाप्रसिद्ध-साध्यकस्थलेऽपि साध्यविशेषणिकैवानुमितिरिति साध्यविशेष्यकानुमितिर्निर्युक्तिकेति परेतुकारमतमुपसंहरति—तथा चेति ।

व्यतिरेकग्रन्थे व्यापकीयत्वेनाभावज्ञानरूपसामग्र्यन्तरवशात् व्याप्यीयत्वेन सिद्धेर्वक्ष्यमाणतया भेदात्मकविशेषणज्ञानस्थले विशेष्ये विशेषणमिति रीत्या अनु-मित्युत्पत्त्यसंभवः । विशेष्यज्ञानस्यानपेक्षया च साध्यविशेष्यिकायास्तस्या निर्बाध एवोपगम इत्यस्वरसो वदन्तीत्यनेन सूचितः इति कृष्णंभट्टः ।

अत्र च व्याप्तिस्मरणादिनेति । सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता इति मणिग्रन्थे स्थितस्य सिषाधयिषापदस्यार्थः सिद्धिपदस्यार्थश्च एतावता ग्रन्थेन निरूपितः । तत्र विशिष्टसिद्ध्यभावस्य पक्षतात्वस्वीकारेऽपि यत्र आदौ अनु-मित्सा ततः व्याप्तिस्मरणम्, ततः लिङ्गदर्शनम्, ततः सिद्ध्यात्मकपरामर्शः

गादाधरी

मितिस्थले तादवस्थ्यम्, सिषाधयिषानाशे विशिष्टप्रतिबन्धकस्यानुमित्यव्यवहित-प्राक्क्षणे अक्षतत्वादित्याक्षेपे यज्ञपतिसमाधानमाह–अत्रचेति। "व्याप्तिस्मरणादी" त्यादिना अनुमित्साद्वितीयक्षणे यत्र पक्षधर्मताज्ञानं तत्स्थलीयतादृशज्ञान-परिग्रहः। पूर्वेति। व्याप्तिस्मरणादिपूर्वकालीनेत्यर्थः। परामर्शदशायामसत्यां सिद्धौ विशेष्याभावादेव विशिष्टाभावनिर्वाहेण नानुमित्यनुपपत्तिः, अतः "परामर्श-काले च सिद्धिसत्त्व" इति। अनुमित्सान्तरेति। परामर्शद्वितीयक्षणे तदव्यव-

---

भावबोधिनी

ततोऽनुमितिः तत्र अनुमितेः पूर्वक्षणे अनुमित्साविरहस्य सिद्धेश्च सत्त्वात् अनु-मित्साविरहविशिष्टसिद्ध्यभावरूपपक्षता नास्ति, अतः पक्षतां विना अनुमित्युत्पत्त्या व्यतिरेकव्यभिचारः प्रसज्यते। यथा वा साध्यसन्देहस्य सिषाधयिषाया वा पक्ष-तात्वे यत्रादौ साध्यसन्देहः सिषाधयिषा वा ततः लिङ्गदर्शनम्, ततः व्याप्तिस्मरणं ततः परामर्शः ततोऽनुमितिः तत्र लिङ्गदर्शनेन साध्यसन्देहस्य सिषाधयिषायाश्च नाशात् अनुमित्यव्यवहितपूर्वक्षणे साध्यसन्देहस्य सिषाधयिषायाश्च अभावात् व्यतिरेक-व्यभिचारः इति दूषणमुक्तम्, तद्दूषणं सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वेऽपि समानमिति आक्षेपः।

तत्र यज्ञपत्युपाध्यायाः एवं समाधानं वदन्ति–यत् उक्तस्थले परामर्शपूर्व-क्षणे परामर्शानन्तरक्षणे वा अनुमित्सान्तरं उत्पद्यते तदनन्तरमेव अनुमितिः इति स्वीक्रियते। तथा च तत्रापि अनुमित्साविरहरूपविशेषणाभावात् विशिष्टाभावरूपा पक्षता वर्तते, अतो न व्यतिरेकव्यभिचार इति। गादाधर्यां सन्देहवदिति। ,सन्देहवत् परामर्शपूर्वं सिषाधयिषाया अपि अभावात्' इति मणिग्रन्थः सिषा-

## गादाधरी

हितप्राक्क्षणे वेत्यादिः। तदुत्पत्तिप्रकारश्चाधस्ताद्दर्शितः। एवं च सिषाधयिषापक्षतापक्षः "सिषाधयिषाविरहेपी" त्यादिदोषादेव हेय इति भावः।

ननु सर्वत्र पुनरनुमित्सोत्पत्तौ मानाभाव इत्यत आह–तथैवेति। अनुमित्सान्तरोत्पत्त्यैवेत्यर्थः। कारणीभूतस्येति। तथा च तादृशविशिष्टाभावात्मककारणं विना अनुमित्यनुपपत्तेरेव सिद्धिस्थलीयविशिष्टाभावनिर्वाहकानुमित्सान्तरोत्पत्तौ मानमिति भावः। एतन्मत एव दीधितिकृतो निर्भरः, मिश्रादिमतस्य गौरवकवलितत्वादिति ध्येयम्।

---

## भावबोधिनी

धयिषापक्षतादूषणप्रकरणस्थः अत्र अनुसन्धेयः। व्यभिचारस्येति। व्यतिरेकव्यभिचारस्येत्यर्थः। सिद्धिकालीनानुमितिस्थल इति। यत्र अनुमित्सा–व्याप्तिस्मरण–लिङ्गदर्शन–सिद्ध्यात्मकपरामर्शानुमितयः क्रमेण भवन्ति तत्रेत्यर्थः। व्यभिचारतादवस्थ्यमुपपादयति – सिषाधयिषानाश इति। विशिष्टप्रतिबन्धकस्येति। सिषाधयिषाविरहविशिष्टसिद्धिरूपस्य प्रतिबन्धकस्येत्यर्थः। व्याप्तिस्मरणादीत्यादिनेति। यत्रानुमित्सापक्षधर्मताज्ञानव्याप्तिस्मरणसिद्ध्यात्मकपरामर्शानुमितयः क्रमेण भवन्ति, तत्र पक्षधर्मताज्ञानेन अनुमित्सायाः नाशात् अनुमितिप्राक्क्षणे पक्षता नास्तीति भावः। तत्स्थलीयतादृशज्ञानपरिग्रह इति। तादृशज्ञानं पक्षताधर्मताज्ञानम्।

ननु परामर्शपूर्वक्षणे वा तदुत्तरक्षणे वा अनुमित्सायाः कथमुत्पत्तिः। अनुमित्सां प्रति अनुमितिविशेष्यकेष्टसाधनत्वप्रकारकज्ञानस्य कारणत्वेन तत्र तद्विरहात् इत्यत आह–तदुत्पत्तिप्रकारश्चेति। अधस्ताद्दर्शित इति। 'अनुमितीष्टसाधनताविषयक–तादृशस्मरणाद्वा अनुमित्सा' इति दीधितिग्रन्थेन दर्शित इत्यर्थः।

## गादाधरी

मिश्रमतमाह–अन्येत्विति । द्वित्रिक्षणान्तरितायामपीति । द्विक्षणव्यवहितायां क्षणत्रयव्यवहितायां चेत्यर्थः । अनुमित्सायाम्–अनुमित्सोत्पत्तौ । तेनैकक्षणान्तरितायामप्यनुमित्सायां यत्रानुमितिस्तत्राप्यनुपपत्तिसत्त्वेन तदनभिधाने न्यूनता । एवं प्रथमकल्पे सिषाधयिषोत्पत्तिक्षणमारभ्य क्षणचतुष्टयात्मककालस्यैव विवक्षणीयतया त्रिक्षणान्तरितानुमित्सास्थले अनुमित्यनिर्वाहश्चेति दूषणद्वयानवकाशः । अनुमितिदर्शनात्–अनुमित्सोत्पत्तेश्चतुर्थक्षणे पञ्चमक्षणे वानुमितिदर्शनादित्यर्थः । वाच्या

---

## भावबोधिनी

तथा च परामर्शपूर्वक्षणे अनुमित्सान्तरोत्पत्तिपक्षे तत्पूर्वकालीनस्य व्याप्तिस्मरणस्य पक्षधर्मताज्ञानस्य वा अनुमितीष्टसाधनताविषयकसमूहालम्बनरूपत्वम् आश्रयणीयम् । परामर्शद्वितीयक्षणे अनुमित्सान्तरोत्पत्तिपक्षे परामर्शस्य अनुमितीष्टसाधनताविषयकसमूहालम्बनरूपत्वं आश्रयणीयमिति भावः ।

ननु विशिष्टसिद्ध्यभावस्य पक्षतात्वे प्रसक्तस्य व्यतिरेकव्यभिचारस्य अनुमित्सान्तरोत्पत्त्या अनुमित्युत्पत्तिं स्वीकृत्य वारणं क्रियते चेत् सिषाधयिषायाः पक्षतात्वेऽपि प्रसक्तस्य व्यतिरेकव्यभिचारस्य सिषाधयिषान्तरोत्पत्त्या वारणसंभवात् सिषाधयिषापक्षतापक्षः कुतः परित्याज्यः इत्यत्राह–एवञ्चेति । उक्तरीत्या प्रसक्तस्य व्यतिरेकव्यभिचारस्य वारणेऽपि 'सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात्' इति मणिग्रन्थेन प्रदर्शितः व्यतिरेकव्यभिचारः सिषाधयिषापक्षतापक्षे दुरुद्धर इति स पक्षस्त्याज्यः इति भावः ।

ननु उक्ताक्षेपे उपाध्यायानां मिश्राणां सार्वभौमानां च समाधनानि दीधितौ दितानि । तत्र अनुदीधितिकारसंमतं समाधानं किमित्यत्राह–एतन्मत एवेति ।

दीधितिः

अन्ये तु द्वित्रिक्षणान्तरितायामप्यनुमित्सायामनुमितिदर्शनात् अनुमित्सायोग्यता वाच्या । सा च स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनुत्पादः । अनुमित्सोत्तरं अन्तरानुमित्यनुत्पादे दिव-

---

भावबोधिनी

सार्वभौममतस्य दूषयिष्यमाणत्वात् मिश्रमतस्य गौरवग्रस्तत्वाच्च उपाध्यायमत एव दीधितिकृतां आदर इति भावः ।

पूर्वोक्ताक्षेपे मिश्राणां समाधानं अनुवदति दीधितौ—अन्ये तु इत्यादिना । यत्र अनुमित्सालिङ्गदर्शनव्याप्तिस्मरणसिद्ध्यात्मकपरामर्शानुमितयः क्रमेण भवन्ति' यत्र वा अनुमित्साव्याप्तिस्मरणलिङ्गदर्शनसिद्ध्यात्मकपरामर्शानुमितयः क्रमेण भवन्ति, तत्रोभयत्रापि पक्षतानिर्वाहार्थम्, यत्र च आदौ अनुमित्सा ततः लिङ्गदर्शनव्याप्तिस्मरणे युगपत् ततः सिद्ध्यात्मकपरामर्शः ततोऽनुमितिः तत्र पक्षतानिर्वाहार्थं च पक्षताशरीरप्रविष्टसिषाधयिषापदेन सिषाधयिषायोग्यता विवक्षणीया । तथा च सिषाधयिषायोग्यताविरहविशिष्टसिद्ध्यभावः पक्षता । उक्तस्थलेषु अनुमितेः पूर्वं सिषाधयिषायोग्यता वर्तते । अतः सिषाधयिषाविरहरूपविशेषणस्याभावात् विशिष्टाभावरूपा पक्षता निर्वहति । अनुमित्सोत्पत्तेः पञ्चमक्षणे अनुमित्युत्पत्तिस्थले अनुमित्सोत्पत्तेः अनुमितेश्च क्षणत्रयव्यवधानम् । अनुमित्सोत्पत्तेः चतुर्थक्षणे अनुमित्युत्पत्तिस्थले तयोः क्षणद्वयव्यवधानम् इति तेषामाशयः । अनुमित्सायामित्यस्य 'अनुमित्सोत्पत्तौ' इति व्याख्यानकरणे बीजमाह गादाधर्याम्—तेनेति । 'द्वित्रिक्षणान्तरितायामपि अनुमित्सायाम्' इति दीधितिग्रन्थे अनुमित्सायाः अनुमितेश्च द्विक्षणव्यवधानस्थले त्रिक्षणव्यवधानस्थले च पक्षतायाः अनिर्वाहः यदभिप्रेतः स्यात् अनुमित्सायाः अनुमितेश्च एकक्षणव्यवधानस्थले विद्यमानस्य

गादाधरी

सिषाधयिषापदेन विवक्षणीया। सा च-योग्यता च। स्वोत्पत्त्यनन्तरमिति। स्वप्रागभावोत्तरमित्यर्थः, स्वस्य उत्पत्तिर्यस्मादिति व्युत्पत्त्या स्वोत्पत्तिपदस्य सिषाधयिषाप्रागभावपरत्वात्। अन्यथा सिषाधयिषोत्पत्तिकाले योग्यतानुत्पत्त्या द्वितीयक्षणे अनुमितेरनिर्वाहात्। सिद्ध्यनुत्पादश्च सिद्धिप्रागभावः। तथा च स्वप्रागभावध्वंसविशिष्टस्वविषयसिद्धिप्रागभाव एवानुमित्सायोग्यतेति पर्यवसितम। अनुमित्सापूर्वं तद्विषयीभूतसिद्ध्यनन्तरञ्चानुमितिवारणाय दलद्वयोपादानम्। न चानागतानां

---

भावबोधिनी

पक्षताया अनिर्वाहस्य अकथनेन न्यूनता स्यात्। तथा हि—यत्र प्रथमक्षणेऽनुमित्सा, द्वितीयक्षणे लिङ्गदर्शनव्याप्तिस्मरणे, तृतीयक्षणे सिद्ध्यात्मकपरामर्शः, चतुर्थक्षणेऽनुमितिः तत्र अनुमित्सायाः द्विक्षणस्थायिन्याः अनुमितेश्च मध्ये एकेनैव क्षणेन व्यवधानमस्ति, न तु क्षणद्वयेन क्षणत्रयेण वा। एवं परस्तात् सिषाधयिषायोग्यताया द्वेधा निर्वचनावसरे प्रथमपक्षे सिषाधयिषोत्पत्तिक्षणमारभ्य क्षणचतुष्टयात्मकः कालः सिषाधयिषायोग्यता इति वक्ष्यते। तत्पक्षे अनुमित्सोत्पत्तिषष्ठक्षणे यत्रानुमितिः तत्र-अनुमित्सा-लिङ्गदर्शन-व्याप्तिस्मरण-सिद्धि-परामर्शानुमितीनां क्रमेणोत्पत्तिस्थले द्विक्षणस्थायिन्या अनुमित्सायाः अनुमितेश्च क्षणत्रयव्यवधानसत्त्वात् तादृशस्थलस्यापि सङ्ग्रहापत्त्या तत्र-क्षणचतुष्टयात्मककालरूपयोग्यताया विरहात् योग्यताविवक्षणेऽपि अनुमित्यनुपपत्तिः इति दूषणद्वयं प्रसज्यते। तद्वारणार्थं अनुमित्सापदस्य अनुमित्सोत्पत्तिपरत्वमाश्रितम्। यत्र अनुमित्सोत्पत्तिचतुर्थक्षणेऽनुमितिः तत्र-अनुमित्सा-लिङ्गदर्शनव्याप्तिस्मरणे-सिद्ध्यात्मकपरामर्शः-अनुमितिः इति स्थले अनुमित्सोत्पत्तेः अनुमितेश्च क्षणद्वयव्यवधानमस्तीति तत्स्थलस्य सङ्ग्रहात् न न्यूनता। परन्तु अनुमित्सोत्पत्तेः षष्ठक्षणे यत्रानुमितिः तत्स्थलस्य सङ्ग्रहो न

**गादाधरी**

यावदनुमितीनामेवानुमित्साविषयत्वसम्भवात्; स्वविषयीभूतैकानुमितावुत्पन्नायामपि भाविव्यक्त्यन्तरप्रागभावमादाय योग्यताप्रसङ्ग इति वाच्यम्; स्वविषयसिद्धित्वावच्छिन्नप्रागभावस्य विवक्षितत्वात्। अत एव स्वविषयेत्युक्तम्। यत्किञ्चिद्विशेष-

---

**भावबोधिनी**

भवति। तत्र हि अनुमित्सोत्पत्तेः अनुमितेश्च क्षणचतुष्टयव्यवधानमस्ति। अतः एतन्मते तादृशस्थलासङ्ग्रह इष्ट एवेति भावः।

दीधितौ सा च न स्वोत्पत्त्यनन्तरं इत्यादिग्रन्थेन स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनुत्पादः सिषाधयिषायोग्यता इति पक्षः निरस्यते। स्वोत्पत्त्यनन्तरं सिषाधयिषोत्पत्त्यनन्तरम् सिषाधयिषाविषयभूता या सिद्धिः—अनुमितिः तस्याः अनुत्पादः। तथा च सिषाधयिषोत्पत्त्यनन्तरकालिकः सिषाधयिषाविषयीभूतायाः अनुमितेः प्रागभावः सिषाधयिषायोग्यता इति लभ्यते। एवञ्च सति यत्र आदौ सिद्ध्यात्मकपरामर्शः ततः सिषाधयिषा ततोऽनुमितिः तत्र सिषाधयिषायोग्यता न निर्वहति। सिषाधयिषोत्पत्त्यनन्तरकालिकत्वविशिष्टस्य अनुमितिप्रागभावस्य सिषाधयिषोत्पत्तिकालेऽसंभवात्। तथा च सिषाधयिषोत्पत्तिकाले योग्यताविरहविशिष्टसिद्धेरेव सत्त्वेन तदभावरूपपक्षतायाः अनिर्वाह इत्यतः स्वोत्पत्त्यनन्तरमित्यस्य स्वप्रागभावोत्तरमिति व्याख्यानं कृतम्। स्वस्य उत्पत्तिः यस्मात् सः स्वोत्पत्तिः इति बहुव्रीह्याश्रयणेन स्वोत्पत्तिशब्दः स्वप्रागभावपरः। तथा च स्वोत्पत्त्यनन्तरमित्यस्य स्वप्रागभावध्वंसविशिष्ट इत्यर्थः। स्वविषयसिद्ध्यनुत्पादः इत्यस्य सिषाधयिषाविषयसिद्धिप्रागभाव इत्यर्थः। एवञ्च सिषाधयिषाप्रागभावध्वंसविशिष्टः सिषाधयिषाविषयीभूतानुमितिप्रागभावः सिषाधयिषायोग्यता। तादृशयोग्यताविरहविशिष्टसिद्ध्यभावः पक्षता इति पर्यवसितम्।

## भावबोधिनी

यत्र सिद्ध्यात्मकपरामर्शसिषाधयिषानुमितीनां क्रमेणोत्पत्तिः तत्र सिषाधयिषोत्पत्तिकाले सिषाधयिषाप्रागभावध्वंसस्य अनुमितिप्रागभावस्य च सत्त्वात् अनुमित्सायोग्यतायाः निर्वाहः। स्वविषयानुमितिप्रागभावः योग्यता इत्येतावन्मात्रोक्तौ अनुमित्सापूर्वक्षणेऽपि अनुमित्यापत्तिः। अनुमितिप्रागभावरूपयोग्यतायाः सत्त्वात्। अतः अनुमित्साप्रागभावध्वंसस्य योग्यताशरीरे प्रवेशः। अनुमित्साप्रागभावध्वंसमात्रं यदि योग्यता स्यात् तर्हि अनुमित्यनन्तरक्षणेऽपि अनुमित्यापत्तिः। अनुमित्साप्रागभावध्वंसस्य अनुमितिक्षणे सद्भावात्। अतः अनुमितिप्रागभावस्य निवेशः। तदाह—अनुमित्सापूर्वमिति। स्वप्रागभावध्वंसविशिष्टत्वस्वविषयसिद्धित्वावच्छिन्नप्रतियोगिताकत्वोभयसंबन्धेन इच्छाविशिष्टप्रागभावः योग्यतेति अनुगमः बोध्यः। ध्वंसविशिष्टत्वं सामानाधिकरण्यसंबन्धेन। न चानागतानामिति। तथा चानुमित्साविषयभूतसिद्धिपदेन भाविकालिकानुमितीनां ग्रहणे तत्प्रागभावस्य अनुमित्साविषयीभूतायामेकस्यामनुमितावुत्पन्नायामपि सत्त्वेन स्वविषयसिद्धिप्रागभावरूपयोग्यतासत्त्वात् अनुमित्यनन्तरमप्यनुमित्यापत्तिरिति शङ्का। स्वविषयसिद्धित्वावच्छिन्नप्रागभावोऽत्र विवक्षितः। आगमिष्यदनुमितिरूपसिद्धिप्रागभावसत्त्वेऽप्युत्पन्नानुमितेः सिद्धिसामान्यान्तर्गतायाः प्रागभावविरहात् नानुमित्यनन्तरमनुमित्यापत्तिरिति समाधानम्। अत एवेति। वक्ष्यमाणदोषादित्यर्थः। सिद्धौ स्वविषयेति विशेषणमनुपादाय सिद्धिसामान्यप्रागभावनिवेशे यद्यपि अनुमित्यनन्तरक्षणेऽनुमितिर्वारयितुं शक्यते, सिद्धिसामान्यान्तर्गतोत्पन्नानुमितिप्रागभावरूपयोग्यताविरहात् तथापि यत्किंचिद्विशेषध्वंसवति काले सामान्यधर्मावच्छिन्नप्रागभावो न संभवति, न हि यत्किंचिद्घटध्वंसवति काले घटत्वावच्छिन्नप्रागभावसंभवः, यत्किंचिद्घटस्यापि घटसामान्यान्तर्गततया तद्ध्वंसानन्तरं तत्प्रागभावासंभवात्। एवं च सर्वदैव यत्किंचिदनुमितिध्वंससत्त्वेन सिद्धित्वावच्छिन्नप्रागभावः कदापि न संभवतीति दोषः

## दीधितिः

सादिविलम्बेनेन्द्रियादिना निर्णीतेपि साध्ये लिङ्गपरामर्शादिनानुमितिप्रसङ्गात् । किंत्वनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः ।

---

## गादाधरी

ध्वंसवति काले सामान्यधर्मावच्छिन्नप्रागभावासम्भवेपि सिद्धित्वावच्छिन्नप्रागभावस्य कदाप्यसत्त्वात् । सामान्यधर्मस्य प्रागभावप्रतियोगितावच्छेदकत्वानङ्गीकारे पुनः स्वविषयसिद्ध्यसमानकालीनत्वमेव प्रागभावविशेषणं देयम् । वह्न्यनुमिति र्घटानुमितिश्च जायतामित्यादीच्छानन्तरं घटाद्यनुमित्यादिरूपविषयसिद्धावपि वह्न्यनुमित्युत्पत्त्या सिद्धीति प्रकृतसाध्यपक्षवैशिष्ट्यावगाहिनिश्चयार्थकम् । अनुमित्सोत्तरं दिवसादिविलम्बेनानुमितिप्रसङ्गादित्यन्वयः । अन्तरानुमित्युत्पादे स्वविषयसिद्धित्वावच्छिन्न-

---

## भावबोधिनी

स्यात् । तद्वारणाय सिद्धौ स्वविषयेति विशेषणम् । तस्मिन् दत्ते च स्वविषयीभूतानुमितिध्वंसवति स्वविषयीभूतानुमितिप्रागभावस्य संभवात् योग्यताया निर्वाह इत्याशयः ।

नन्वत्यन्तान्योन्याभावयोरेव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं न ध्वंसप्रागभावयोरिति व्यधिकरणग्रन्थे निरूपितत्वात् सिद्धित्वावच्छिन्नप्रागभाव इति निवेशः न संभवति । तथा च स्वविषयीभूतैकानुमितावुत्पन्नायामपि भाविन्यक्त्यन्तरप्रागभावमादाय योग्यताप्रसङ्ग गत्यत आह—सामान्यधर्मस्येति । तथा च स्वविषयसिद्ध्यसमानकालीनः स्वविषयसिद्धिप्रागभावः योग्यताशरीरे प्रवेश्यः । स्वविषयीभूतैकानुमित्युत्पत्तिकाले च विद्यमानः भाव्यनुमितिप्रागभावः स्वविषयानु-

## गादाधरी

प्रागभावासत्त्वेन योग्यताक्षतेर्नापत्तिसम्भव इत्यतः अन्तरानुमित्यनुत्पाद इति। द्वित्रिक्षणादिविलम्बेनानुमितेरिष्टत्वात् दिवसादिविलम्बेनेति। सिद्ध्यसत्त्वे अनुमितेरिष्टत्वात् इन्द्रियादिना निर्णीत इति। लिङ्गेन निर्णीते साध्ये अनुमित्साविषयसिद्ध्युत्पाद एवेत्यन्तरानुमित्यनुत्पाद एव न सम्भवतीत्यत इन्द्रियादिनेति। आदिना शब्दादिपरिग्रहः। अनुमित्सेति। अनुमित्सोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षणमारभ्य क्रमेण पक्षविषयकलिङ्गज्ञानव्याप्तिस्मरणयोरुत्पत्तौ सत्यां उत्सर्गतो यावता कालेन

---

## भावबोधिनी

मितिसमानकालिक इति तदसमानकालिकस्य अनुमितिप्रागभावस्याभावात् नानुमित्यनन्तरमनुमित्यापत्तिरिति भावः।

ननु अनुमित्साप्रागभावध्वंसविशिष्टः अनुमित्साविषयसिद्धिप्रागभावः योग्यतेत्युक्तावपि यत्र सिद्ध्यात्मकपरामर्शानन्तरं 'वह्न्यनुमितिः घटानुमितिश्च जायताम्' इति समूहालम्बनेच्छा तदनन्तरं घटानुमितिः तदनन्तरं वह्न्यनुमितिश्च तत्र अनुमित्साविषयीभूतघटानुमितिरूपसिद्धिकाले अनुमित्साविषयसिद्धिप्रागभावः नास्तीति अनुमित्सायोग्यताविरहात् कथं वह्न्यनुमितेर्निर्वाहः इत्यत आह—वह्न्यनुमितिः घटानुमितिश्चेति। तथा च सिद्धिपदं प्रकृतसाध्यपक्षवैशिष्ट्यावगाहिनिश्चयार्थकम्। उक्तानुमित्साविषयभूतायाः घटानुमितेः प्रकृतपक्षसाध्यवैशिष्ट्यावगाहित्वाभावात् अनुमित्साविषयभूतसिद्धिपदेन घटानुमितिः प्रहीतुं न शक्यते; किं तु 'पर्वतो वह्निमान्' इत्यनुमितिरेव। तत्प्रागभावस्य घटानुमितिकाले सत्त्वात् अनुमित्सायोग्यतायाः निर्वाहः। दीधितौ—अनुमित्सानन्तरं इत्यादि। स्वप्रागभावध्वंसविशिष्टस्वविषयसिद्धिप्रागभावः अनुमित्सायोग्यता इति विवक्षणे यत्र

## गादाधरी

परामर्शोत्पत्तिःअनुमित्सोत्पत्तिक्षणमारभ्य तत्क्षणपर्यन्तं यावन्तः क्षणाः यो वा तावदधिकक्षणानवस्थायिस्थूलकालस्तत्तत्समुदाय एव वेत्यर्थः । एवं च क्षणचतुष्टयं तदधिकक्षणानवस्थायिस्थूलसमयाश्च योग्यतेति पर्यवसितम् । तदनुगमश्च स्वप्रागभावानधिकरणत्वस्वनाशाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वोभयसंबन्धेन सिषाधयिषावत्कालत्वेन, न त्वननुगतेन तत्तत्कालत्वेन गौरवात् । तत्तत्कालोत्तेजकत्वापेक्षया तत्तत्सिद्धिव्यक्तिभेदानामेव निवेशनौचित्यात् । योग्यताया उत्तेजकत्वकल्पेपि वक्ष्य-

---

## भावबोधिनी

एकस्मिन् दिने 'पर्वते वह्निमनुमिनुयाम्' इत्याकारकानुमित्सानन्तरं मध्ये अनुमित्युत्पत्तिं विना दिनान्तरे इन्द्रियादिजन्यवह्निनिश्चये सति 'वह्निव्याप्यधूमवान्' इत्याकारकपरामर्शात् 'पर्वतो वह्निमान्' इत्यनुमितिप्रसङ्गः । परामर्शक्षणे पूर्वदिनोत्पन्नानुमित्साप्रागभावध्वंसविशिष्टस्य तादृशानुमित्साविषयीभूतानुमितिप्रागभावस्य सद्भावात् अनुमित्सायोग्यतासत्त्वेन अनुमित्सायोग्यताविरहविशिष्टसिद्ध्यभावरूपपक्षतायाः अक्षतत्वात् इति भावः ।

मध्ये यद्यनुमितिः उत्पद्यते तर्हि दिनान्तरे स्वविषयसिद्धित्वावच्छिन्नप्रागभावः न निर्वहति इत्याशयेन अन्तरा अनुमित्यनुत्पादे इत्युक्तम् । तत्रैव द्वित्रिक्षणविलम्बेन अनुमितेरिष्टत्वात् दिवसादिविलम्बेन अनुमितिप्रसङ्गादित्युक्तम् । दिनान्तरे सिद्धेरसत्त्वे अनुमितेः इष्टत्वात् निर्णीतेऽपि साध्ये इत्युक्तम् । तेन साध्यनिश्चयरूपसिद्धिदशायां अनुमित्यापादनं लभ्यते । तत्तु अनिष्टम् । तत्रैव लिङ्गेन यदि साध्यनिश्चयः स्यात् तदनन्तरं च अनुमितेरापादनं क्रियते तर्हि आपाद्यमानानुमितेः अनुमित्सायाश्च मध्ये अनुमित्यनुत्पादः न संभवति । लिङ्गजन्यस्य साध्यनिश्च-

## भावबोधिनी

यस्य अनुमितिरूपत्वात् इत्यतः इन्द्रियादिना निर्णीतेत्युक्तम्। आदिपदेन शब्दः गृह्यते। तथा च इन्द्रियेण शब्देन वा साध्यनिश्चयानन्तरं दिनान्तरीयानुमित्सा-बलात् अनुमित्यापत्तिः इति भावः।

गादाधर्याम्– अनुमित्साधिकरणक्षणाव्यवहितोत्तरक्षण इत्यादि। अनुमित्सा-नन्तरमिति दीधितेः अनुमित्साधिकरणक्षणाव्यवहितोत्तरक्षण इत्यर्थः। तथा च यत्र आदौ अनुमित्सा तदनन्तरक्षणे 'पर्वतो धूमवान्' इति लिङ्गदर्शनम्, तद-नन्तरं 'धूमो वह्निव्याप्य' इति व्याप्तिस्मरणम् तदनन्तरं 'पर्वतो वह्निव्याप्य-धूमवान्, वह्निमांश्च' इति सिद्ध्यात्मकपरामर्शः यस्मिन् क्षणे जायते, अनुमित्सो-त्पत्तिक्षणमारभ्य परामर्शोत्पत्तिक्षणपर्यन्तं यावन्तःक्षणाः सन्ति, ते चत्वारः क्षणाः अनुमित्सायोग्यता। अथ वा अनुमित्सोत्पत्तिक्षणमारभ्य परामर्शोत्पत्तिक्षणपर्यन्तस्थायी स्थूलकालः अनुमित्सायोग्यता। तादृशयोग्यताविरहविशिष्टसिद्ध्यभावः पक्षता इति पर्यवसितम्। तदनुगमश्चेति। निरुक्तयोग्यताया अनुगम इत्यर्थः। तथा च स्वप्रागभावानधिकरणत्व-स्वनाशाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वोभय-संबन्धेन सिषाधयिषाविरहविशिष्टकालः सिषाधयिषायोग्यता। स्वपदं सिषाधयि-षापरम्। सिषाधयिषालिङ्गदर्शनव्याप्तिस्मरणसिद्ध्यात्मकपरामर्शानुमितयः यत्र क्रमेण भवन्ति, तत्र सिषाधयिषोत्पत्तिक्षणमारभ्य परामर्शोत्पत्तिक्षणपर्यन्ताः चत्वारः क्षणाः सिषाधयिषाविशिष्टकालरूपाः। सिषाधयिषाप्रागभावानधिकरणत्वं चतुर्ष्वपि क्षणेषु वर्तते। एवं सिषाधयिषानाशाधिकरणं यः क्षणः व्याप्तिस्मरणोत्पत्तिक्षणः (तृतीयक्षणः) तद्ध्वंसाधिकरणक्षणः चतुर्थः परामर्शोत्पत्तिक्षणः तद्ध्वंसाधिकरणत्वं पञ्चमादिक्षणेषु। तदनधिकरणत्वं चतुर्षु क्षणेषु वर्तते इति योग्यतायाः निर्वाहः। अनुमित्सोत्पत्तिपूर्वक्षणवारणाय स्वप्रागभावानधिकरणत्वनिवेशः। पञ्चमादिक्षणवार-णाय स्वनाशाधिकरणेत्यादिद्वितीयसंबन्धनिवेशः।

गादाधरी

भाणायाः पूर्वानुमित्साबलादनुमित्युत्तरमनुमित्यापत्तेरसाङ्गत्यापाताच्च । तत्रानुमितिक्षणस्योत्तेजकताकल्पनाभावादिति विभावनीयम् । अनुमित्सोत्तरं यत्र विलम्बेन लिङ्गदर्शनादिकं ततश्च परामर्शस्तत्रानुमित्सोत्पत्तिक्षणमारभ्य परामर्शोत्पत्तिक्षणपर्यन्तावस्थायी दण्डाविरपीति तद्वारणाय लिङ्गदर्शनादेरनुमित्साक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वमनुसृतम् । यत्रानुमित्सोत्पत्तिद्वितीयक्षणे पक्षलिङ्गव्याप्तिविषयकमेकस्मरणं तदनन्तरक्षणे परामर्शोत्पत्तिः तत्र क्षणत्रयमध्य एव परामर्शोत्पत्त्या तदनतिरिक्तकालमात्रस्य तथात्वभ्रमवरणाय क्रमेणेति

---

भावबोधिनी

ननु तत्क्षणत्वेनैव चतुर्णां क्षणानां निवेशोऽस्तु । किं सिषाधयिषाविशिष्टकालत्वेन अनुगतरूपेण निवेशेनेत्यत्राह—न तु अननुगतेन इत्यादिना । तथा च तत्तत्क्षणत्वेन निवेशे गौरवम् । अपि च यादृशसिद्धेः प्रतिबन्धकत्वं तत्तत्सिद्धिव्यक्तिभेदस्य सिद्धौ निवेशे लाघवं च । तथा हि—तत्तत्कालविरहविशिष्टसिद्ध्यभावापेक्षया तत्तत्सिद्धिभिन्नसिद्ध्यभावस्य पक्षतात्वे लाघवात् योग्यतायाः मूलोक्तं उत्तेजकत्वं न निर्वहेत् । अतः अनुगतरूपेणैव कालस्य निवेशः कार्यः । किञ्च तत्तत्क्षणत्वेन योग्यताशरीरे कालस्य निवेशे यत्र आदौ अनुमित्सा तदनन्तरं 'लिङ्गदर्शनम्, ततः व्याप्तिस्मरणम्, ततः परामर्शः, ततोनुमितिः तत्र अनुमित्यनन्तरमपि अनुमित्यापत्तिः, योग्यतापक्षे प्रदर्शयिष्यते । सा च चतुर्णां क्षणानां विशिष्य निवेशे न सङ्गच्छते । अनुमित्युत्पत्तिक्षणस्य क्षणचतुष्टयानन्तर्गतत्वात् । उक्तानुगतरूपेण निवेशे तु द्वितीयसंबन्धमध्ये समयध्वंसोत्पत्त्यधिकरणत्वमनिवेश्य समयध्वंसाधिकरणत्वस्यैव निवेशात् सिषाधयिषानाशाधिकरणं यः समयः तृतीयक्षणः तद्ध्वंसाधिकरणसमयः पञ्चमक्षणोऽपि भवति । तद्ध्वंसानधिकरणत्वं पञ्चमक्षणस्यापि अस्तीति अनुमित्सायोग्यतापदेन ग्रहीतुं शक्यतया अनुमित्युत्पत्त्यनन्तर-

## गादाधरी

अनुमित्सोत्पत्तिद्वितीयतृतीयक्षणयोर्लिङ्गदर्शनव्याप्तिस्मरणयोः क्रमेणोत्पत्तावपि कुतश्चित्प्रतिबन्धकाद्यत्र विलम्बेन परामर्शोत्पत्तिस्तत्राधिकक्षणानामपि तथाविधतया तद्वारणायोत्सर्गत इति । तादृशव्याप्तिस्मरणानन्तरक्षणे परामर्शोत्पत्तावसति विरोधिनीत्यर्थः । अनुमित्यननुगुणक्षणव्यवधानविरहेण पञ्चमक्षणे अनुमितिरुत्पद्यते न तु तदग्रेऽपि, तथाविधक्षणव्यवधानादित्येतत्सूचनाय भङ्ग्या तादृशकालविशेषोपादानमित्यवधेयम् ।

---

## भावबोधिनी

षष्ठक्षणे अनुमित्यापत्तिः सङ्गच्छते इति भावः ।

उत्तेजकताकल्पनाभावादिति । उत्तेजकताप्रयोजकस्य तत्तत्क्षणत्वस्याभावादित्यर्थः । तदनतिरिक्तकालमात्रस्य तथात्वभ्रमेति । तदतिरिक्तकालस्य अयोग्यतात्वभ्रमवारणायेत्यर्थः । अधिकक्षणानामपीति । चतुरधिकानां पञ्चमादिक्षणानाम् इत्यर्थः । अथवेति दीधितिम् अवतारयति—यत्र तथाविधपरामर्शोत्पत्तिक्षण इति । पूर्वोक्तरीत्या क्षणचतुष्टयसाधारणरूपेण अनुमित्सायोग्यतायाः निर्वचने यत्र अनुमित्सा लिङ्गदर्शन—व्याप्तिस्मरणोत्तरं परामर्शोत्पत्तिक्षणे अनुमितिप्रतिबन्धकः बाधनिश्चयः वर्तते तत्र बाधनिश्चयनाशानन्तरं अनुमितिः यदि प्रामाणिकी, तदा क्षणचतुष्टयमात्रसाधारणयोग्यतायाः अनुमितेः पूर्वक्षणे अभावात् अनुमितिः न निर्वहतीति । एवं यत्र आदौ अनुमित्सा ततः लिङ्गदर्शनसामग्री संनिकर्षादिः ततः लिङ्गदर्शन-व्याप्तिस्मरणपरामर्शानुमितयः क्रमेण भवन्ति, तत्र पञ्चमक्षणे योग्यतायाः अभावात् पक्षताविरहात् अनुमितिर्न निर्वहति । अतः क्षणचतुष्टयापेक्षया अधिककालस्यापि योग्यतात्वम् उत्तेजकत्वं च आवश्यकमित्याशयेन दीधितौ पक्षान्तरानुसरणमिति भावः । असत्यां सिद्धौ विशेष्याभावात् एव पक्षतानिर्वा-

## गादाधरी

ननु तथाविधकालस्योत्तेजकत्वे गौरवमित्यत आह–फलबलेनेति। अनुमित्सानाशेऽपि अनुमित्यात्मककार्योत्पत्त्यनुरोधेनेत्यर्थः। तथा कल्पनात्– तादृशकालस्योत्तेजकत्वकल्पनात्। यत्र तथाविधपरामर्शोत्पत्तिक्षणे अनुमितिप्रतिबन्धकबाधादिसमवधानमासीत् तदपगमश्च तद्द्वितीयक्षणे, तत्र सिद्धौ सत्यां तदनन्तरञ्चेदनुमितिः प्रामाणिकी, एवं यत्रानुमित्साद्वितीयक्षणे लिङ्गदर्शनसामग्रीसमवधानं तदनन्तरं लिङ्गदर्शनादिक्रमेण परामर्शोत्पत्तिः तत्र सिद्धौ सत्यामनन्तरक्षणे अनुमितिर्वा तथा

---

## भावबोधिनी

हात पक्षन्तरानुसरणं अनावश्यकं स्यात् इत्यालोच्य सिद्धौ सत्याम् इत्युक्तम्। अनुमित्सोत्तरं दिवसादिविलम्बेन सिद्धिः अनुमित्सान्तरं च यद्युत्पद्यते तदा अनुमितेः उत्पत्त्या दिवसादिरूपतादृशकालस्य अनुत्तेजकत्वात् अनुमित्सानाशेऽपि इत्युक्तम्। पूर्वोत्पन्नायाः अनुमित्सायाः नाशेऽपि इत्यर्थः। तथा च दिवसविलम्बेन अनुमित्सान्तरोत्पत्तिक्षणमारभ्यैव उत्तेजकत्वमिति भावः। यथा अनुमित्सायोग्यतायाः उत्तेजकत्वम्, तथा सिद्धियोग्यतायाः प्रतिबन्धकत्वं तुल्यन्यायेन आवश्यकमित्यभिप्रायेण दीधितौ यद्वि च सिद्ध्यनन्तरं इति। सिद्ध्यात्मकपरामर्शानन्तरं अव्यवहितोत्तरक्षणे यथा अनुमितिः न जायते, तथा द्वित्रिक्षणमध्ये अर्थात् सिद्धेः चतुर्थक्षणे पञ्चमक्षणे वा सिद्धिनाशानन्तरमपि अनुमित्यनुत्पादः यद्यनुभवसिद्धः तदा सिद्ध्युत्पत्तिक्षणमारभ्य त्रिक्षणस्थायी चतुःक्षणस्थायी वा यः स्थूलकालः स एव अनुमितेः प्रतिबन्धकः, स एव च सिद्धियोग्यता सिद्धिपदेन विवक्षितेति भावः।

ननु सिद्ध्युत्तरं कियत्क्षणमध्ये अनुमितिः न जायते कियत्क्षणानन्तरं वा जायत इति विशिष्य निर्णेतुमशक्यतया कालस्य प्रतिबन्धकत्वं न संभवति।

दीधितिः

फलबलेन तथा कल्पनात् ।

अथवानुमित्सोत्पत्त्यनन्तरं अनुमित्सानाशेपि सिद्धौ सत्यां यावत्कालमध्येऽनुमितिर्जायते तावानेव कालोऽनुमित्सयोपलक्षितः । यदि च सिद्धयनन्तरं तन्नाशे द्वित्रिक्षणमध्ये विनानुमित्सामनुमित्यनुत्पादोनुभवसिद्धः तदा सिद्धयापि तावानेव कालः उपलक्षणीयः । विशिष्य क्षणनियमस्तु अवहितैः करणीय इति वदन्ति ।

---

गादाधरी

तदोक्तापेक्षयाधिकस्य कालस्योत्तेजकत्वमावश्यकमित्याशयेनाह—अथवेति । अनुमित्सोत्पत्त्यनन्तरमिति । अनुमित्सोत्पत्तिक्षणमारभ्य तदुत्तरमित्यर्थः । यावत्कालमध्ये अनुमितिर्जायते इत्यग्रेतनेनान्वयः । अनुमित्सोत्तरमनुमित्सान्तरोत्पत्त्या दिवसादिविलम्बेनापि सिद्धयनन्तरमनुमित्युत्पत्त्या तावत्कालस्यानुत्तेजकत्वात् । अनुमित्सानाशेपीति । प्रागनुमित्सायामसत्यामित्यर्थः । असत्यां सिद्धावनुमित्सोत्तरं दिवसादिविलम्बेनाप्यनुमित्युदयात् सिद्धौ सत्यामिति । प्रागित्यादिः । यावत्कालमध्ये—यावत्क्षणानन्तरक्षणे । तावानेव कालः — तावत्क्षणाधिकक्षणानवस्थायी । अनुमित्सया—अनुमित्सार्थक-

---

भावबोधिनी

एवं सिषाधयिषोत्तरं कियत्क्षणमध्ये अनुमितिर्जायत इति निर्णेतुमशक्यतया कालविशेषस्य उत्तेजकत्वमपि न संभवतीत्यतः उक्तम् विशिष्य क्षणनियमस्तु इति । क्षणनिर्णय इति तदर्थः ।

गादाधर्यां सिद्धयुत्पत्तिक्षणमारभ्येत्यादि । स्वप्रागभावानधिकरणत्व-स्व-

गादाधरी

सिषाधयिषापदेन। उपलक्षित:—विवक्षितः। अनुमित्सायोग्यताया उत्तेजकत्ववत् तुल्ययुक्त्या सिद्धियोग्यताया अपि प्रतिबन्धकत्वमुचितमित्याशयेनाह—यदि चेति। सिद्ध्यनन्तरं 'इव' इति शेषः। तेन नास्य वैयर्थ्यम्। द्वित्रिक्षणमध्ये इति। द्विक्षणमध्ये त्रिक्षणमध्ये वेत्यर्थः। सिद्धेश्चतुर्थक्षणे पञ्चमक्षणे वेति फलितम्। सिद्ध्या—सिद्ध्यर्थकपदेन। तावानेव—तन्नाशानन्तरमपि द्विक्षणस्थायी त्रिक्षणस्थायी वा। उपलक्षणीयः विवक्षणीयः।

ननु सिद्ध्युत्तरं कियत्क्षणमध्ये अनुमितिर्न जायते कियत्क्षणानन्तरं वा

---

भावबोधिनी

नाशाधिकरणसमयनाशाधिकरण—समयनाशानधिकरणत्वोभयसंबन्धेन सिद्धिविशिष्टः कालः इति सिद्धियोग्यतायाः अनुगमः करणीयः। इदं च सिद्धिविशिष्टत्वं क्षणत्रयस्य क्षणचतुष्टयस्य च साधारणम्। तथा हि—स्वपदं सिद्धिपरम्। सिद्धिप्रागभावानधिकरणत्वं सिद्ध्युत्पत्तिक्षणमारभ्य त्रयाणां चतुर्णां च क्षणानां वर्तते। तथा सिद्धिनाशाधिकरणं यः क्षणः तृतीयक्षणः तन्नाशाधिकरणचतुर्थक्षणनाशानधिकरणत्वं चतुर्णां त्रयाणां च क्षणानां वर्तते इति तादृशोभयसंबन्धेन सिद्धिविशिष्टत्वं क्षणत्रयस्य क्षणचतुष्टयस्य चास्तीति तयोः प्रतिबन्धकतया सिद्ध्युत्पत्तेः चतुर्थक्षणे पञ्चमक्षणे वा अनुमितेः अनुत्पादः निर्वहति इति भावः।

उक्तदोषापातादिति। अत्र चेत्यादि दीधितिग्रन्थमवतारयति-इच्छायाः विषयसिद्धौ सत्यामित्यादिना। सिषाधयिषासिद्ध्यात्मकपरामर्शानन्तरं अनुमित्युत्पत्तौ सत्यां पुनः अनुमित्यन्तरस्य उत्पत्तिं वारयितुं स्वविषयसिद्ध्यनुपहितत्वं सिषाधयिषाविशेषणत्वेन दीधितिकारैः विवक्षितम्। तत्तु तदैव सङ्गच्छते यदि प्रथमानुमित्युत्पत्तिक्षणे परामर्शानुमित्सयोः समवधानं स्यात्। इतरथा हि परामर्शाभावादेव

## गादाधरी

जायत इत्यस्य विशिष्य निर्णेतुमशक्यतया कालस्य प्रतिबन्धकत्वकल्पनमसम्भवि; एवमुत्तेजककालस्यापि विशिष्य निर्णेतुमशक्यतया तदुत्तेजकत्वमपि तथेत्यत आह- विशिष्येति - अवहितैः-सावधानैः। नियमः निर्णयः। तथा च येषां विशिष्य- तावत्कालनिर्णयो भवति तेषामेव तत्र विशिष्य प्रतिबन्धकत्वोपगमो भविष्यति, अन्येषां तु सामान्यत एवेति भावः।

केचित्तु-'ननु कालविशेषाणां सिद्धिसिषाधयिषाधिकरणकालत्वेन चेत्

---

## भावबोधिनी

अनुमित्साविरहविशिष्टसिद्धिसद्भावादेव वा अनुमित्यन्तरोत्पत्तिवारणसंभवात् तद्वि- शेषणमनर्थकं स्यात्। प्रथमानुमित्युत्पत्तिकाले तु परामर्शानुमित्सयोः समवधानं न घटते। ज्ञानेच्छयोः युगपदुत्पत्त्यभावात् क्रमेणोत्पत्तौ सत्यां प्रथमानुमित्यु- त्पत्तिकाले अनुमित्साया वा परामर्शस्य वा नाशावश्यकत्वात्। अतः इच्छा- परामर्शयोः यौगपद्यं प्रथमतः संपाद्य अनुमित्यनन्तरं अनुमित्युत्पत्तिवारकतया स्व- विषयसिद्ध्यनुपहितत्वं इच्छाविशेषणं सार्थकयति-अत्र चेत्यादिना इति भावः।

यत्र आदौ 'पर्वतो वह्निमान् इति निर्णयो भवतु' इच्छा, अनन्तरं 'पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति' समूहालम्बनं प्रत्यक्षं स्मरणं वा तदन- न्तरं 'पर्वतो वह्निमान्' इत्यनुमितिः नेष्यते, अनुमित्साविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वे 'पर्वतो वह्निमान् इति निर्णयो भवतु' इत्याकारकेच्छायाः अनुमिति- रूपनिर्णयविषयकत्वमप्यस्तीति अनुमित्सारूपतया तदनन्तरजातस्य सिद्ध्यात्मक- प्रत्यक्षस्य अनुमित्साविशिष्टत्वमेवास्ति, न तु अनुमित्साविरहविशिष्टत्वमिति विशेषणाभावप्रयुक्तविशिष्टाभावरूपपक्षतायाः सद्भावात्, तत्र समूहालम्बनप्रत्यक्षा-

गादाधरी

प्रतिबन्धकोत्तेजकभावः तदा अधिककालस्यापि तथात्वप्रसङ्गः, अनतिप्रसक्तानुगतधर्मान्तरं च दुर्वचमेवेत्यत आह–विशिष्येति। अनतिप्रसक्तानुगतविशेषणविशेषं निवेश्येत्यर्थः। क्षणनियमः – कतिपयक्षणानामेव तथात्वं नत्वधिकक्षणानामिति नियमनिर्वाहः। अवहितैः – निरुक्तिकुशलैः। सिद्ध्युत्पत्तिक्षणमारभ्य क्षणचतुष्टयादेः स्वप्रागभावानधिकरणत्वस्वनाशाधिकरणसमयनाशाधिकरणसमयनाशानधिकरणत्वोभयसंबन्धेन सिद्ध्यादिमत्त्वमेवानुगमकमनतिप्रसक्तं चेति भावः इति व्याचक्षते। वदन्तीत्य-

---

भावबोधिनी

नन्तरं अनुमित्यापत्तिः। तद्वारणाय अनुमित्सायां स्वविषयसिद्ध्यनुपहितत्वम् विशेषणं देयम्। उक्तस्थले साध्यनिर्णयेच्छायाः स्वविषयीभूता या प्रत्यक्षरूपा सिद्धिः तद्विशिष्टत्वात् स्वविषयसिद्ध्यनुपहितत्वं नास्ति। तथा च स्वविषयसिद्ध्यनुपहितत्वविशिष्टानुमित्साभावरूपविशेषणसत्त्वात् तद्विशिष्टसिद्धेरेव तत्र सत्त्वेन तदभावरूपपक्षतायाः अभावात् न अनुमित्यापत्तिः।

ननु साध्यतद्व्याप्यविशिष्टपक्षविषयकसमूहालम्बनप्रत्यक्षं प्रति साध्यतद्व्याप्यरूपविशेषणज्ञानस्य हेतुत्वात् तादृशविशेषणज्ञानस्य च ज्ञानेच्छयोः यौगपद्यानभ्युपगमेन इच्छोत्पत्तिकालेऽसंभवात् तत्पूर्वक्षणे एव विशेषणज्ञानम् उत्पद्यत इति वक्तव्यम्। तथा सति इच्छासामग्र्यपेक्षया विशेषणज्ञानघटितप्रत्यक्षसामग्र्याः बलवत्त्वात् इच्छा प्रथमतः नोत्पद्येत, प्रत्यक्षमेवोत्पद्येत इत्यालोच्य पूर्वोक्तन्यायेनेत्युक्तम्। इच्छायाः पूर्वक्षणे विशेषणज्ञानं भवति, इच्छोत्पत्तिक्षणे इन्द्रियसन्निकर्षः भवति, तदनन्तरं साध्यतद्व्याप्यविषयकं समूहालम्बनप्रत्यक्षं जायते। अतः इच्छोत्पत्तिपूर्वक्षणे सन्निकर्षविरहेण प्रत्यक्षसामग्रीवैकल्यात् आदौ इच्छायाः उत्पत्तौ न अनुपपत्तिरिति भावः।

## गादाधरी

स्वरससूचनाय; स चोक्तपरम्परायास्संबन्धत्वे मानाभावात् तद्व्यक्तित्वेनोत्तेजकत्वा-भ्युपगमे उक्तदोषापातादिति।

इच्छाया विषयसिद्धौ सत्यां चरितार्थतया नोत्तरकालमनुमितिर्जायत इति तद्वारणाय स्वविषयसिद्ध्यनुपहितत्वेनेच्छा विशेषणीया, तत्र तद्विषयसिद्धिदशायां परामर्शानुमित्सासमवधानसम्भव एव तद्विशेषणमर्थवद्भवति, तच्च आपाततो न घटते, इच्छापरामर्शयोर्युगपदुत्पादासम्भवेनानुमितिकाले एकतरविनाशावश्यकत्वादित्यत-स्तत् घटमति-अत्र चेति। सिद्धिप्रतिबन्धकतावच्छेदककोटौ चेत्यर्थः। "तदिच्छा-

---

## भावबोधिनी

स्मरणे विशेषणज्ञानापेक्षाविरहात् उक्तप्रयासं विनैव इच्छाद्वितीयक्षणे साध्य-तद्व्याप्यविशिष्टपक्षविषयकं स्मरणं निर्वहति इत्यभिप्रेत्य स्मरणं वा इत्युक्तम्।

ननु अनुमित्सापदस्य अनुमितिविषयकेच्छा इति नार्थः, येन 'पर्वतो वह्निमान्' इति निर्णयो भवतु इतीच्छाया अपि निर्णयत्वेन रूपेण अनुमिति-विषयकत्वात् अनुमित्सारूपतया उक्तस्थले अनुमित्यापत्तिः स्यात्, किन्तु अनु-मित्सापदं अनुमितित्वप्रकारकेच्छापरम्। 'निर्णयो भवतु' इति पूर्वोक्तेच्छायाः निर्णयत्वप्रकारकत्वेऽपि अनुमितित्वप्रकारकत्वविरहात्, तस्याः उत्तेजकत्वाभावादेव पूर्वोक्तस्थले अनुमितिवारणसंभवात् अनुमित्सायां स्वविषयसिद्ध्यनुपहितत्वविशेषणं व्यर्थमित्यालोच्य तस्य स्थलान्तरे प्रयोजनमाह—दी।धितौ यत्र वेत्यादिना। "आदौ पर्वतो वह्निमान्, वह्निव्याप्यधूमवान्, वह्निव्याप्यव्याप्यधूमसंयोगवान् च, तथा 'पर्वतो वह्निमान्' इत्यनुमितिः, पर्वतो वह्निव्याप्यधूमवान् इत्यनुमितिश्च मदिष्टसाधनम्" इत्याकारकं एकं समूहालम्बनं स्मरणम्। द्वितीयक्षणे 'पर्वते वह्न्यनुमितिः वह्निव्याप्य-

## गादाधरी

विषयसिद्ध्यनुपहितत्वं तद्विशेषण' मित्यग्रिमेणान्वयः । निर्णयेच्छा—निर्णयत्वप्रकारकेच्छा; अनुमितित्वप्रकारकेच्छायाः प्रत्यक्षाद्यात्मकसिद्ध्या अचरितार्थतया तद्बलात्तादृश-सिद्ध्युत्तरमप्यनुमित्युत्पत्तेः प्रकृतानुपयोगात् । अनुमित्सोत्पत्तिकाले विशेषणज्ञानोत्पत्त्य-संभवेन तत्पूर्वमेव तद्घटितविशिष्टप्रत्यक्षसामग्रीसमवधानस्य वाच्यतया बलवत्त्वेन प्रत्यक्षसामग्र्या इच्छोत्पत्तिरेव न सम्भवतीत्यतः पूर्वोक्तन्यायेनेति । अनुमित्सापूर्व-कालोत्पन्नेत्यादिप्रकारेणेत्यर्थः । स्मरणे विशेषणज्ञानापेक्षाविरहादुक्तप्रयासं विनैव

---

## भावबोधिनी

धूमानुमितिश्च जायताम्' इत्याकारिका अनुमित्सा । तृतीयक्षणे 'पर्वतो वह्निमान् वह्निव्याप्यधूमवाँश्च' इत्याकारिका अनुमितिः तत्र चतुर्थक्षणे 'पर्वतो वह्निमान्' इत्याकारकानुमित्यापत्तिः । तृतीयक्षणोत्पन्नायाः समूहालम्बनानुमितेः वह्निव्याप्य-धूमविषयकतया 'पर्वतो वह्निमान्' इत्यनुमितिहेतुपरामर्शरूपत्वमस्ति । तस्मिन् क्षणे तत्पूर्वक्षणोत्पन्नानुमित्सा च वर्तते । अतः अनुमितिरूपायाः सिद्धेः अनु-मित्साविरहविशिष्टत्वं नास्तीति अनुमित्साविरहविशिष्टसिद्ध्यभावरूपपक्षतायाः सद्भावात् चतुर्थक्षणे अनुमित्यापत्तिः । तद्वारणाय इच्छायां स्वविषयसिद्ध्यनु-पहितत्वविशेषणे दत्ते प्रथमानुमितिकालीनाया अनुमित्सायाः अनुमितिरूपेच्छा-विषयसिद्ध्युपहितत्वात् स्वविषयसिद्ध्यनुपहितेच्छाविरहरूपविशेषणसत्त्वात् अनुमिति-रूपसिद्धेश्च सद्भावात् विशिष्टसिद्ध्यभावरूपपक्षतायाः विरहात् न अनुमित्यापत्तिः इति तात्पर्यम् ।

गादाधर्यां अनुमितित्वप्रकारकेच्छाया इति । तथा च यत्र आदौ पक्षे साध्यानुमितिर्जायतामित्याकारिका अनुमितित्वप्रकारिका इच्छा, तदनन्तरं 'पर्वतो

## दीधितिः

अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्वोक्तन्यायेन साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षं स्मरणं वा यत्र वा साध्यतद्व्याप्यधर्मतादृशव्याप्यधर्मान्तरविशिष्टपक्षस्य तत्पक्षकतत्साध्यतद्व्याप्यावत्तानु-

---

## गादाधरी

इच्छाद्वितीयक्षणे विशिष्टपक्षस्मरणं निर्वहतीत्यभिसन्धायाह—स्मरणं वेति। अनुमितित्वप्रकारकेच्छायामपि तद्विशेषणोपादानस्य प्रयोजनमाह यत्र वेति। साध्यव्याप्यविशिष्टपक्षस्मरणानन्तरमनुमितिरेव भविष्यति न त्विच्छेत्यतोऽनुमितिसामग्रीविघटनाय तथाविधस्मरणस्य साध्यविशिष्टपक्षविषयकत्वानुधावनम्। तृतीयक्षणे साध्यस्य तद्व्याप्यस्य चानुमितेः द्वितीयक्षणे साध्यतद्व्याप्ययोरनुमित्सायाश्च निर्वाहाय साध्यव्याप्यतद्व्याप्यविशिष्टपक्षतदुभयानुमितिनिष्ठेष्टसाधनताविषयकत्वानुधावनम्। साध्यानु-

---

## भावबोधिनी

वह्निमान्' वह्निव्याप्यधूमवाँश्चेति' प्रत्यक्षं स्मरणं वा, तदनन्तरं 'पर्वतो वह्निमान्' इत्यनुमितेरिष्टतया तत्र स्वविषयसिद्ध्यनुपहितत्वस्य प्रयोजनं न संभवतीति यत्र अनुमितिर्नेष्यते तादृशस्थले प्रयोजनकथनार्थं अनुमितित्वप्रकारकेच्छाम् उपेक्ष्य निर्णयत्वप्रकारकेच्छाया अनुसरणम्।

अचरितार्थतयेति। विषयसिद्धिरूपप्रयोजनरहिततयेत्यर्थः। अनुमितित्वप्रकारकेच्छायां प्रत्यक्षस्याविषयतया प्रत्यक्षोत्पत्त्या तादृशेच्छायाः विषयसिद्ध्यसंभवात् इति भावः। तद्विशेषणदानस्येति। स्वविषयसिद्ध्यनुपहितत्वरूपविशेषणदानस्येत्यर्थः। अनुमितिरेव भविष्यतीति। स्मरणरूपपरामर्शात्मककारण-

दीधितिः

म्रित्योरिष्टसाधनतायाश्चैकं स्मरणं ततस्तयोरनुमित्सा ततः साध्यतद्व्याप्यवत्तानुमितिः तत्र तदनन्तरमनुमितिप्रसंगः योग्यताविवक्षणे च सुतरामेवेति तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणम्।

---

गाधादरी

मितेस्तदनन्तरं पुनस्तदनुमित्यापत्तेश्च सम्पादनाय साध्यानुमित्सायास्साध्यव्याप्यस्यापि निश्चिततया तदनुमितेस्सम्पादनाय च साध्यव्याप्यानुमित्सायास्ततस्तयोरित्यादिनाऽनुसरणम्। अनुमित्साद्वितीयक्षणे साध्यस्याननुमितौ तदनन्तरं तदनुमितिरिष्टैव। साध्यव्याप्यस्याऽननुमितौ च परामर्शाभावान्नापत्तिसम्भव इत्यतस्तदनन्तरमुभयानुमित्यनुधावनम्। अनुमित्सोत्पत्तिक्षणावधिकक्षणचतुष्टयादिरूपयोग्यताया उत्तेजकत्वमते-यत्र पर्वते वह्निमनुमिनुयामितीच्छा ततो वह्निव्याप्यवान् पर्वत इति परामर्शः

---

भावबोधिनी

सद्भावात् इति भावः। अनुमितिसामग्रीविघटनायेति। स्मरणस्य साध्यविशिष्टपक्षविषयकत्वे सिद्धिरूपत्वमप्यस्तीति सिद्ध्यभावरूपसामग्र्याः विघटनं भवतीति भावः। तृतीयक्षणे साध्यस्येत्यादि। तृतीयक्षणे साध्यविषयिण्याः अनुमितेः निर्वाहार्थं तद्धेतुपरामर्शसंपादनाय स्मरणस्य साध्यव्याप्यविषयकत्वम्, तथा साध्यव्याप्यविषयकानुमितिनिर्वाहाय साध्यव्याप्यव्याप्यविशिष्टपक्षविषयकत्वमनुसृतम्। एवं द्वितीयक्षणे साध्यतद्व्याप्ययोः अनुमित्सायाः निर्वाहार्थं तद्धेतुभूतेष्टसाधनताज्ञानसंपादनाय स्मरणस्य साध्यतद्व्याप्यानुमितिविशेष्यकेष्टसाधनताप्रकारकत्वं अभिहितमिति भावः। साध्यानुमितेरित्यादि। तथा च साध्यविषयकानुमितेः तदनन्तरं पुनस्तदनुमित्यापतेश्च साध्यानुमित्सां विना असंभवात् इच्छायाः साध्यानुमितिविषयकत्वम् उक्तम्। समूहालम्बनस्मरणेन साध्यव्याप्यस्यापि निश्चिततया तद्विषय-

भावबोधिनी

कानुमितेः साध्यव्याप्यानुमित्सां विना असंभवात् इच्छायाः साध्यव्याप्यानुमितिविषयकत्वम् उक्तम्। अनुमित्सानन्तरक्षणे साध्यस्याननुमितौ सिद्ध्यभावात् तदनन्तरं साध्यानुमितिः इष्टैवेति इष्टापत्तिः स्यात्, तद्वारणाय अनुमितेः साध्यविषयकत्वम्। अनुमितेः साध्यव्याप्याविषयकत्वे तदनन्तरक्षणे परामर्शाभावादेव साध्यानुमित्यापत्तिः अशक्या इत्यालोच्य साध्यानुमितिहेतुपरामर्शत्वसंपादनाय अनुमितेः साध्यव्याप्यविषयकत्वं च प्रोक्तमिति भावः।

यदि तु अनुमित्सापदेन अनुमित्सोत्पत्तिक्षणमारभ्य क्षणचतुष्टयादिरूपा योग्यता विवक्ष्यते, तदानीं समूहालम्बनस्मरणाद्यनुधावनक्लेशं विनापि अनुमित्यापत्तिः कर्तुं शक्यते। तथा हि–यत्र आदौ 'पर्वते वह्निमनुमिनुयाम्' इतीच्छा, ततः पर्वतः वह्निव्याप्यवान् इति परामर्शः, ततः पर्वतो वह्निमान् इत्यनुमितिः तत्र अनुमित्यनन्तरं पुनः अनुमित्यापत्तिः। अनुमितिरूपसिद्धेः सत्त्वेऽपि, क्षणत्रयरूपानुमित्सायोग्यतायाः सत्त्वेन योग्यताविरहरूपविशेषणाभावात् विशिष्टाभावरूपपक्षतायाः सद्भावात् इत्याशयेन दीधितौ योग्यताविवक्षणे तु सुतराम् इत्युक्तम्।

ननु सिद्ध्यनुपहितत्वविशेषणदानेऽपि पूर्वोक्तापत्तीनां वारणसंभवात् तदिच्छाविषय इति किमर्थमुक्तम्? इत्याशङ्क्याह गाधादर्याम्–प्रत्यक्षाद्यात्मकसिद्धीति। तथा च यत्र आदौ 'पर्वतो वह्निमान् वह्निव्याप्यधूमवाँश्चेति' प्रत्यक्षरूपा सिद्धिः ततः पर्वतो वह्निमान् इत्यनुमितिः जायताम् इति वा प्रत्यक्षातिरिक्तं ज्ञानं जायताम् इति वा इच्छा, तत्र तदनन्तरं 'पर्वतो वह्निमान्' इत्यनुमितिः इष्यते। इच्छायां सिद्ध्यनुपहितत्वविशेषणे तु तत्रत्येच्छायाः प्रत्यक्षात्मकसिद्धिविशिष्टत्वात् सिद्ध्यनुपहितत्वं नास्तीति सिद्ध्यनुपहितेच्छाविरहविशिष्टसिद्धेरेव सत्त्वात् पक्षताविरहात् अनुमित्यनुपपत्तिः स्यात्। अतः तदिच्छाविषयसिद्ध्यनु-

## गादाधरी

तदनन्तरं च पर्वतो वह्निमानित्यनुमितिः तत्रापि तादृशानुमित्यापत्तिः सम्भवतीत्याह योग्यतेति। तदिच्छाविषयसिद्ध्यनुपहितत्वं तदिच्छायां विशेषणं देयमिति शेषः। प्रत्यक्षाद्यात्मकसिद्धिसमवहितानुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छाबलादनुमित्युत्पत्त्या तदिच्छाविषयेति सिद्धिविशेषणम्। विशेष्यतया अभिमता या इच्छा तद्विषयेत्यर्थः।

अथ तादृशेच्छाया उत्तेजकीभूतसकलेच्छासाधारणेनानुमितिगोचरेच्छात्वेन

---

## भावबोधिनी

पहितत्वं विशेषणमित्युक्तम् उक्तस्थले प्रत्यक्षरूपायाः सिद्धेः अनुमितित्वप्रकारकेच्छाविषयत्वं नास्तीति तादृशेच्छाविषयीभूता या अनुमितिरूपा सिद्धिः तदनुपहितैव सा इच्छा इति तस्याः उत्तेजकीभूतायाः सत्त्वात् न अनुमित्यनुपपत्तिः इति भावः। विशेष्यतया अभिमतेति। सिद्ध्यनुपहितत्वरूपविशेषणस्य विशेष्यतया अभिमता या इच्छा इत्यर्थः।

ननु तदिच्छाविषयसिद्ध्यनुपहितत्वस्य उत्तेजकीभूतायां इच्छायां विशेषणत्वेऽपि तदिच्छापदेन उत्तेजकीभूतानां सकलेच्छानां यत् साधारणं अनुमितिविषयकेच्छात्वं तेन रूपेण इच्छानिवेशस्य अभिप्रेतत्वे यत्र साध्यनिर्णयेच्छानन्तरं साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा तदनन्तरं 'अनुमितिर्जायताम्' 'प्रत्यक्षान्यज्ञानं जायताम्' इति वा इच्छा, तदनन्तरं अनुमितिः तत्र साध्यनिर्णयेच्छाया अपि निर्णयत्वेन रूपेण अनुमितिविषयकत्वात् अनुमितिविषयकेच्छा = "साध्यनिर्णयो भवतु" इति इच्छापि तद्विषयीभूतप्रत्यक्षात्मकसिद्ध्युपहितत्वमेव उत्तेजकीभूतायां इच्छायामस्तीति सिद्ध्यनुपहितत्वरूपविशेषणाभावात् सिद्ध्यनुपहितत्वविशिष्टेच्छाविरहसत्त्वात् तद्विशिष्टायाः सिद्धेरेव तत्र सत्त्वेन तदभावरूपपक्षतायाः अनिर्वा-

गादाधरी

निवेशे प्रत्यक्षाद्यात्मकसिद्धेरपि निर्णयत्वादिप्रकारकानुमित्साविषयतया विषयान्तस्या-व्यावर्तकताप्रसङ्गः तत्तद्व्यक्तित्वेन निवेशे चोत्तेजकोभूतेच्छाव्यक्तिसमसंख्याका-भावानां सिद्धौ विशेषणतया महागौरवम्, तत्तदिच्छाविषयसिद्ध्यनुपहिततत्तदिच्छात्वे-नोत्तेजकतामपेक्ष्य लाघवात्तत्तत्क्षणावच्छिन्नेच्छात्वेन तथात्वकल्पनाप्रसङ्गश्चेति चेन्न, प्रागुक्तयुक्त्या इच्छाविषयतावच्छेदकतायाः प्रकृतसाध्यविशिष्टप्रकृतपक्षविषयकानुमिति-त्वादिपर्याप्तिनिवेशस्यावश्यकतया इच्छाविषयतावच्छेदकतापर्याप्त्यधिकरणरूपभेदे-

---

भावबोधिनी

हात् सिद्धौ तदिच्छाविषयेति विशेषणं व्यर्थं स्यात्। उक्तस्थले अनुमितिनिर्वा-हार्थं हि तद्विशेषणम् दत्तम्।

न च तदिच्छापदेन अनुमितिविषयकेच्छात्वेन इच्छानिवेशो नाभिमतः, किन्तु यस्याः इच्छायाः उत्तेजकत्वमभिमतम्, तद्व्यक्तित्वेनैव निवेशोऽभिमतः। पूर्वोक्तस्थले 'अनुमितिर्जायताम्' 'प्रत्यक्षान्यज्ञानं जायताम्' इत्याकारकेच्छाया एव उत्तेजकत्वात् तद्विषयत्वं प्रत्यक्षरूपसिद्धेः नास्तीति तदिच्छाविषयसिद्ध्यनुपहितत्वस्य उत्तेजकीभूतेच्छायां सत्त्वात् नानुपपत्तिः इति वाच्यम्। तथा सति तत्तद्व्यक्तिविषयीभूतसिद्ध्यनुपहितत्वविशिष्टतत्तदिच्छाव्यक्त्यभावानां सिद्धौ विशेषणत्वं वक्तव्यम्। तथा च यावत्यः उत्तेजकीभूताः इच्छाव्यक्तयः तत्सम-संख्याकाः तदभावाः निवेशनीया इति महद्गौरवम्। किञ्च तत्तदिच्छाविषय-सिद्ध्यनुपहितत्वविशिष्टतत्तदिच्छात्वेन उत्तेजकत्वमपेक्ष्य यद्यत्क्षणावच्छिन्नेच्छोत्तरक्षणे अनुमितिः तत्तत्क्षणावच्छिन्नेच्छात्वेन उत्तेजकत्वं लाघवात् कल्पनीयं स्यात् इति चेत्, न। 'इदं पुनरत्रावलोकनीयम्' 'इत्यादिना प्रागुक्तरीत्या 'वह्निविशिष्ट-पर्वतानुमितिर्भवतु' इत्यादीच्छायाः तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वपर्याप्त-

गादाधरी

तेच्छायाः पृथक्पृथगुत्तेजकताया आवश्यकत्वात्तत्तद्धर्मप्रकारकेच्छायां तत्तद्धर्मावच्छिन्नानुपहितत्वं निवेशनीयमित्यत्रैव तात्पर्यात्; अत एवानुमितिद्वयं जायतामित्येतादृशेच्छाबलात्क्रमिकानुमितिद्वयमप्युपपद्यते; एकानुमित्युपधानदशायामपि द्वित्वावच्छिन्नानुपहितत्वस्याक्षतत्वात् ।

अथ वा स्वविषयकत्वस्वसामानाधिकरण्योभयसंबन्धेन प्रकृतपक्षधर्मिकप्रकृतसाध्यप्रकारकनिश्चयविशिष्टान्यत्वमेवानुपहितत्वान्तार्थः । भेदस्याव्याप्यवृत्तितया-

---

भावबोधिनी

वच्छेदकताकविषयताकेच्छात्वेनोत्तेजकत्वम् । 'अनुमितिर्जायताम्' इतीच्छायाः अनुमितित्वपर्याप्तावच्छेदकताकविषयताकेच्छात्वेनोत्तेजकत्वम् । प्रत्यक्षान्यज्ञानं जायतामितीच्छायाः प्रत्यक्षान्यज्ञानत्वपर्याप्तावच्छेदकताकविषयताकेच्छात्वेन उत्तेजकत्वमिति इच्छाविषयतावच्छेदकतापर्याप्त्यधिकरणरूपभेदेन इच्छायाः पृथक् पृथक् उत्तेजकतायाः आवश्यकत्वात् यद्धर्मपर्याप्तावच्छेदकताकविषयताकेच्छायाः उत्तेजकत्वम्, तद्धर्मावच्छिन्नानुपहितत्वं तद्धर्मप्रकारकेच्छायां निवेशनीयम् इत्यत्रैव प्रकृतग्रन्थस्य तात्पर्यम् । अत एव यत्र सिद्ध्यात्मकपरामर्शानन्तरं अनुमितिद्वयं जायतामिति इच्छा तत्र क्रमेण अनुमितिद्वयं जायते । प्रथमोत्पन्नानुमितिरूपसिद्ध्युपहिताया अपि इच्छायाः द्वित्वावच्छिन्नानुमित्युपहितत्वं नास्तीति तादृशेच्छाबलात् द्वितीयानुमितेः उपपत्तिः । सामान्यतः तदिच्छाविषयसिद्ध्यनुपहितत्वनिवेशे तु अनुमितिद्वयं जायतामित्याकारकेच्छाविषयीभूता या प्रथमानुमितिः तदुपहितत्वमेव तस्यामिच्छायामस्तीति तस्याः उत्तेजकत्वं न स्यात् । तत्तद्धर्मावच्छिन्नानुपहितत्वनिवेशे च उक्तस्थले द्वित्वप्रकारकानुमितिविषयकेच्छाया एव उत्तेजकतया तद्धर्मावच्छिन्ना सिद्धिः एकानुमितिरूपा सिद्धिः न भवतीति द्वित्वावच्छिन्नानुपहितत्वस्य इच्छायां

## गाधादरी

अनुमितिदशायामिच्छायास्सिद्धिविशिष्टत्वेपि तत्पूर्वं विशिष्टान्यत्वमव्याहतम्। प्रकृतपक्षकप्रकृतसाध्यकानुमितिविषयकसमूहालम्बनेच्छायां यत्रान्यपक्षकानुमितेरन्यसाध्यकानुमितेर्वा विषयता तत्र तद्बलादन्यानुमित्यनन्तरं प्रकृतानुमितिनिर्वाहाय प्रकृतपक्षकप्रकृतसाध्यावगाहित्वं निश्चयविशेषणम्। एतद्विशेषणमनन्तर्भाव्य द्वित्वादिप्रकारकेच्छायाः पृथगुत्तेजकत्वाङ्गीकारात्तादृशेच्छाबलादनुमित्यनन्तरमनुमित्युपपत्तिः। द्वित्वप्रकारकेच्छाबलाच्च नानुमितिद्वयानन्तरमनुमित्यन्तरम्, तावत्पर्यन्तमनुमित्साया एवा-

---

## भावबोधिनी

सत्त्वात् तद्बलात् द्वितीयानुमितेः उपपत्तिः। पर्याप्त्यधिकरणरूपभेदेनेति। तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वप्रत्यक्षान्यज्ञानत्वादिः रूपभेदपदेन विवक्षितः। तत्तद्धर्मावच्छिन्नानुपहितत्वमिति। यद्धर्मप्रकारकेच्छायाः उत्तेजकत्वम्, तद्धर्मावच्छिन्नसिद्ध्यविशिष्टत्वमित्यर्थः। एकानुमित्युपधानदशायामिति – एकानुमितिविशिष्टतादशायामित्यर्थः। अनुगतेच्छां विना प्रागुक्तसकलेच्छानां एकरूपेण निवेश इति मतसाधारण्येन आह–अथ वेति। स्वपदं साध्यनिश्चयपरम्। यत्र साध्यनिर्णयेच्छानन्तरं साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षम्, तत्र इच्छायाः प्रत्यक्षात्मकसाध्यनिश्चयविषयकत्वम्, तादृशसाध्यनिश्चयसामानाधिकरण्यं चास्तीति उक्तोभयसंबन्धेन साध्यनिश्चयविशिष्टैव इच्छा भवति, न तु साध्यनिश्चयविशिष्टान्या। अतः तस्याः नोत्तेजकत्वम्। यत्र प्रत्यक्षात्मकसाध्यनिश्चयानन्तरं अनुमितिर्जायतामिति वा प्रत्यक्षान्यज्ञानं जायतामिति वा इच्छा तत्रेच्छायाः साध्यनिश्चयसामानाधिकरण्यसत्त्वेऽपि साध्यनिश्चयविषयकत्वं नास्तीति उक्तोभयसंबन्धेन साध्यनिश्चयविशिष्टान्यत्वस्य इच्छायां सत्त्वात् उत्तेजकत्वोपपत्तिः। ननु प्रत्यक्षात्मकसिद्ध्यनन्तरं अनुमितिर्जायताम् इतीच्छया यत्रानुमितिः तत्र साध्यनिश्चयपदेन अनुमितेरपि ग्रहीतुं शक्यतया अनुमितिविषयकत्वतत्सामानाधिकरण्योभयसंबन्धेन अनुमित्यात्मक-

## गादाधरी

नवस्थानात्। योग्यतायां उत्तेजकत्वमते च द्वित्वादिप्रकारकेच्छायोग्यताया द्वित्वाद्यवच्छिन्नानुपहितत्वेनैव पृथगुत्तेजकता वाच्येति कृतं विस्तरेण।

नन्विच्छाया इच्छाघटितनिरुक्तयोग्यताया वा अभावेन विशिष्टायाः सिद्धेरभावस्य पक्षतात्वे यत्साध्यकयत्पक्षकस्थले कदाचिदपि कस्यचिदिच्छा न जाता तत्र पक्षत्वाप्रसिद्धिरित्याशङ्कायां विश्वविषयिणीं भगवदिच्छामादाय केषांचित्समा-

---

## भावबोधिनी

साध्यनिश्चयविशिष्टत्वमेव अनुमित्सायामस्ति, न तु तदन्यत्वम्। तथा च कथं तत्रेच्छाया उत्तेजकत्वम्?

न च अनुमितिक्षणावच्छेदेन इच्छायाः अनुमितिविशिष्टत्वेऽपि अनुमितिपूर्वक्षणावच्छेदेन अनुमितिविशिष्टान्यत्वमव्याहतम् इति वाच्यम्। भेदस्य व्याप्यवृत्तितया एकक्षणावच्छेदेन विशिष्टत्वसत्त्वे तदन्यक्षणावच्छेदेन विशिष्टान्यत्वस्य वक्तुमशक्यत्वात् इत्याशङ्क्य भेदस्य अव्याप्यवृत्तित्वमतेन अस्य परिष्कारस्य कृतत्वात् न दोष इति समाधत्ते–भेदस्य अव्याप्यवृत्तितयेति। साध्यनिश्चये प्रकृतपक्षधर्मिकत्वस्य प्रकृतसाध्यावगाहित्वस्य च निवेशने प्रयोजनमाह–प्रकृतपक्षकेत्यादिना। यत्र प्रथमतः पर्वते घटाभावधूमाभावयोः निश्चयः ततः पर्वते वह्नितद्व्याप्यधूमव्याप्यघटव्याप्यवत्त्वानां पर्वते वह्नेः घटस्य च अनुमित्योः इष्टसाधनतायाश्च एकं स्मरणम्, ततः पर्वते घटस्य वह्नेश्च समूहालम्बनानुमित्सा, ततः पर्वते घटस्य वह्निव्याप्यधूमस्य चानुमितिः तत्र 'पर्वतो वह्निमान्' इत्यनुमित्यापत्तिः। सिद्धियोग्यतायाः प्रतिबन्धकत्वात् अनुमित्सायाश्च पर्वतविशेष्यकनिश्चयविशिष्टत्वेन अनुत्तेजकत्वात्। अतः साध्यप्रकारकत्वोपादानम्। एवं तत्रैव

दीधितिः

पक्षसाध्यभेदेन च पक्षताया भेदात्पृथक्पृथगेव कार्यकारणभावः। तथा च यत्र सिद्ध्यनन्तरं कदाप्यनुमितिर्न जाता तत्र सिद्ध्यभावमात्रं कारणं न तु तत्रेच्छानवेशोऽपि गौरवात्प्रयोजनाभावाच्च। तेन यत्पक्षकयत्साध्यकानुमितौ कस्यापीच्छा न जाता तत्रोक्तिसाधारण्यमात्रसम्पादनायेश्वरेच्छानिवेशनायासो नोपादेयः।

---

गादाधरी

धानमाक्षेप्तुं तादृशस्थले इच्छाविरहाविशेषितसिद्ध्यभाव एव पक्षतेति समाधत्ते-पक्षसाध्येति। पक्षतावच्छेदकसाध्यतावच्छेदकादिभेदेनेत्यर्थः। पक्षताभेदादिति। सिद्धिपदार्थस्य प्रकृतपक्षतावच्छेदकादिघटितत्वादिति भावः। यत्रेति। यादृशपक्षकयादृशसाध्यकस्थल इत्यर्थः। सिद्ध्यनन्तरं कदाप्यनुमितिर्न जातेति। सिद्धिकाले परामर्शादिसत्त्वे अनुमितसाया असमवधानादिति भावः। सिद्ध्यभावमात्रमिति। इच्छा-

---

भावबोधिनी

पर्वतघटयोः स्थाने वह्निमहानसौ उपादाय पक्षविशेष्यकत्वप्रयोजनं वक्तव्यम्।

ननु सिद्ध्यात्मकपरामर्शानन्तरं अनुमितिद्वयं जायताम् इत्याकारकेच्छाबलात् यत्र क्रमशः अनुमितिद्वयं जायते तत्र द्वितीयानुमितेः कथं निर्वाहः। प्रथमानुमितिक्षणे स्वविषयकत्वस्वसामानाधिकरण्योभयसंबन्धेन प्रथमानुमितिरूपसाध्यनिश्चयविशिष्टत्वात् इच्छायाः तदन्यत्वविरहात् इत्यत्राह– एतद्विशेषणमनन्तर्भाव्येति। स्वविषयसिद्ध्यनुपहितत्वरूपं इच्छाविशेषणम् अनन्तर्भाव्येत्यर्थः। तथा च अनुमितिद्वयं जायताम् इत्याकारिकायाः द्वित्वप्रकारिकेच्छायाः पृथगेवोत्तेजकत्वात्

## गादाधरी

भावविशेषिताया एव सिद्धेरभाव इत्यर्थः। सिद्धिकालीनानुमित्यनुरोधेनैव विशिष्टसिद्ध्यभावस्य पक्षतात्वोपगमादिति भावः। तेनेति। यत्रानुमित्सोत्पत्तिरप्रसिद्धा, प्रसिद्धापि वा नानुमित्युत्पादोपयोगिनी, तत्र विशिष्टाभावस्य पक्षतात्वस्वीकारे प्रयोजनविरहेणेत्यर्थः। उक्तिसाधारण्येति। सर्वत्रैव पक्षतायाः सिषाधयिषाविरहविशिष्टसिद्ध्यभावपदार्थत्वसम्पादनायेत्यर्थः। नोपादेय इति। शब्दैक्यस्यानुपादेयतया कारणतावच्छेदकगौरवसहिष्णुताया अन्याय्यत्वादिति भावः।

---

## भावबोधिनी

तदंशेच्छाबलात् अनुमित्यनन्तरं अनुमितेः नानुपपत्तिः इति भावः।

न च उक्तस्थले अनुमितिद्वयानन्तरं अनुमित्यन्तरं द्वित्वप्रकारकेच्छाबलात् भवतु इति वाच्यम्। तावत्पर्यन्तं इच्छायाः अनवस्थानात्। न च इच्छायोग्यतायाः उत्तेजकतामते तदापत्तिः इति वाच्यम्। द्वित्वप्रकारकेच्छायोग्यतायां द्वित्वावच्छिन्नानुपहितत्वविशेषणं प्रक्षिप्य द्वित्वावच्छिन्नानुपहितद्वित्वप्रकारकेच्छायोग्यता पृथगुत्तेजिका। अनुमितिद्वयानन्तरं तु योग्यतायाः द्वित्वावच्छिन्नानुमितिद्वयोपहितत्वात् नोत्तेजकत्वम् इति समाधेयम्। तदाह—द्वित्वप्रकारकेच्छाबलाच्चेति।

अत्र इच्छायाः उत्तेजकत्वमते द्वित्वप्रकारकेच्छाभिन्नास्वेव इच्छासु निश्चयविशिष्टान्यत्वं पक्षविशेष्यकसाध्यप्रकारकनिश्चयविशिष्टान्यत्वं वा विशेषणम्। योग्यतायाः उत्तेजकतामते च द्वित्वप्रकारकेच्छायामपि निष्कृष्टं तद्विशेषणमिति विशेषः व्याख्याने उक्तः।

पक्षसाध्यभेदेनेति दीधितिग्रन्थमवतारयति—ननु इच्छाया इति। तथा च

भावबोधिनी

इच्छायाः इच्छायोग्यताया वा विरहेण विशिष्टायाः सिद्धेरभावः यदि पक्षता तर्हि यत्साध्यकयत्पक्षकस्थले कदाचिदपि कस्यचित् अनुमित्सा न जाता तत्र पक्षतायाः अप्रसिद्धिः इत्याशङ्कायां कैश्चित् तत्रापि भगवदिच्छामादाय पक्षतानिर्वाह इति समाधानमुक्तम्। तत्तु नोचितम्। पक्षसाध्यभेदेन पक्षतायाः भेदात् तादृशस्थले इच्छाविरहाविशेषितसिद्ध्यभाव एव पक्षता इति स्वीकारसंभवात्। अवश्यं च पक्षसाध्यभेदेन पक्षतायाः भेदः आवश्यकः। सिद्धिपदार्थस्य पक्षसाध्यघटितत्वात् इत्याशयेन पक्षसाध्यभेदेनेति दीधितिग्रन्थः प्रवृत्तः।

दीधितौ तथाचेति। यत्र साध्यनिश्चयानन्तरं कदापि अनुमितिरेव न जाता, तत्र सिद्ध्यभावमात्रं पक्षता न तु इच्छाविरहविशिष्टसिद्ध्यभावः। सिद्धिकाले अनुमित्यनुरोधेनैव सिद्धौ इच्छाविरहविशिष्टत्वनिवेशात्। उक्तस्थले सिद्ध्यनन्तरं अनुमितेरेव अजातत्वात् तत्स्थलीयपक्षताशरीरे इच्छाविरहविशेषणस्य प्रयोजनाभावात् इति भावः।

गादाधर्यां नानुमित्युत्पादोपयोगिनीति। दिवसादिविलम्बेन मध्यवर्तिसिद्ध्या व्यवधानेन वा इति भावः।



# अथ सार्वभौमपक्षता

दीधितिः

यत्तु सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षता ।

---

गादाधरी

परामर्शपूर्वकालोत्पन्नानुमित्सानाशे अनुमित्सान्तरमकल्पयित्वा योग्यतायाश्चोत्तेजकत्वमनादृत्यानुमितिमुपपादयतस्सार्वभौमस्य मतमाह—यत्त्विति । सिषाधयिषानाशे सति यादृशसिद्ध्यनन्तरमनुमितिः तस्याः सिषाधयिषाविरहविशिष्टो यः स्वक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया भिन्नान्तनिवेशात्तदप्रतिबन्धकत्वोपपत्तिः । इच्छाविरहविशिष्टस्वक्षणाव्यवहितत्वोत्तरत्वनिवेशे ज्ञानेच्छयोर्युगपदुत्पादमते यत्रानुमित्सा-

---

भावबोधिनी

सिषाधयिषया सदा विरहितो हि यः स्वक्षण-
तदव्यवहितोत्तरक्षणभवानुमाकान्यया ।
सिषाधयिषया सदा रहितया च सिद्ध्या रहं
कृती वदति पक्षतां स किल सार्वभौमाभिधः ॥

यत्रानुमित्साव्याप्तिस्मरणपक्षधर्मताज्ञानसिद्ध्यात्मकपरामर्शानुमितयः क्रमेण भवन्ति तत्रानुमितेः प्राक्क्षणे अनुमित्साविरहविशिष्टसिद्धेरेव सत्त्वेन तदभावरूपपक्षतायाः कथं सम्पत्तिरिति शङ्कायां परामर्शद्वितीयक्षणे तत्प्राक्क्षणे वा अनुमित्सान्तरोत्पत्त्यैव पक्षतानिर्वाह इत्युपाध्यायाः प्राहुः । सिषाधयिषापदेन सिषा-

गादाधरी

तृतीयक्षणे घटेच्छासिद्धयात्मकपरामर्शौ तदुत्तरं चानुमितिस्तत्र तादृशसिद्धेरिच्छाविरहविशिष्टस्वाधिकरणाप्रसिद्धया इच्छाविरहविशिष्टस्वाधिकरणक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नैव सा सिद्धिः, अनुमित्साविरहविशिष्टतदभावस्य परामर्शक्षणेऽसत्त्वात् तदुत्तरमनुमित्यनुपपत्तिरतः सिषाधयिषापर्यन्तानुधावनम्। अथ वा इच्छासामान्यनिवेशे यत्र घटेच्छानन्तरक्षणे सिद्धयात्मकपरामर्शस्तदनन्तरक्षणे सिद्धावप्रामाण्यग्रहः तदनन्तरमनुमितिः, सिद्धेरप्रामाण्यज्ञानानास्कन्दिताया एवानुमितिप्रतिबन्ध-

---

भावबोधिनी

धयिषायोग्यता विवक्षिता, अतः पक्षतासम्पत्तिरिति मिश्रा आहुरित्येतावता ग्रन्थेन प्रतिपादितम्। सार्वभौमास्तु अनुमित्सान्तरमकल्पयित्वा सिषाधयिषायोग्यतापरत्वं चानादृत्य सिषाधयिषाविरहविशिष्टायां सिद्धौ सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वं विशेषणान्तरं प्रक्षिप्य उक्तस्थले पक्षतामुपपादयन्ति। तन्मतमुपन्यस्यति दीधितौ– यस्त्वित्यादिना। तदाह गादाधर्यां–परामर्शपूर्वकालोत्पन्नेत्यादिना। स्वपदं सिद्धिपरम्। सिषाधयिषाविरहविशिष्टः यः सिद्धयधिकरणक्षणः तदव्यवहितोत्तरक्षणे उत्पत्तिर्यस्याः सा अनुमितिः यस्याः सिद्धेस्तद्भिन्ना या सिषाधयिषाविरहविशिष्टा सिद्धिः तदभावः पक्षता। यत्रानुमित्साव्याप्तिस्मरणपक्षधर्मताज्ञानसिद्धयात्मकपरामर्शानुमितयः क्रमेण भवन्ति तत्र सिद्धेः सिषाधयिषाविरहविशिष्टत्वेऽपि सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वं नास्ति। तादृशसिद्धयव्यवहितोत्तरक्षणेऽनुमितेर्जायमानतया सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वात्। तथा च भिन्नत्वरूपविशेषणाभावप्रयुक्तविशिष्टसिद्धयभावरूपपक्षतायास्तत्र निर्वाहः। स्वक्षणे सिषाधयिषाविरहविशिष्टत्वानुपादाने यत्र सिषाधयिषासिद्धि-

## गादाधरी

कत्वात्तत्र तादृशानुमित्युत्पत्तिक्षणस्येच्छाविरहविशिष्टसिद्धिद्वितीयक्षणाव्यवहितोत्तरतया सिद्धेः स्वपदेनोपादानसम्भवेनाविरोधितयाऽप्रामाण्यग्रहकाले अनुमितिवारणाय सिषाधयिषापदम् । तथासत्यनुमित्युत्पादक्षणस्य सिषाधयिषाविरहविशिष्टसिद्ध्युत्पादक्षणव्यवहितत्वान्नापत्तिः । ज्ञानेच्छायौगपद्यानभ्युपगमेपि यत्रानुमित्साद्वितीयक्षणे सिद्ध्यात्मकपरामर्शस्तदनन्तरं घटेच्छा तत्र तादृशसिद्ध्यधिकरणस्य कस्यापि क्षणस्येच्छाविरहविशिष्टत्वाभावात् स्वपदेनोपादातुमशक्यतया सिषाधयिषाविरहविशिष्टतदभावो नानु-

---

## भावबोधिनी

परामर्शानुमितयः क्रमेण भवन्ति तत्र परामर्शक्षणे पक्षता न स्यात् । अनुमित्युत्पत्तिक्षणस्य सिद्ध्युत्पत्तिक्षणव्यवहिततया स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नायाः सिषाधयिषाविरहविशिष्टायाश्च सिद्धेरेव तदानीं सत्त्वात् । अतः सिषाधयिषाविरहविशिष्टस्वक्षणेत्युक्तम् । तथा सति सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणक्षणः सिद्ध्युत्पत्तिद्वितीयक्षणः परामर्शक्षण एव भवति । तदव्यवहितोत्तरक्षणोत्पत्तिकत्वमनुमितेरस्तीति तदुत्पत्तिकानुमितिकैव सा सिद्धिरिति तादृशानुमितिकभिन्नसिद्ध्यभावरूपपक्षतायाः उपपत्तिः । द्वितीयसिषाधयिषाविरहपदानुपादाने सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावः पक्षतेत्युक्तौ यत्र सिद्धिसिषाधयिषानुमितयः क्रमेण भवन्ति तत्र सिषाधयिषाविरहविशिष्टस्वक्षणः सिद्ध्युत्पत्तिक्षणः तदव्यवहितोत्तरक्षणे सिषाधयिषाक्षणेऽनुमितेरनुत्पत्त्या सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना सिद्धिरेव वर्तते, तदभावरूपपक्षता अनुमितेः प्राक्क्षणे नास्ति इति अनुमित्यनुपपत्तिः स्यात् । अतः सिद्धौ सिषाधयिषाविरहविशिष्टेति विशेषणम् । तदुपादाने च द्वितीयक्षणे सिषाधयिषाविरहरूपविशेषणाभावात् तद्विशिष्टसिद्ध्यभावरूपपक्षतासत्त्वात् अनुमिते-

## गादाधरी

मित्यव्यवहितपूर्वक्षण इति तत्रानुमितिनिर्वाहायेच्छासामान्योपेक्षणमिति तु न साधीयः; घटेच्छोत्पत्तिपूर्वमनुमितिसामग्रीसत्त्वेन अनुमित्यनुत्पादबीजस्य दुर्घटत्वात्। न चानुमित्सापूर्वकालोत्पन्नापेक्षाबुद्ध्यात्मकबाधादिवशात् तदानीमनुमित्युत्पादसम्भवः; अपेक्षाबुद्ध्यनन्तरक्षणे विशेषगुणान्तरानुत्पत्तावेव तस्याः क्षणत्रयावस्थानसंभवात्।

यत्तु यत्रानुमित्सानन्तरं घटेच्छा तदनन्तरं सिद्ध्यात्मकपरामर्शः तदनन्तरं

---

## भावबोधिनी

रुपपत्तिः। तथा च सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता। तत्र प्रथमसिषाधयिषाविरहस्थाने इच्छाविरहविशिष्टेत्येवास्तु अनुमित्सारूपेच्छाविशेषविरहेति किमर्थमिति शङ्कायां तत्प्रयोजनमाह–इच्छाविरहविशिष्टेति। इच्छाविरहविशिष्टः यः स्वक्षणः सिद्ध्यधिकरणक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेत्युक्तौ ज्ञानेच्छयोर्युगपदुत्पादमते यत्र प्रथमक्षणेऽनुमित्सा द्वितीयक्षणे घट इष्टसाधनमिति ज्ञानं तृतीयक्षणे घटेच्छा सिद्ध्यात्मकपरामर्शश्च पर्वतो वह्निव्याप्यधूमवान् वह्निमांश्चेत्याकारकः ततः पर्वतो वह्निमानित्यनुमितिः तत्र सिद्ध्यधिकरणक्षणस्य घटेच्छाविशिष्टतया स्वपदेन सा सिद्धिर्नोपादातुं शक्यते। अपि तु इच्छाविरहविशिष्टयादृशसिद्ध्यधिकरणक्षणाव्यवहितोत्तरक्षणेऽनुमितिरुत्पद्यते सा सिद्धिरेव, तद्भिन्नत्वं च प्रकृतसिद्धेरस्ति, सिषाधयिषाविरहविशिष्टत्वं चास्ति। अतस्तद्विशिष्टसिद्ध्यभावरूपपक्षताया अनुपपत्तिः। सिषाधयिषाविरहविशिष्टेत्युक्तौ तु तत्र सिद्ध्युत्पत्तिक्षणस्य इच्छाविशिष्टत्वेऽपि सिषाधयिषाविरहविशिष्टत्वमस्त्येवेति सिषाधयिषाविरहविशिष्टसिद्ध्युत्पत्तिक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकैव सा सिद्धिः। तद्भिन्ना न भवतीति तद्भिन्नत्वविशिष्टसिद्ध्यभावरूपपक्षताया उपपत्ति-

## गादाधरी

चानुमितिः तत्रानुमित्युत्पादक्षणो नेच्छाविरहविशिष्टतत्सिद्ध्यधिकरणक्षणाव्यवहितोत्तरक्षण इति तादृशसिद्धेस्तदनुमित्यप्रतिबन्धकत्वनिर्वाहाय सिषाधयिषापर्यन्तानुधावनमिति, तदप्यसत्; इच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरत्वशरीरे अव्यवधानप्रतियोगिस्वक्षण एव इच्छाविरहविशिष्टत्वनिवेशस्य प्रयोजनवत्तया उत्तरत्वप्रतियोगिनि स्वक्षणे तद्विशिष्टत्वस्यानिवेशनीयतया उक्तानुमित्युत्पत्तिक्षणस्य इच्छाविरहविशिष्टतत्सिद्ध्यधिकरणक्षणाव्यवहिततया तादृशसिद्ध्युत्पादक्षणोत्तरतया च तादृशसिद्धेरिच्छाविरहविशिष्ट-

---

## भावबोधिनी

रिति भावः। यत्र क्रमेण सिषाधयिषाघटेच्छासिद्ध्यात्मकपरामर्शानुमितयः तत्र सिद्ध्युत्पत्तिद्वितीयक्षणस्येच्छाविरहविशिष्टतया पक्षताया इच्छासामान्यनिवेशेऽपि निर्वाहादाह–ज्ञानेच्छयोरिति। द्वितीयक्षणे घटेच्छासिद्ध्यात्मकपरामर्शोभयसत्त्वे सिद्धेः सिषाधयिषाविरहविशिष्टत्वाभावान्न दोष इति तृतीयक्षणे इत्युक्तम्।

ज्ञानेच्छयोर्यौगपद्यानुपगमेऽप्याह–अथ वेति। इच्छासामान्यनिवेशे यत्रादौ घटेच्छा तदनन्तरक्षणे सिद्ध्यात्मकपरामर्शः तदनन्तरक्षणे पर्वतो वह्निमानिति निश्चयोऽप्रमेति सिद्धावप्रामाण्यग्रहः तदनन्तरमनुमितिः जायते, अप्रामाण्यज्ञानानास्कन्दिताया एव सिद्धेरनुमितिविरोधित्वात् तत्र इच्छाविरहविशिष्टः स्वक्षणः सिद्ध्युत्पत्तिद्वितीयक्षणः अप्रामाण्यग्रहक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वात् तादृशसिद्धेः तादृशानुमितिकभिन्नसिद्ध्यभावरूपपक्षतायाः अप्रामाण्यग्रहपूर्वक्षणे सत्त्वात् अप्रामाण्यग्रहोत्पत्तिकालेऽनुमित्यापत्तिः। तद्वारणाय सिषाधयिषापदम्। तथा सति सिषाधयिषाविरहविशिष्टस्वक्षणः सिद्ध्युत्पत्तिक्षणः तदव्यवहितक्षणेऽनुमितेरनुत्पत्त्या सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नैव सा सिद्धिः तदभावरूपपक्षताविरहान्नाप्रामाण्यग्रहोत्पत्तिकालेऽनुमित्यापत्तिरिति

## भावबोधिनी

भाव:। अनुमितिं घटयति-सिद्धावप्रामाण्येति ।

इच्छासामान्यमुपेक्ष्य सिषाधयिषापदोपादानस्य प्रयोजनान्तरं वदतां मतमनूद्य दूषयति-ज्ञानेच्छायौगपद्यानभ्युपगमेऽपीति । यत्र प्रथमक्षणेऽनुमित्सा द्वितीयक्षणे सिद्ध्यात्मकपरामर्शः तृतीयक्षणे घटेच्छा चतुर्थक्षणेऽनुमितिः तत्र सिद्ध्युत्पत्तिक्षणस्यानुमित्सात्मकेच्छाविशिष्टत्वात् सिद्ध्युत्पत्तिद्वितीयक्षणस्य घटेच्छाविशिष्टत्वात् इच्छाविरहविशिष्टस्वक्षणाप्रसिद्ध्या स्वपदेन इयं सिद्धिर्नोपादातुं शक्यते इति इच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नैवेयं सिद्धिः घटेच्छाक्षणे सिषाधयिषाविरहविशिष्टा चेति विशिष्टसिद्ध्यभावरूपपक्षताविरहात् चतुर्थक्षणेऽनुमित्यनुपपत्तिः । अतः सिषाधयिषापदम् । तदुपादाने च सिषाधयिषाविरहविशिष्टस्वक्षणः तृतीयक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वात् सिद्धेः तादृशानुमितिकभिन्नसिद्ध्यभावस्याक्षततया अनुमितेर्नानुपपत्तिरिति तेषामाशयः। तन्मतं न युक्तम्। घटेच्छोत्पत्तेः पूर्वकालेऽनुमितिसामग्र्याः सत्त्वेन घटेच्छोत्पत्तिकाल एवानुमित्युत्पत्तिसंभवेनेदृशस्थलस्यैवाप्रामाणिकत्वात् । न चानुमित्सापूर्वक्षणोत्पन्नापेक्षाबुद्ध्यात्मकबाधनिश्चयरूपप्रतिबन्धवशात् तृतीयक्षणेऽनुमितिर्न जायत इति वाच्यम्। अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वमते तदनन्तरक्षणे विशेषगुणोत्पत्त्यनङ्गीकारात् ।

सिषाधयिषापदस्य प्रयोजनान्तरं वदतां मतमनुवदति - यत्तु इति। यत्र आदौ अनुमित्सा तदनन्तरं घटेच्छा तदनन्तरं सिद्ध्यात्मकपरामर्शः तदनन्तरं चानुमितिः तत्र इच्छाविरहविशिष्टः सिद्ध्यधिकरणक्षणः सिद्ध्युत्पत्तिद्वितीयक्षणः अर्थात् अनुमित्युत्पत्तिक्षण एव तदव्यवहितोत्तरक्षणेऽनुमितेरुत्पत्तिर्नास्ति इति तत्रत्या सिद्धिः इच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नैव,

गादाधरी

स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया अनुमित्यनिर्वाहविरहात् । सिषाधयिषाविरहविशिष्टत्वं स्वक्षणस्य स्वाधिकरणदेशावच्छेदेन बोध्यम् । तेन सिषाधयिषावतोपि कालस्य सिषाधयिषानधिकरणदेशावच्छेदेन सिषाधयिषाविरहविशिष्टत्वात् यत्र क्रमेण सिषाधयिषासिद्धिपरामर्शानुमितयः तत्र सिषाधयिषाविरहविशिष्टत्वविशेषणेनोपपाद्यस्य अनुमित्युत्पत्तिक्षणनिष्ठाव्यवधानस्यैवानुपपत्तितादवस्थ्यमिति निरस्तम् । प्रतियोगिवैयधिकरण्यस्याभावविशेषणतामादृत्य सिषाधयिषाधिकरणक्षणवारणं पुनरनु-

---

भावबोधिनी

तदभावरूपपक्षताया अनुमितिपूर्वमभावात् अनुमितेरनुपपत्तिः। सिषाधयिषाविरहविशिष्टेत्युक्तौ च सिषाधयिषाविरहविशिष्टः स्वक्षणः सिद्ध्युत्पत्तिक्षणोऽपि तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकैव सा सिद्धिरिति तस्या अप्रतिबन्धकत्वात् तद्भिन्नसिद्धेरेव प्रतिबन्धकत्वात् तद्भिन्नसिद्ध्यभावरूपपक्षतायाः अनुमितिपूर्वं सद्भावान्नानुमित्यनुपपत्तिरिति भावः ।

तदप्यसदित्यादि । स्वक्षणाव्यवहितोत्तरत्वं स्वक्षणाव्यवहितत्वे सति स्वक्षणोत्तरत्वम् । स्वक्षणाव्यवहितत्वं च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वम् । स्वक्षणोत्तरत्वं स्वाधिकरणक्षणध्वंसाधिकरणत्वम् । तत्राव्यवहितत्वप्रतियोगिस्वक्षण एव सिषाधयिषाविरहविशिष्टत्वनिवेशनं प्रयोजनवत्, न तु उत्तरत्वप्रतियोगिस्वक्षणे । तथा हि यत्र सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयः तत्र पक्षतासंपत्तये हि स्वक्षणे सिषाधयिषाविरहविशिष्टत्वं विशेषणम् दत्तम् । यदि उत्तरत्वप्रतियोगिस्वक्षणे तद्विशेषणं स्यात् तदा स्वक्षणाव्यवहितः सन् सिषाधयिषाविरहविशिष्टस्वक्षणोत्तरो यः क्षणः तदुत्पत्तिकानुमितिकभिन्नसिद्ध्यभावः पक्षतेत्युक्तौ उक्तस्थले सिद्ध्यधिकरणोत्पत्तिक्षणाव्यवहितत्वात् अनुमित्युत्पत्तिक्षणस्य

## गादाधरी

पादेयम्। प्रतियोगिपदेन सिषाधयिषाविरहप्रतियोगिन एव विशिष्यावश्यं विवक्षणीयतया सिषाधयिषायाः सिषाधयिषात्वेन निवेशनमुपेक्ष्य सिषाधयिषाविरहप्रतियोगित्वेन निवेशस्य शिरोवेष्टनेन नासिकास्पर्शनतुल्यत्वात्। सिषाधयिषानधिकरणत्वनिवेशने च सिषाधयिषाविरहांशवैयर्थ्यात्। वक्ष्यमाणक्षणत्वनिवेशनव्यावृत्त्यसङ्गतेश्च सर्वेषामेव क्षणानां सिषाधयिषाविरहविशिष्टपूर्वपूर्वक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणतया तादृशध्वंसानधिकरणत्वरूपाव्यवहितत्वाश्रयक्षणाप्रसिद्धिः अतः सिषाधयिषाविरह-

---

## भावबोधिनी

अव्यवहितत्वविशिष्टोत्तरक्षणोत्पत्तिकत्वमनुमितेर्नास्तीति तदुत्पत्तिकानुमितिकभिन्नैव सा सिद्धिरिति तदभावरूपपक्षताया निर्वाहो न स्यात्। अव्यवहितत्वप्रतियोगिस्वक्षणे सिषाधयिषाविरहविशिष्टत्वनिवेशे च सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितः सन् स्वक्षणोत्तरो यः क्षणः तदुत्पत्तिकानुमितिकभिन्नसिद्ध्यभाव इति फलति। तथा सति सिषाधयिषाविरहविशिष्टस्वक्षणः सिद्ध्युत्पत्तिद्वितीयक्षणः परामर्शक्षणः तदव्यवहितत्वं अनुमित्युत्पत्तिक्षणस्य तथा सिद्ध्युत्पत्तिक्षणात्मकस्वक्षणोत्तरत्वं च तस्यास्तीति तदुत्पत्तिकानुमितिकैव सा सिद्धिरिति उक्तस्थले पक्षतानिर्वाहः। इत्थं च इच्छासामान्यनिवेशे यत्रानुमित्साघटेच्छासिद्ध्यात्मकपरामर्शानुमितयः क्रमेण भवन्ति तत्र इच्छाविरहविशिष्टः सिद्धिक्षणः अनुमित्युत्पत्तिक्षणः तदव्यवहितः सिद्ध्युत्पत्त्युत्तरक्षणश्च स एव, तदुत्पत्तिकानुमितिकैव सा सिद्धिरिति तद्भिन्नसिद्ध्यभावरूपपक्षतायाः सिषाधयिषात्वेनेच्छाया अनिवेशेऽपि निर्वाहात् नोक्तस्थले सिषाधयिषापदप्रयोजनं संगच्छत इति भावः।

एवं च सिषाधयिषाविरहविशिष्टस्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणं स्वाधिकरणक्षणध्वंसाधिकरणं च यः क्षणः तदुत्पत्तिकानुमितिकभिन्न-

## भावबोधिनी

मितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेति सिद्धम्।

स्वाधिकरणदेशावच्छेदेनेति। स्वाधिकरणदेशः तत्तदात्मादिः।

तेन सिषाधयिषावतोऽपीति। यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः तत्र पक्षतासंपत्तये हि सिषाधयिषाविरहविशिष्टत्वं स्वक्षणे निवेशितम्। तन्निवेशेऽपि तत्र सिद्ध्युत्पत्तिक्षणस्य सिषाधयिषावतोऽपि सिद्ध्यनधिकरणात्मावच्छेदेन सिषाधयिषाविरहविशिष्टतया तदव्यवहितत्वमेवानुमित्युत्पत्तिक्षणस्येति सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नैव सा सिद्धिरिति तदभावरूपपक्षता न निर्वहेत्। अतः सिद्धिक्षणस्य सिद्ध्यधिकरणदेशावच्छेदेन सिषाधयिषाविरहविशिष्टत्वं विवक्षणीयम्। तथा सति स्वक्षणपदेन सिद्ध्युत्पत्तिक्षणो न ग्रहीतुं शक्यते, तस्य सिद्ध्यधिकरणात्मावच्छेदेन सिषाधयिषावत्तया सिषाधयिषाविरहविशिष्टत्वाभावात्। अपि तु परामर्शक्षण एव, तदा सिषाधयिषानाशात् परामर्शक्षणाव्यवहितत्वं चानुमित्युत्पत्तिक्षणस्यास्तीति तदुत्पत्तिकानुमितिका सिद्धिरेव सा, तद्भिन्नसिद्ध्यभावश्च तत्रास्तीति पक्षताया निर्वाह इति भावः। अनुमित्युत्पत्तिक्षणनिष्ठाव्यवधानस्येति। अनुमित्युत्पत्तिक्षणनिष्ठं यत् अव्यवधानं = सिषाधयिषाविशिष्टसिद्धिक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वं तस्येत्यर्थः। अनुपपत्तितादवस्थ्यमिति। आत्मान्तरावच्छेदेन सिषाधयिषाविरहविशिष्टः यः सिद्ध्युत्पत्तिक्षणः तद्ध्वंसाधिकरणपरामर्शक्षणध्वंसाधिकरणत्वात् अनुमित्युत्पत्तिक्षणस्येति भावः।

केचित्तु—सिषाधयिषाविरहे प्रतियोगिव्यधिकरणेति विशेषणं देयम्। अत उक्तस्थले सिषाधयिषावति क्षणे आत्मान्तरावच्छेदेन विद्यमानः सिषाधयिषाविरहः प्रतियोगिसामानाधिकरण इति प्रतियोगिव्यधिकरणसिषाधयिषाविरहविशिष्टः

## गादाधरी

विशिष्टक्षणे स्वाधिकरणत्वनिवेशः। स्वपदं भेदप्रतियोगितत्तत्सिद्धिव्यक्तिपरम्। सिद्धिसामान्यपरत्वे सर्वेषामेव क्षणानां पूर्वपूर्वसिद्ध्यधिकरणकालध्वंसाधिकरणकालध्वंसाधिकरणतया पूर्ववदप्रसिद्ध्यापत्तेः। प्रथमविशिष्टान्तस्य व्यावृत्तिस्थले सिषाधयिषापूर्वभाविनः कस्यचित् स्थूलकालस्य परामर्शोत्पत्तिकाले विनाशे पूर्वकालावच्छेदेन सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणतादृशकालध्वंसाधिकरणपरामर्शोत्पत्ति-

---

## भावबोधिनी

स्वक्षणः सिद्ध्युत्पत्तिद्वितीयक्षण एव तदव्यवहितत्वमनुमितेरस्तीति पक्षतामुपपादयन्ति। तन्मतं दूषयति–प्रतियोगिवैयधिकरण्यस्येति। प्रतियोगित्वस्य केवलान्वयितया प्रतियोगिवैयधिकरण्याप्रसिद्धिवारणाय सिषाधयिषाविरहप्रतियोग्यनधिकरणं सिषाधयिषाविरहाधिकरणं यः क्षणः इति रीत्या निवेशनीयम्। सिषाधयिषानधिकरणेत्यस्य स्थाने सिषाधयिषाविरहप्रतियोग्यनधिकरणेति निवेशस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वादित्यर्थः। ननु सिषाधयिषानधिकरणेत्येव निवेश्यतामित्याशङ्क्य तथा सति सिषाधयिषाविरहांशनिवेशवैयर्थ्यात् मूलविरोध इत्याह–सिषाधयिषानधिकरणत्वनिवेशने चेति। सिषाधयिषाविरहांशत्यागेऽपि दोषमाह–वक्ष्यमाणेति। यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः तत्र सिद्धिपर्यन्तस्थायिस्थूलकालमादाय पक्षताविरहवारणाय क्षणत्वनिवेशः। स च सिषाधयिषानधिकरणत्वनिवेशने न संगच्छते। तादृशस्थूलकालस्य सिषाधयिषाधिकरणत्वादिति भावः।

सिषाधयिषाविरहविशिष्टक्षणे स्वाधिकरणत्वनिवेशस्य प्रयोजनमाह–सर्वेषामेव क्षणानामिति। तथा च स्वाधिकरणत्वानिवेशे सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेत्युक्तौ यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः तत्र सिषाधयिषाविरहविशिष्टस्वक्षणपदेन

## गादाधरी

क्षणध्वंसाधिकरणस्यानुमित्युत्पत्तिक्षणस्य सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणकालाव्यवहितोत्तरत्वानुपपत्तिः, अतः कालपदमुपेक्ष्य क्षणपदोपादानम्। न च सिषाधयिषाविरहविशिष्टस्वनिरूपिताधिकरणत्वनिवेशे उक्तस्थूलकालस्य विभिन्नक्षणावच्छेदेन सिषाधयिषाविरहसिद्ध्युभयाधिकरणत्वेपि सर्वदैव विशेष्याभावविशेषणाभावान्यतरप्रयुक्तविशिष्टाभाववत्तया विशिष्टाधिकरणत्वासम्भवात् क्षणत्वनिवेशमन्तरेणैव व्यावृत्तिः सम्भवतीति वाच्यम्; सिषाधयिषापूर्वक्षणादेः सिद्धिक्षणादेश्च प्रत्येकं विशिष्टाभावावच्छेदकत्वेपि तदुभयानुगमकान्यतरत्वावच्छिन्नस्य एकक्षणावच्छिन्नत्वाविशेषितसामानाधिकरण्यसंबन्धेन सिषाधयिषाविरहविशिष्टायाः सिद्धेरधिकरणता-

---

## भावबोधिनी

परामर्शक्षणं गृहीत्वा तद्ध्वंसाधिकरणक्षणध्वंसाधिकरणत्वमनुमितिक्षणस्य पूर्वमुपपादितम्। तन्न घटते। स्वपदानुपादाने सिषाधयिषाविरहविशिष्टः क्षणः सिषाधयिषापूर्वक्षणः तद्ध्वंसाधिकरणक्षणध्वंसाधिकरणत्वमेव अनुमित्युत्पत्तिक्षणस्यास्तीति तदनधिकरणत्वरूपाव्यवहितत्वं अनुमित्युत्पत्तिक्षणस्य नास्ति। किं बहुना सिषाधयिषाविरहविशिष्टक्षणपदेन सिषाधयिषापूर्वक्षणग्रहणे सिषाधयिषोत्तरक्षणस्य तदव्यवहितत्वमेव वर्तते इति अव्यवहितत्वाश्रयक्षणस्यैवाप्रसिद्धिः। न च सिषाधयिषोत्पत्तिक्षणस्य सिषाधयिषापूर्वक्षणाव्यवहितत्वमस्तीति वाच्यम्। तदानीं सिषाधयिषाविरहविशिष्टपदेन सिषाधयिषापूर्वतृतीयक्षणमादाय तदव्यवहितत्वस्यैव भावात्। अतः स्वाधिकरणक्षणेत्युक्तम्। तदुक्तौ च सिषाधयिषापूर्वक्षणानां सिषाधयिषाविरहविशिष्टत्वेऽपि सिद्ध्यधिकरणत्वाभावात्, सिषाधयिषाविरहविशिष्टः सिद्ध्यधिकरणभूतः क्षणः पूर्वोक्तस्थले परामर्शोत्पत्तिक्षण एव तदव्यवहितत्वमनुमित्युत्पत्तिक्षणस्य वर्तते इति नाप्रसिद्धिरिति भावः।

स्वपदमिति। स्वपदं भेदप्रतियोगिनी स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकाया

## भावबोधिनी

सिद्धिः तद्व्यक्तिपरं न तु सिद्धिसामान्यपरम्। अन्यथा यत्र सिषाधयिषा-सिद्धिपरामर्शानुमितयः तत्र सिषाधयिषाविरहविशिष्टपूर्वकालिकसिद्ध्यनन्तरक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वमेव एतत्सिद्ध्यधिकरणक्षणस्यास्तीति तदनधिकरणत्वरूपाव्यवहितत्वाश्रयक्षणाप्रसिद्धिः स्यात्। भेदप्रतियोगिसिद्धिव्यक्तिपरत्वे तु एतत्सिद्ध्यधिकरणक्षणस्यैव ग्राह्यतया तदव्यवहितत्वं तत्सिद्ध्यधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वरूपं परामर्शक्षणस्यास्तीति नाप्रसिद्धिरिति भावः। स्वकालेत्यनुक्त्वा स्वक्षणेत्युक्तेः प्रयोजनमाह–**प्रथमविशिष्टान्तस्येति**। प्रथमविशिष्टान्तव्यावृत्तिस्थलं यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः क्रमेण भवन्ति तत् स्थलम्। तथा च प्रथमक्षणपदानुपादाने सिषाधयिषाविरहविशिष्टस्वाधिकरणकालध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वोत्तरो यः क्षणः तदुत्पत्तिकानुमितिकभिन्नसिद्ध्यभावः पक्षतेति स्यात्। तथा सति यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः क्रमेण भवन्ति तत्र, सिषाधयिषापूर्वक्षणमारभ्य सिद्ध्युत्पत्तिक्षणपर्यन्तस्थायी यः स्थूलकालः तस्यापि सिषाधयिषापूर्वक्षणावच्छेदेन सिषाधयिषाविरहविशिष्टतया सिद्ध्यधिकरणतया च स्वकालपदेन ग्रहीतुं शक्यतया तादृशस्थूलकालध्वंसाधिकरणीभूतः यः परामर्शोत्पत्तिक्षणः तद्ध्वंसाधिकरणत्वमेवानुमित्युत्पत्तिक्षणस्यास्तीति तदनधिकरणत्वरूपाव्यवहितत्वाभावात् अव्यवहितोत्तरक्षणोत्पत्तिकानुमितिका सा सिद्धिर्नभवतीति तादृशानुमितिकभिन्नैव सा सिद्धिरिति तदभावरूपपक्षताया स्तत्रानुपपत्तिः स्यात्। कालपदस्थाने क्षणपदनिवेशे तु उक्तस्थले सिषाधयिषाविरहविशिष्टस्वक्षणपदेन परामर्शोत्पत्तिक्षणस्यैव ग्राह्यतया तादृशक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वरूपमव्यवहितत्वमनुमित्युत्पत्तिक्षणस्यास्तीति नानुपपत्तिरिति भावः। **पूर्वकालावच्छेदेनेति**। पूर्वक्षणावच्छेदेन सिषाधयिषाविरहविशिष्टः यः सिद्ध्यधिकरणभूतः स्थूलकालः तद्ध्वंसेत्यर्थः।

## भावबोधिनी

**न च सिषाधयिषाविरहविशिष्टस्वनिरूपितेति।** स्थूलकालव्यावर्तनाय हि क्षणपदमुपात्तम्। क्षणपदानुपादानेऽपि स्थूलकालव्यावृत्तिः संभवति। तथा हि-सिषाधयिषाविरहविशिष्टः सिद्ध्यधिकरणश्च यः कालः इति न निवेश्यते। किन्तु सिषाधयिषाविरहविशिष्टस्वनिरूपिताधिकरणतावान् यः कालः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभाव इति विवक्ष्यते। सिषाधयिषासिद्धिपरामर्शानुमितीनां क्रमेणोत्पत्तिस्थले सिषाधयिषापूर्वक्षणमारभ्य सिद्ध्युत्पत्तिक्षणपर्यन्तस्थायी यः स्थूलकालः तत्र पूर्वक्षणावच्छेदेन सिषाधयिषाविरहरूपविशेषणसत्त्वेऽपि सिद्धिरूपविशेष्यं नास्ति। सिद्ध्युत्पत्तिक्षणावच्छेदेन सिद्धिरूपविशेष्यसत्त्वेऽपि सिषाधयिषाविरहरूपविशेषणं नास्ति। तथा च विशेष्याभावप्रयुक्तस्य वा विशेषणाभावप्रयुक्तस्य वा विशिष्टाभावस्यैव स्थूलकाले सत्त्वात् तद्विरोधात सिषाधयिषाविरहविशिष्टस्वनिरूपिताधिकारणतावान् कालः न स्थूलकालः अपि तु परामर्शोत्पत्तिक्षण एव, तदव्यवहितत्वं चानुमित्युत्पत्तिक्षणस्य वर्तते इति पक्षतानिर्वाहात् क्षणपदोपादानं मास्तु इति भावः। **व्यावृत्तिरिति।** स्थूलकालस्येति अत्राप्यन्वेति। **सिषाधयिषापूर्वक्षणादेरिति।** अयं भावः-यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः तत्र सिषाधयिषापूर्वक्षणमारभ्य सिद्ध्युत्पत्तिक्षणपर्यन्तस्थायी यः स्थूलकालः तस्य सिषाधयिषापूर्वक्षणावच्छेदेन सिद्धिरूपविशेष्याभावप्रयुक्तविशिष्टाभावोस्ति, सिद्ध्युत्पत्तिक्षणावच्छेदेन सिषाधयिषाविरहरूपविशेषणाभावप्रयुक्तविशिष्टाभावोस्ति इत्यनेन तत्तत्क्षणत्वावच्छिन्नस्य स्थूलकालस्थितविशिष्टाभावावच्छेदकत्वमिति लभ्यते। परं तु सिषाधयिषापूर्वक्षण-सिद्ध्युत्पत्तिपूर्वक्षणोभयसाधारणं यत् तत्तत्क्षणद्वयान्यतरत्वं तदवच्छिन्नस्य न विशिष्टाभावावच्छेदकत्वम्, तदन्यतरत्वावच्छिन्ने सिषाधयिषाविरहस्य सिद्धेश्चोभयोः सत्त्वात् सिषाधयिषविरहविशिष्टत्वमेकसिद्ध्यधिकरणतावच्छेदकत्वसंभवात्। न च सिद्धौ सिषाधयिषाविरहविशिष्टत्वमेक-

## गादाधरी

वच्छेदकत्वे बाधकाभावात् एकरूपावच्छिन्नस्यैव विरुद्धोभयावच्छेदकत्वे विरोधात्; अन्यथा तत्काले एकतराभावप्रयुक्तस्य सिषाधयिषाविरहसिद्ध्युभयाभावस्य सर्वक्षणावच्छेदेनैव सत्त्वे विरोधेन तदुभयत्वावच्छिन्नाया अधिकरणताया अनिर्वाहात् तत्र तदुभयवत्ताप्रतीतेरप्यनुपपत्तेः। एवं चैकक्षणावच्छिन्नसामानाधिकरण्यसंबन्धेन एक-

---

## भावबोधिनी

क्षणावच्छिन्नैकात्मवृत्तिसंबन्धेन, तथा च एकस्यापि क्षणस्योभयानधिकरणतया कथं तादृशसंबन्धेन सिषाधयिषाविरहविशिष्टसिद्धिनिरूपिताधिकरणत्वं स्थूलकालस्य संभवेदिति। वाच्यम्। प्रकृते एकात्मवृत्तित्वमात्रसंबन्धेन सिषाधयिषाविरहविशिष्टत्वस्य विवक्षितत्वात् एकक्षणावच्छिन्नत्वस्य संबन्धमध्येऽप्रवेशात्। तथा चान्यतरत्वविशिष्टावच्छेदेन स्थूलकाले सिषाधयिषाविरहविशिष्टसिद्धिनिरूपिताधिकरणतायाः सत्त्वात् तादृशस्थूलकालध्वंसाधिकरणपरामर्शक्षणध्वंसाधिकरणत्वेनानुमित्युत्पत्तिक्षणस्य सिषाधयिषाविशिष्टस्वकालाव्यवहितत्वं न निर्वहतीति तन्निर्वाहाय कालपदमुपेक्ष्य क्षणपदोपादानमिति भावः। प्रत्येकमिति। तत्तत्क्षणत्वावच्छिन्नस्येत्यर्थः। बाधकाभावादिति। तथा च येन रूपेण विशिष्टाभावावच्छेदकत्वं तदन्यरूपेण विशिष्टावच्छेदकतायां न विरोध इत्यर्थः। तदाह—एकरूपावच्छिन्नस्यैवेति। अन्यथेति। भिन्नरूपावच्छिन्नस्यापि विरुद्धोभयावच्छेदकत्वे यदि विरोधस्तदेत्यर्थः। तथा च स्थूलकाले पूर्वक्षणावच्छेदेन सिद्ध्यभावप्रयुक्तस्य सिषाधयिषाविरहसिद्ध्युभयाभावस्य, उत्तरक्षणावच्छेदेन सिषाधयिषाविरहाभावप्रयुक्तस्य सिषाधयिषाविरहसिद्ध्युभयाभावस्य सत्त्वेन तद्विरोधात् स्थूलकालः सिषाधयिषाविरहसिद्ध्युभयवान् इति प्रतीत्यनुपपत्तिः स्यात्। तदुपपत्तये च तत्तत्क्षणत्वविशिष्टावच्छेदेनोभयाभावः तदन्यतरत्वविशिष्टावच्छेदेनोभयवत्त्वमिति स्वीकार्यम्। तद्दृष्टान्तेन तत्तत्क्षणत्वविशिष्टस्य विशिष्टाभावावच्छेदकत्वम्, अन्यतरत्वविशिष्टस्य विशिष्टाधिकरणतावच्छेद-

## गादाधरी

विशिष्टापराधिकरणत्वमेवोक्तस्थूलकाले न संभवति, तस्यैकक्षणावच्छिन्नोभयाधिकरणत्वनियतत्वात् क्षणघटिततादृशसंबन्धनिवेशापेक्षया च स्वाधिकरणे क्षणत्वनिवेश एवोचितः।

वस्तुतस्तु—केवलसामानाधिकरण्यसंबन्धेनैकविशिष्टापराभावो यदा कदाचिद्विशेषणवति विशेष्याभावादेव न तु विशेषणाभावात्, तथा च सिषाधयिषा-

---

## भावबोधिनी

कत्वं सिध्यतीति भावः। एवंचेति। यत्र यत्र एकक्षणावच्छिन्नैकाधिकरणवृत्तित्वसंबन्धेन एकविशिष्टापराधिकरणत्वं तत्र तत्र एकक्षणावच्छिन्नोभयाधिकरणत्वमिति व्याप्तेः, व्यापकस्य एकक्षणावच्छिन्नोभयाधिकरणत्वस्याभावे व्याप्यं एकक्षणावच्छिन्नैकाधिकरणवृत्तित्वसंबन्धेन एकविशिष्टापराधिकरणत्वमपि निवर्तेत। एकक्षणावच्छिन्नत्वविशिष्टैकाधिकरणवृत्तित्वसंबन्धेन एकविशिष्टापराधिकरणता तु तदविशेषितोभयाधिकरणतायां सत्यामपि भवतीति स्थूलकालस्यापि विशिष्टसिद्ध्यधिकरणतया तदव्यवहितत्वोपपादनाय क्षणपदोपादानमित्याशयः।

ननु संबन्धमध्ये एकक्षणावच्छिन्नत्वमेव निवेश्यताम्, तावतैव स्थूलकालवारणसंभवात्, तथा च स्वक्षणेत्यत्र क्षणपदं मास्तु इत्यत्राह—क्षणघटितेति। क्षणघटिततादृशसंबन्धः एकक्षणावच्छिन्नैकात्मवृत्तित्वस्वरूपः संबन्धः। स्वाधिकरण इति। सिद्ध्यधिकरण इत्यर्थः। उचित इति। लाघवादिति भावः।

ननु सिषाधयिषा—सिद्धिपरामर्शानुमितीनां क्रमेण उत्पत्तिस्थले सिषाधयिषापूर्वक्षणमारभ्य सिद्ध्युत्पत्तिक्षणपर्यन्तस्थायिस्थूलकालमादाय क्षणपदस्य प्रयोजनकथनं

## भावबोधिनी

न संगच्छते। सिषाधयिषापूर्वक्षणस्य सिद्ध्यनधिकरणत्वेन सिद्ध्यनधिकरणस्य कालस्य सिद्ध्यधिकरणे देशे व्यापककाले च सिद्धिवृत्तौ अनवच्छेदकत्वात् स्थूलकालनिष्ठसिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणतायां सिषाधयिषापूर्वक्षणस्य अवच्छेदकत्वासंभवात्, तत्साधारणान्यतरत्वावच्छिन्नस्यापि विशिष्टसिद्ध्यधिकरणतावच्छेदकत्वं न संभवति। इत्थं च क्षणद्वयसाधारणान्यतरत्वविशिष्टावच्छेदेन स्थूलकालस्य सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणत्वम् अभ्युपगम्य यत्प्रयोजनमुक्तं क्षणपदोपादानस्य तन्न सङ्गच्छत इत्यत आह–वस्तुतस्त्विति। अयमाशयः–एकक्षणावच्छिन्नत्वाविशेषितसामानाधिकरण्यसंबन्धेन एकविशिष्टापराभावः यदा कदाचित् विशेषणवति विशेष्याभावादेव भवति न तु विशेषणाभावात्; विशेषणस्य सत्त्वात्। तथा च पूर्वक्षणावच्छेदेन सिषाधयिषाविरहरूपविशेषणवति स्थूलकाले सिषाधयिषासिद्ध्योः द्वयोः सत्त्वक्षणे सिद्धिरूपविशेष्यसत्त्वात् तदभावप्रयुक्तविशिष्टाभावस्यासंभवात् स्थूलकालस्य सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणत्वं अक्षतमेव। तथा च तादृशस्थूलकालाव्यवहितत्वमनुमित्युत्पत्तिक्षणस्य नास्तीति अनुमितेः पूर्वक्षणे पक्षता न निर्वहतीति तन्निर्वाहाय कालपदमुपेक्ष्य क्षणपदमुपात्तमिति भावः। वायौ केवलसामानाधिकरण्यसंबन्धेन रूपविशिष्टद्रव्यत्वाभावस्य विशेषणाभावादेव उपपादनीयतया यदा कदाचित् विशेषणवति इत्युक्तम्। वायौ तु कदापि रूपात्मकविशेषणवत्त्वं नास्ति। अतस्तत्र विशेषणाभावप्रयुक्तः विशिष्टाभावः। यदा कदाचित् विशेषणवति विशिष्टाभावस्तु विशेष्याभावप्रयुक्त इति तात्पर्यम्। व्यापककालः स्थूलकालः। स्ववृत्ताविति। सिद्धिनिष्ठाधेयतायामित्यर्थः। तत्साधारणरूपावच्छिन्नस्येति। सिषाधयिषापूर्वक्षणसाधारणं यत् अन्यतरत्वं तदवच्छिन्नस्येत्यर्थः। न क्षतिरिति। न स्थूलकालस्य सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणत्वानुपपत्तिरित्यर्थः।

**गादाधरी**

विरहवत्यपि स्थूलकाले सिषाधयिषासिद्ध्युभयसत्त्वक्षणे न सिषाधयिषाविरहरूप-विशेषणाभावात्तद्विशिष्टसिद्ध्यभाव इति तादृशकालस्य विशिष्टाधिकरणत्वं निराबाधमेव। एतेन सिषाधयिषापूर्वक्षणस्य सिद्ध्यनधिकरणत्वेन स्वानधिकरणकालस्य देशे व्यापककाले च स्ववृत्तावनवच्छेदकत्वेन स्थूलकाले सिषाधयिषाविशिष्टसिद्धिवृत्तो नावच्छेदकत्वमिसि तत्साधारणरूपावच्छिन्नस्य विशिष्टसिद्ध्यधिकरणत्वावच्छेदकत्वासम्भवेऽपि न क्षतिः।

---

**भावबोधिनी**

यद्यपीत्यादि। यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः क्रमेण भवन्ति, तत्र सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणकालपदेन सिषाधयिषापूर्वक्षणप्रभृतिसिद्ध्युत्पत्तिक्षणपर्यन्तस्थायिस्थूलकालमादाय तदव्यवहितोत्तरक्षणोत्पत्तिकत्वम् अनुमितेर्नास्तीति तादृशक्षणोत्पत्तिकानुमितिकभिन्नसिद्धेरेव सत्त्वात् तदभावरूपपक्षतायाः अनुपपत्तिमुपपाद्य क्षणपदोपादानेन अनुपपत्तिपरिहारः कृतः। इदानीं क्षणपदानुपादानेऽपि सिषाधयिषाविरहवैशिष्ट्यावच्छिन्नत्वनिरूपिताधिकरणतावत्कालाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावः पक्षता इति विवक्षणे पूर्वोक्तस्थले स्थूलकालस्य सिद्ध्यधिकरणत्वं न सिषाधयिषाविरहवैशिष्ट्यावच्छिन्नम्। सिद्धिकाले सिषाधयिषाया एव सत्त्वात्। अतः सिषाधयिषाविरहवैशिशिष्ट्यावच्छिन्नसिद्ध्यधिकरणतावान् कालः सिद्ध्युत्पत्तिद्वितीयक्षणः। अर्थात् परामर्शोत्पत्तिक्षण एव भवति। तदव्यवहितोत्तरक्षणोत्पत्तिकत्वमनुमितेरस्तीति तत्रत्या सिद्धिः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना न भवतीति तद्भिन्नसिद्ध्यभावरूपपक्षतायाः निर्वाहात् क्षणपदोपादानं मास्तु इति शङ्कितुराशयः। तथापीति। उक्तविवक्षायां क्षणपदस्य वैयर्थ्येऽपि सिषाधयिषाविरहवैशिष्ट्योपलक्षिते काले सिद्ध्यधिकरणत्वनिवेशे पूर्वक्षणावच्छेदेन सिषाधयिषाविरहवैशिष्ट्याश्रये स्थूलकाले उत्तरक्षणे सिद्ध्यधिकरणतायाः

गादाधरी

यद्यपि सिषाधयिषाविरहवैशिष्ट्यावच्छेदेन स्वाधिकरणत्वनिवेशे तादृशकाले कालान्तरीणसिषाधयिषाविरहवैशिष्ट्यस्य तन्निष्ठसिद्ध्यधिकरणतावच्छेदकत्वात् तादृशकालमादायोक्तदूषणानवकाशः, तथापि सिषाधयिषाविरहवैशिष्ट्योपलक्षिते सिद्ध्यधिकरणत्वनिवेशाभिप्रायेण क्षणपदोपादानम्। यद्यपि क्रियादिरूपतादृशस्थूलकालस्यान्त्यक्षणावच्छिन्नस्य क्षणतया क्षणत्वनिवेशनेपि तद्दोषतादवस्थ्यम्; तथापि स्ववृत्तियावद्ध्वंसविशिष्टत्वरूपक्षणत्वाद्यवच्छेदेन सिषाधयिषाविरहविशिष्टत्वनिवेशान्न दोषः।

---

भावबोधिनी

सत्त्वात् अनुमित्युत्पत्तिक्षणस्य तद्व्यवहितत्वात् पक्षतायाः अनुपपत्तिः। तद्वषपस्यर्थं क्षणपदोपादानम् इति समाधातुरभिप्रायः।

ननु क्षणपदे उपात्तेऽपि क्रियादिरूपस्य स्थूलकालस्य अन्त्यक्षणावच्छेदेन क्षणत्वमस्तीति स्थूलकालमादाय पूर्वोक्तदोषः तदवस्थः इति शङ्कते— यद्यपीति। समाधत्ते-तथापीति।

वस्तुतस्तु स्वाधिकरणतायां सिषाधयिषाविरहवैशिष्ट्यावच्छिन्नत्वनिवेशतात्पर्यग्राहकं क्षणपदं न तु क्षणत्वस्य लक्षणे प्रवेशः। अतो नानुपपत्तिरित्याह- सिषाधयिषाविरहविशिष्टक्षण इति।

अव्यवहितोत्तरक्षणोत्पत्तिरिति। सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकेत्यत्र अनुमितेः सिषाधयिषाविरहविशिष्टसिद्धिक्षणाव्यवहितोत्तरक्षणोत्पत्तिः सिद्ध्यधिकरणावच्छेदेन विवक्षिता। अन्यथा महाप्रलयानङ्गीकारे सर्वासामेव सिद्धीनां अव्यवहितोत्तरक्षणे असंख्याकेषु आत्मसु यस्मिन् कस्मिंश्चि-

गादाधरी

सिषाधयिषाविरहविशिष्टक्षणे स्वाधिकरणत्वमवश्यं सिषाधयिषाविरहवैशिष्ट्यावच्छिन्नं तादृशस्थूलकाले स्वाधिकरणत्वस्य च न तदवच्छिन्नत्वनियम इति सिषाधयिषाविरहवैशिष्ट्यावच्छेदेन स्वाधिकरणत्वलाभायैव क्षणपदोपादानम्, न तु क्षणत्वमपि निशिष्टमिति तु तत्त्वम्। अव्यवहितोत्तरक्षणोत्पत्तिः स्वाधिकरणावच्छेदेन बोध्या

भावबोधिनी

........................................

दात्मनि अवश्यमनुमितेरुत्पत्त्या सर्वा अपि सिद्धयः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिका एव भवन्ति। तद्भिन्ना च सिद्धिः सिषाधयिषाद्वयोत्पत्तिमध्यक्षणोत्पन्ना सिद्धिरेव। तत्र सिद्धिक्षणस्य आद्यस्य द्वितीयस्य वा सिषाधयिषाविशिष्टतया स्वपदेन तस्याः सिद्धेरुपादातुमशक्यत्वात्। भिन्नान्तविशेषण विशिष्टायाः सिषाधयिषाद्वयमध्यक्षणोत्पन्नसिद्धेः सिषाधयिषाविरहविशिष्टत्वासंभवात् सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्धिरूपप्रतियोग्यप्रसिद्ध्या तदभावरूपपक्षताया अप्रसिद्धिः। महाप्रलयाङ्गीकारेऽपि यादृशसिद्ध्यनन्तरं कस्यापि अनुमित्युत्पत्तिं विनैव महाप्रलयो जातः तादृशचरमसिद्धिरेव भिन्नान्तविशेषणाक्रान्ता सिद्धिरिति तस्या एव प्रतिबन्धकत्वं स्यात्। तद्भिन्नानां पूर्वतनसिद्धीनां तु अव्यवहितोत्तरक्षणे कुत्रापि आत्मनि अनुमितेरुत्पत्त्या भिन्नान्तविशेषणानाक्रान्ततया प्रतिबन्धकत्वं न स्यात्। अतः अव्यवहितोत्तरक्षणोत्पत्तिः स्वाधिकरणावच्छेदेन विवक्षणीया। तद्विवक्षणे च सिषाधयिषाविरहविशिष्टसिद्ध्यव्यवहितोत्तरक्षणे अन्यस्मिन्नात्मनि अनुमित्युत्पत्तावपि तादृशसिद्ध्यधिकरणे आत्मनि अनुमितेः अनुत्पत्त्या भिन्नान्तविशेषणाक्रान्ता सिद्धिः यादृशसिद्ध्यनन्तरं तदात्मनि अनुमितिर्न जायते सा सिद्धिरपि। तदभावरूपपक्षतायाः यादृशसिद्ध्यनन्तरं तदात्मनि अनुमितिर्जायते तत्र सत्त्वात् न काचिदनुपपत्तिः।

## गादाधरी

अनुमितिपदं वा स्वसमानाधिकरणानुमितिपरम् । तेन महाप्रलयानभ्युपगमे सकलसिद्धीनामुत्तरमेवासंख्यानामात्मनां कस्मिंश्चिदवश्यमनुमित्युत्पत्त्या सिषाधयिषाविरहविशिष्टतादृशस्वक्षणानन्तरक्षणोत्पन्नानुमितिकभिन्ना, सिषाधयिषाद्वयोत्पत्तिमध्यक्षणोत्पन्ना ईश्वरीया च सिद्धिरेव । सिषाधयिषाविरहविशिष्टतदधिकरणक्षणाप्रसिद्ध्या स्वपदेन तस्या एवोपादातुमशक्यत्वात्तस्याश्च सिद्धेरिच्छाविरहविशिष्टत्वाभावात्सिषाधयिषाविरहविशिष्टनिरुक्तसिद्धिभिन्नसिद्धेरप्रसिद्धिः । महाप्रलयस्य प्रामाणिकत्वेऽपि यदुत्तर-

---

## भावबोधिनी

अथ वा अनुमितिपदं स्वसामानाधिकरणानुमितिपरम् । अन्यस्मिन्नात्मनि जायमानाया अनुमितेः एतदात्मगतसिद्धिसमानाधिकरणत्वाभावात् न पूर्वोक्तरीत्या अप्रसिद्धिः ।

सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरेत्यत्र अव्यवहितपदस्य प्रयोजनमाह—अव्यवधानांशनिवेशेनेति । तथा च अव्यवहितपदानुपादाने सिषाधयिषाविरहविशिष्टस्वक्षणोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता स्यात् । तथा सति कस्या अपि सिद्धेः अनुमितिप्रतिबन्धकत्वं न स्यात् । प्रतिबन्धकत्वेनाभिमतसिषाधयिषाविरहविशिष्टसिद्धिनाशोत्तरं तदात्मनि अनुमित्युत्पत्तिसंभवात् तादृशसिद्धेः स्वक्षणोत्तरक्षणोत्पत्तिकानुमितिकतया तद्भिन्नत्वासंभवात् । अव्यवहितपदोपादाने च सिषाधयिषाविरहविशिष्टसिद्धिक्षणाव्यवहितोत्तरक्षणे अनुमितेरनुत्पत्त्या भिन्नान्ताक्रान्ततया सिद्धेः प्रतिबन्धकत्वोपपत्तिः । उत्तरपदनिवेशस्य प्रयोजनमाह—स्वपूर्वसकलक्षणानामेवेति । उत्तरपदानुपादाने सिषाधयिषाविरहविशिष्टस्वक्षणाव्यहितक्षणोत्पत्तिकानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता स्यात् । तत्र अव्यवहितत्वं स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्व-

गादाधरी

मनुमितिः क्वचिदपि नोत्पत्स्यते; तादृश्याश्चरमसिद्धेरेव प्रतिबन्धकत्वं स्यान्नान्यस्या इत्यनुपपत्तेर्नावकाशः। अव्यवधानांशनिवेशेन प्रतिबन्धकसिद्धिनाशोत्तरं तदधिकरणे अनुमित्युत्पत्तावपि न तस्याः प्रतिबन्धकत्वानुपपत्तिः। स्वपूर्वसकलक्षणानामेव स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणरूपत्वस्वक्षणाऽव्यवहितत्वाक्रान्ततयाऽनादौसंसारे सर्वासामेव सिद्धीनां पूर्वं कदाचित्स्वाधिकरणे अनुमित्युत्पत्त्या सिषाधयिष-

---

भावबोधिनी

रूपम्। तच्च प्रतिबन्धकीभूतसिद्धिपूर्वक्षणसाधारणम्। तथा च तादृशाव्यवहितत्वाक्रान्ते सिद्धेः पूर्वकाले कदाचित् तदात्मनि अनुमितेः अवश्यमुत्पन्नतया स्वक्षणाव्यवहितक्षणोत्पत्तिकानुमितिका एवं प्रायः सर्वास्सिद्धयः। तद्भिन्ना तु सिद्धिः द्वयोः सिषाधयिषयोः मध्ये उत्पन्ना सिद्धिरेव। तादृशसिद्ध्यधिकरणक्षणस्य सिषाधयिषाविशिष्टतया स्वपदेन तादृशसिद्धेरुपादानासंभवात्। तथा च सिषाधयिषाविरहविशिष्टस्वक्षणाऽव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना सिषाधयिषाद्वयमध्यभवा सिद्धिः। तस्यास्तु सिषाधयिषाविरहविशिष्टत्वाभावात् सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितक्षणोत्पत्तिकानुमितिकभिन्नायाः सिषाधयिषाविरहविशिष्टायाः सिद्धेरप्रसिद्ध्या तदभावरूपपक्षतायाः अप्रसिद्धिः स्यात्। तद्वारणाय उत्तरपदमुपात्तम्। तदुपादाने च यादृशसिषाधयिषाविरहविशिष्टसिद्ध्युत्तरक्षणे अनुमितिर्न जायते सैव सिद्धिः भिन्नान्तविशेषणाक्रान्ता सिषाधयिषाविरहविशिष्टा च भवतीति नाप्रसिद्धिः। सिद्धिपूर्वक्षणानां सिद्धिक्षणाऽव्यवहितत्वेऽपि सिद्धिक्षणोत्तरत्वाभावात् पूर्वक्षणेषु अनुमित्युत्पत्त्या आपादितायाः अप्रसिद्धेः नावकाशः। उत्तरत्वं च स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपम्।

स्वक्षणाऽव्यवहितोत्तरक्षणेत्यत्र द्वितीयक्षणपदस्य प्रयोजनमाह– सकलसिद्धीनामे-

## गादाधरी

योरन्तरोत्पन्ना सिद्धिरेव सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितक्षणोत्पन्नानुमितिकभिन्ना, तस्याः सिषाधयिषाविरहविशिष्टत्वाभावादप्रसिद्धिः अत उत्तरेति। स्वाधिकरणक्षणध्वंसाधिकरणार्थकम्। सकलसिद्धीनामेव स्वक्षणाव्यवहितोत्तरत्वाक्रान्तस्वतृतीयक्षणविनष्टानुमित्युत्पत्तिपर्यन्तस्वपूर्वस्थायिस्थूलकालोत्पन्नानुमितिकतया पूर्ववदप्रसिद्धिरिति द्वितीयक्षणपदम्। अनुमित्यात्मकसिद्धीनां स्वाव्यवहितोत्तरक्षणवृत्तित्वात्मकानुमितिकतया अप्रतिबन्धकत्वापत्तिः अत उत्पत्तिनिवेशः।

---

## भावबोधिनी

वेति। तथा च द्वितीयक्षणानुपादाने सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरकालोत्पत्तिकानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता। तथा सति प्रतिबन्धकीभूतसिद्धेरप्रसिद्धिः। प्रतिबन्धकत्वेनाभिमतसिद्ध्युत्तरत्वाक्रान्तः तादृशसिद्ध्यव्यवहितत्वाक्रान्तश्च कालः तादृशसिद्धेः पूर्वं यस्मिन् क्षणे आत्मनि अनुमितिरुत्पन्ना तत्क्षणमारभ्य सिद्ध्युत्तरक्षणपर्यन्तस्थायी स्थूलकालोऽपि भवति। तादृशस्थूलकालोत्पत्तिकानुमितिकत्वमेव सर्वासामेव सिद्धीनामस्तीति भिन्नान्तविशेषणाक्रान्तायाः सिद्धेरप्रसिद्धिः। सिषाधयिषाद्वयमध्यभवायाः सिद्धेः भिन्नान्तविशेषणाक्रान्तत्वेऽपि सिषाधयिषाविरहविशिष्टत्वाभावात् भिन्नान्तविशेषणसिषाधयिषाविरहोभयविशिष्टायाः सिद्धेरप्रसिद्ध्या तदभावरूपपक्षतायाः अप्रसिद्धिः स्यात्। तद्वारणाय द्वितीयक्षणपदोपादानम्। तदुपादाने च स्थूलकालस्य क्षणत्वाभावात् नोक्तदोषः। स्वक्षणाव्यवहितोत्तरेत्यादि। स्वं–सिद्धिः। स्वक्षणाव्यवहितोत्तरत्वाक्रान्तः स्वतृतीयक्षणे विनष्टः पूर्वम् अनुमित्युत्पत्तिपर्यन्तं स्थायी च यः स्थूलकालः तदुत्पन्नानुमितिकतया इत्यर्थः। पूर्ववदप्रसिद्धिरिति। सिषाधयिषाद्वयमध्यभवसिद्धेः सिषाधयिषाविरहविशिष्टत्वाभावात्। तदितरसिद्धीनां भिन्नान्त-

## गादाधरी

यद्यपि स्वान्यत्वस्यानुमितिविशेषणत्वेऽप्येतद्दोषवारणसंभवः, तथाप्यपेक्षाबुद्धेः क्षणत्रयावस्थायित्वस्य तदुत्तरं समानाधिकरणविशेषगुणान्तरोत्पादस्य चोपगमे यत्रापेक्षाबुद्ध्यात्मकानुमितिद्वितीयक्षणे तादृशी प्रत्यक्षादिरूपा सिद्धिस्तस्याश्चतुर्थक्षणे अनुमित्युत्पादवारकं तत्प्रतिबन्धकत्वं नोपपद्येतेति गुरुशरीरायाः उत्पत्तेर्निवेशनम्। अथानुमित्यव्यवहितप्राक्क्षणवृत्तिसिद्धिभिन्नत्वं निरुक्तक्षणोत्पत्तिकानुमितिकभिन्नसिद्धित्वापेक्षया लघीयः कथमुपेक्षितमिति? तथा सति यत्र क्रमेण सिद्धिसिषाधयिषानुमितयः, तत्रेच्छाजनकसामग्र्या अनुमितिप्रतिबन्धकत्वेनैव इच्छोत्पत्तिक्षणेऽनुमिति-

---

## भावबोधिनी

विशेषणाविशिष्टत्वात् विशेषणद्वयविशिष्टायाः प्रतिबन्धकीभूतायाः सिद्धेः अप्रसिद्धिरित्यर्थः। उत्पत्तिपदप्रयोजनमाह–अनुमित्यात्मकसिद्धीनामिति। उत्पत्तिपदानुपदाने सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणवृत्त्यनुमितिकभिन्नसिद्ध्यभावः पक्षता इत्युक्तौ अनुमित्युत्पत्त्यनन्तरं अनुमितेरनुत्पत्त्या अनुमित्यात्मकसिद्धेः इष्टमनुमितिप्रतिबन्धकत्वं नोपपद्येत। स्वपदेन अनुमित्यात्मकसिद्धेः उपादाने तदव्यवहितोत्तरक्षणे स्वात्मकानुमितेः विद्यमानतया स्वक्षणाव्यवहितोत्तरक्षणवृत्त्यनुमितिकत्वमेव अनुमित्यात्मकसिद्धेरस्ति इति भिन्नान्तविशेषणाभावात्। अतः उत्पत्तिनिवेशः। तन्निवेशे च अनुमित्यव्यवहितोत्तरक्षणे अनुमितेर्विद्यमानत्वेऽपि उत्पत्तिर्नास्तीति तत्क्षणोत्पत्तिकानुमितिकभिन्नत्वं अनुमितेरक्षतमिति प्रतिबन्धकत्वनिर्वाहः।

ननु उत्पत्तिपदं मास्तु। अनुमितौ स्वान्यत्वं विशेषणं प्रक्षिप्य सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वान्यानुमितिकभिन्नसिद्ध्यभावः पक्षतेति विवक्षणे पूर्वोक्तदोषवारणं संभवति। अनुमित्यव्यवहितोत्तरक्षणे स्वात्मकानुमितेः

भावबोधिनी

सत्त्वेऽपि स्वान्यस्याः अनुमितेः अवृत्तेः इत्याशयेन शङ्कते—यद्यपीति। समाधत्ते—तथापीति। ये अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वं तदुत्तरं तदधिकरणे आत्मनि विशेषगुणान्तरोत्पत्तिं च स्वीकुर्वन्ति तेषां मते यत्र अपेक्षाबुद्ध्यात्मकानुमितेः द्वितीयक्षणे अपेक्षाबुद्धिरूपा प्रत्यक्षात्मिका सिद्धिः, तस्याः चतुर्थक्षणे अनुमित्युत्पत्तिं प्रति प्रतिबन्धकत्वनिर्वाहाय उत्पत्तिपदनिवेशनम्। तदनिवेशे सिषाधयिषाविरहविशिष्टस्वक्षणपदेन प्रत्यक्षात्मकसिद्ध्युत्पत्तिक्षणस्य ग्रहणे तदव्यवहितोत्तरक्षणे पूर्वोत्पन्नायाः अनुमितेः प्रत्यक्षभिन्नायाः वर्तमानतया स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वान्यानुमितिकैव प्रत्यक्षरूपा सिद्धिः। तादृशानुमितिकभिन्ना सा न भवतीति तस्याः प्रतिबन्धकत्वं नोपपद्येत। उत्पत्तिपदनिवेशे तु प्रत्यक्षात्मकसिद्ध्यव्यवहितोत्तरक्षणे अनुमितेः आद्यक्षणसंबन्धरूपा उत्पत्तिर्नास्तीति तादृशक्षणोत्पत्तिकानुमितिकभिन्नत्वं प्रात्यक्षिकसिद्धेः अस्तीति प्रतिबन्धकत्वनिर्वाहः। सिद्ध्यव्यवहितोत्तरक्षणवृत्तित्वनिर्वाहाय अनुमितेः अपेक्षाबुद्धित्वमाश्रितम्। प्रतिबन्धकीभूतानुमितेः अपहारणाय सिद्धेः अपेक्षाबुद्धित्वमुक्तम्। अपेक्षाबुद्ध्यनन्तरं विशेषगुणान्तरस्य अनुत्पादे प्रत्यक्षसिद्ध्यव्यवहितोत्तरक्षणवृत्तित्वं अनुमितेः न संभवतीति तदुत्तरं गुणान्तरोत्पादस्य उपगमे इत्युक्तम्। गुरुशरीराया इति। स्वाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणं यः क्षणः तद्वृत्तित्वरूपायाः उत्पत्तेर्गुरुशरीरत्वादिति भावः।

अथेति। यत्र अनुमित्सानाशानन्तरं अनुमितिर्जायते, अर्थात् सिषाधयिषासिद्धिपरामर्शानुमितयः यत्र भवन्ति, तत्र अनुमितेः पूर्वक्षणे सिषाधयिषाविरहविशिष्टायाः सिद्धेरेव सद्भावात् पक्षतायाः अनुपपत्तिः इत्याशङ्कायां सिद्धौ सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वरूपं विशेषणं प्रक्षिप्य पक्षतायाः उपपत्तिः सार्वभौमैः कृता। तत्र लाघवात् अनुमित्यव्यव

## गादाधरी

वारणसंभवात् अव्यवहितपूर्वत्वघटकानुमित्युपत्तिक्षणे तदव्यवहितप्राक्क्षणे वा सिषाधयिषाविरहविशिष्टत्वस्य तद्वारणानुरोधेन निवेशवैयर्थ्यात्तादृशस्थलीयसिद्धेस्तृतीयक्षणेऽनुमित्युत्पत्त्यविरोधितायाः सिद्धौ सिषाधयिषाविरहवैशिष्ट्यनिवेशमन्तरेणैवोपपत्तेः मूलोपात्तं सिद्धिविशेषणं सहकृतान्तं निष्प्रयोजनं स्यादिति मूलविरोधः। तथा चेच्छा-

---

## भावबोधिनी

हितपूर्वक्षणवृत्तिसिद्धिभिन्नत्वमेव विशेषणं दीयताम्। तावतैव उक्तस्थले सिद्धेः अनुमित्यव्यवहितपूर्वक्षणवृत्तितया पूर्वक्षणवृत्तिसिद्धिभिन्नत्वरूपविशेषणाभावात् विशिष्टाभावरूपा पक्षता निर्वहति। कुतः निरुक्तक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नत्वरूपं गुरुतरं विशेषणं दीयते इति आक्षेप्तुराशयः। समाधत्ते—तथा सतीत्यादिना। अनुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नसिद्ध्यभावस्यैव पक्षतात्वसंभवात् मूलोपात्तं सिद्धिविशेषणं सिषाधयिषाविरहसहकृतत्वं अस्मिन् पक्षे व्यर्थं स्यात्। तथा च मूलविरोधः प्रसज्यते।

न च यत्र सिद्धि-सिषाधयिषानुमितयः क्रमेण भवन्ति, तत्र सिषाधयिषोत्पत्तिकाले अनुमित्यापत्तिः। तत्रत्यसिद्धेः अनुमित्यव्यवहितपूर्वक्षणवृत्तितया पूर्वक्षणवृत्तिसिद्धिभिन्नत्वरूपविशेषणाभावात् पूर्वक्षणवृत्तिसिद्धिभिन्नसिद्ध्यभावस्य सिद्ध्युत्पत्तिक्षणे सद्भावात्। तद्वारणाय च अनुमित्युत्पत्तिक्षणे अनुमित्यव्यवहितप्राक्क्षणे वा सिषाधयिषाविरहविशिष्टत्वमवश्यं निवेशनीयम्। उक्तस्थले अनुमित्युत्पत्तिक्षणस्य वा तदव्यवहितप्राक्क्षणस्य वा सिषाधयिषाविरहविशिष्टत्वाभावात् सिषाधयिषाविरहविशिष्टानुमित्युत्पत्तिक्षणाव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नैव सिद्धिः वर्तते। तदभावरूपपक्षताविरहात् सिषाधयिषोत्पत्तिकाले न अनुमित्यापत्तिः। एवञ्च इच्छाजनकसहकृतान्तस्य प्रयोजनसद्भावात् न मूलविरोध इति वाच्यम्।

## गादाधरी

जनकसामग्र्या अनुमितिप्रतिबन्धकत्वमतेऽपि मूलाविरोधोपपादनाय उक्तगुरुशरीरादरः। अत्र कल्पे वक्ष्यमाणानुपपत्तिं तृतीयक्षणसाधारणाव्यवहितोत्तरत्वं निवेश्योद्धर्तुंकामस्त्वगत्या इच्छासामग्र्या अनुमित्यप्रतिबन्धकत्वमतमाश्रित्यैव मूलोपात्तं सहकृतान्तं सार्थकयिष्यतीत्यवधेयम्। अनुमितिव्यवहितपूर्वोत्पन्नस्याव्यवहितपूर्वस्थायिनो घटज्ञानादेरविरोधितोपपत्तये सिद्धिपदम्।

---

## भावबोधिनी

सामग्र्याः अनुमितिप्रतिबन्धकत्वात् सिषाधयिषोत्पत्तिकाले अनुमितेः वारणसंभवात् सिषाधयिषाविरहविशिष्टत्वस्य वैयर्थ्यात् मूलविरोधस्य परिहर्तुमशक्यत्वात्। तस्मात् मूलोपात्तस्य सहकृतान्तस्य सार्थक्यसम्पादनाय सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वरूपं गुरुतरं विशेषणमुपात्तम्। अस्मिन् पक्षे सिद्धौ सिषाधयिषाविरहसहकृतेति विशेषणानुपादाने यत्र सिद्धिसिषाधयिषानुमितयः क्रमेण भवन्ति तत्र द्वितीयक्षणे पक्षता न स्यात्। सिषाधयिषाविरहविशिष्टस्वक्षणपदेन सिद्ध्युत्पत्तिक्षणस्यापि ग्रहीतुं शक्यतया तदव्यवहितोत्तरक्षणे अनुमितेरनुत्पत्त्या तस्याः सिद्धेः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वात्। सिद्धौ सिषाधयिषाविरहसहकृतेति विशेषणे दत्ते तु अनुमितिपूर्वक्षणे सिद्धौ सिषाधयिषाविशिष्टतया सिषाधयिषाविरहरूप विशेषणाभावात् तद्विशिष्टसिद्ध्यभावरूपा पक्षता निर्वहति। न चैवं अनुमित्यव्यवहितप्राक्क्षणवृत्तिसिद्धिभिन्नत्वविशेषणपक्षेऽपि सिद्धिसिषाधयिषानुमितिस्थले द्वितीयक्षणे पक्षतासंपत्त्यर्थं सहकृतान्तं सिद्धिविशेषणमिति वक्तुं शक्यते। तस्याः सिद्धिव्यक्तेः अनुमित्यव्यवहितपूर्ववृत्तितया तद्भिन्नत्वाभावादेव अनुमित्यव्यवहितपूर्ववृत्तिसिद्धिभिन्नसिद्ध्यभावस्य द्वितीयक्षणेऽपि सत्त्वात् सहकृतान्तविशेषणं विनापि पक्षतायाः सम्पत्तेरित्याशयः।

भावबोधिनी

ननु यदि इच्छासामग्र्याः अनुमितिप्रतिबन्धकत्वात् इच्छोत्पत्तिकाले अनुमितिर्वार्यते, तर्हि तृतीयक्षणसाधारणाव्यवहितोत्तरत्वनिवेशकल्पे सिद्धिसिषाधयिषानुमितीनां क्रमेणोत्पत्तिस्थले सिषाधयिषोत्पत्तिकाले इच्छासामग्र्याः प्रतिबन्धकत्वादेव अनुमितिवारणसंभवात् तद्वारणफलकतया उत्तरक्षणे सिषाधयिषाविरहविशिष्टत्वविशेषणस्य सार्थक्योपपादनं दीधितिकारकृतं न सङ्गच्छते। एवमुत्तरक्षणे सिषाधयिषाविरहविशिष्टत्ववैयर्थ्ये सति सिद्धौ तद्विशेषणमपि व्यर्थम्। तादृशसिद्धेः स्वाव्यवहितोत्तरतृतीयक्षणोत्पत्तिकानुमितिकतया अप्रतिबन्धकत्वेन द्वितीयक्षणे पक्षतासंपत्तेः तृतीयक्षणेऽनुमितेर्निर्वाहात्। तथा च तत्सार्थक्यप्रतिपादकदीधितिग्रन्थविरोध इत्यत्राह–अत्र कल्प इत्यादिना। तथा च तस्य दीधितिग्रन्थस्य इच्छासामग्र्या अनुमित्यप्रतिबन्धकत्वमाश्रित्य प्रवृत्तत्वात् नासङ्गतिरिति भावः। अत्र कल्पे इत्यस्य द्वितीयक्षणसाधारणाव्यवहितोत्तरत्वनिवेशकल्पे इत्यर्थः। वक्ष्यमाणानुपपत्तिमित। यत्र अनुमित्सानाशकाले प्रात्यक्षिकसिद्धिः, अथ परामर्शानुमिती तत्र पक्षताविरहप्रसङ्गात् इति ग्रन्थेन वक्ष्यमाणानुपपत्तिमित्यर्थः।

नन्वेवं 'तदा अनुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नसिद्ध्यभावमात्रं पक्षतेति चेत्' इति दीधितिग्रन्थविरोधः। तत्कल्पे सहकृतान्तविशेषणपरित्यागात् इत्यत आह–अगत्येति। तथा च इच्छासामग्र्याः अनुमितिप्रतिबन्धकतामते वैयर्थ्येन तत्परित्यागेऽपि, तदप्रतिबन्धकतामतेन मूलग्रन्थस्य प्रवृत्ततया न मूलविरोध इति भावः।

सिद्धिपदस्य प्रयोजनमाह–अनुमितेरिति। सिद्धिपदस्थाने ज्ञानपदनिवेशे यत्र आदौ घटज्ञानम्, ततः वह्निव्याप्यधूमवान् पर्वत इति परामर्शः ततः पर्वतो वह्नि-

दीधितिः

अथ तृतीयक्षणव्यवधायकद्वितीयक्षण एवाव्यवहितत्वपर्यवसानद्यत्राविरलक्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयः सिषाधयिषाविरहो विशेषणमस्तु सिद्धेः; प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेत्? यत्र क्रमेण सिषाधयिषा-

---

भावबोधिनी

मान् इत्यनुमितिः तत्र ज्ञानपदेन घटज्ञानग्रहणें तत्क्षणाव्यवहितोत्तरक्षणे अनुमितेरनुत्पत्त्या सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नं सिषाधयिषाविरहविशिष्टं च ज्ञानं घटज्ञानम्। तस्य परामर्शक्षणे सत्त्वात् तादृशज्ञानाभावरूपपक्षताया अनुपपत्तिः। अतः सिद्धिपदम् साध्यनिश्चयपरम्। तत्र घटज्ञानस्य सत्त्वेऽपि साध्यनिश्चयरूपसिद्धेरभावात् सिद्ध्यभावरूपपक्षताया उपपत्तिरिति भावः।

अवगतेत्यादि। अथेत्यादि दीधितिग्रन्थेन द्वितीयसिषाधयिषाविरहविशेषणप्रयोजनं ज्ञातवतः प्रथमसिषाधयिषाविरहविशेषणप्रयोजनम् अजानतः प्रश्नः अनूद्यते। तथाहि-अव्यवहितोत्तरत्वं तृतीयादिक्षणे अविद्यमानं द्वितीयक्षणमात्रे विद्यमानं स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपम्। तत्र स्वाधिकरणक्षणे सिषाधयिषाविरहविशेषणं किमर्थम् इति प्रश्नः। सिद्धौ सिषाधयिषाविरहरूपविशेषणस्य प्रयोजनं तु यत्र सिद्धिसिषाधयिषानुमितयः तत्र द्वितीयक्षणे पक्षतासंपत्त्यर्थम्। अन्यथा सिषाधयिषाविरहविशिष्टसिद्ध्युत्पत्तिक्षणध्वंसाधिकरणसिषाधयिषाक्षणध्वंसाधिकरणत्वेन अनुमित्युत्पत्तिक्षणस्य सिषाधयिषाविरहविशिष्टसिद्धिक्षणाव्यवहितत्वं नास्तीति तदव्यवहितक्षणोत्पत्तिकानुमितिकभिन्न-

## गादाधरी

अवगतद्वितीयसिषाधयिषाविरहविशेषणप्रयोजनः तत्र संप्रतिपत्तिं प्रदर्शयन् प्रथमसिषाधयिषाविरहविशेषणप्रयोजनं पृच्छति - अथेति । तृतीयक्षणे स्वाधिकरणकालध्वंसाधिकरणकालध्वंसाधिकरणत्वसामान्याभावरूपाव्यवधानाभावस्फुटीकरणाय तृतीयक्षणव्यवधायकत्वं द्वितीयक्षणस्याभिहितम्; तृतीयक्षणव्यवधायकत्वं तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम्, सिद्धिनाशक्षणे सिषाधयिषोत्पत्तौ सिद्ध्युत्तरसिषाधयिषानाशक्षणेऽनुमित्युत्पत्तौ वा विशेष्याभावादेवानुमितिपूर्व

---

## भावबोधिनी

त्वात्. सिद्धेः तदभावरूपपक्षता न स्यात् । सिद्धौ सिषाधयिषाविरहविशेषणे दत्ते तु तत्र द्वितीयक्षणे सिद्धेः सिषाधयिषाविशिष्टतया सिषाधयिषाविरहरूपविशेषणाभावप्रयुक्तविशिष्टाभावरूपपक्षतायाः संपत्तिः । तस्मात् द्वितीयस्य सिषाधयिषाविरहस्य प्रयोजनं ज्ञातम्, प्राथमिकस्य स्वक्षणे सिषाधयिषाविरहस्य प्रयोजनं तु न ज्ञायते इति प्रष्टुरभिप्रायः ।

अत्र दीधितौ द्वितीयक्षणे तृतीयक्षणव्यवधायकत्वकथनस्य तात्पर्यमाह-तृतीयक्षण इति । सिद्धिसिषाधयिषानुमितीनां क्रमेण उत्पत्तिस्थले तृतीयस्य अनुमित्युत्पत्तिक्षणस्य सिषाधयिषाविरहविशिष्टसिद्धिक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वात् तदनधिकरणत्वरूपं अव्यवधानं नास्ति इति वक्तव्यम् । तच्च तदैव वक्तुं शक्यते, यदा सिद्ध्युत्पत्तिक्षणानुमित्युत्पत्तिक्षणयोः मध्ये द्वितीयः क्षणः स्यात् । तादृशः द्वितीयक्षणः अत्र वर्तते इति स्फुटीकरणार्थमेव तृतीयक्षणव्यवधायकत्वं द्वितीयक्षणस्योक्तमिति भावः । द्वितीयक्षणस्य तृतीयक्षणव्यवधायकत्वं नाम तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम् । स्वं-सिद्धिः । स्वाधिकरणक्षणः-प्रथमक्षणः । तद्ध्वंसाधिकरणत्वं द्वितीयक्षणस्य वर्तते । एवं तृतीयक्षणवृत्तेः यः ध्वंसः द्वितीय-

## गादाधरी

पक्षता निर्वहति अतोऽविरलेति । पक्षतासंपत्तय इति । सिद्धौ सिषाधयिषाविरहस्या-विशेषणत्वे उक्तस्थले सिद्धिद्वितीयक्षणे अनुमित्यनुत्पत्त्या तस्याः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वेन सिषाधयिषोत्पत्तिक्षणेऽपि च तादृशसिद्धिसत्त्वेन तदभाव-रूपपक्षताया अनिर्वाहादिति भावः । प्राथमिकस्यिवति । सिषाधयिषाविरह इत्यनुषज्यते । स्वक्षणस्येति विशेषणमित्यनुषज्यते । उत्तरयति–यत्रेति । ज्ञानेच्छयोर्युगपदुत्पादमते सिषाधयिषोत्पत्तिकाले सिद्ध्युत्पादे सिद्धेर्वा परामर्शरूपत्वे परामर्शोत्पत्तिकाले सिषाध-

---

## भावबोधिनी

क्षणध्वंसः तत्प्रतियोगित्वं द्वितीयक्षणे वर्तते । एतादृशव्यवधायकत्वकथनेन सिद्ध्यु-त्पत्तिक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वरूपं सिद्धिक्षणव्यवहितत्वमेव अनुमित्युत्पत्ति-क्षणे वर्तते, न तु तदव्यवहितत्वमिति स्पष्टं ज्ञातुं शक्यत इति भावः । दीधितौ विद्यमानस्य 'अविरलक्रमेण' इत्यस्य प्रयोजनमाह–सिद्धिनाशक्षण इति । तथा च यत्र आदौ सिद्धिः अनन्तरं सिषाधयिषासामग्री अनन्तरं सिषाधयिषा अनन्तरमनु-मितिः, तत्र सिषाधयिषोत्पत्तिक्षणे सिद्धेर्नाशात् विशेष्याभावादेव विशिष्टाभावरूप-पक्षता निर्वहति । एवं यत्र आदौ सिद्धिः ततः सिषाधयिषा ततः परामर्शः ततोऽनुमितिः तत्रापि सिद्धिरूपविशेष्याभावादेव अनुमितेः पूर्वं पक्षता निर्वहति । एवञ्च तत्र सिद्धौ सिषाधयिषाविरहविशेषणस्य प्रयोजनं नास्ति इत्यभिप्रायेण अविरलक्रमेण सिद्धिसिषाधयिषानुमितय इत्युक्तम् । तत्र सिद्धिपदेन सिद्ध्यात्मक-परामर्शो विवक्षितः । अत्र तु अनुमितेः पूर्वक्षणे सिद्धेः सत्त्वात् सिद्धिरूपविशे-ष्याभावप्रयुक्तः विशिष्टाभावः वक्तुं न शक्यते । अतस्तत्र पक्षतासंपत्तये सिद्धौ सिषाधयिषाविरहविशेषणं सार्थकमिति भावः ।

यत्रेत्यादिना दीधितिग्रन्थेन स्वक्षणे सिषाधयिषाविरहरूपविशेषणस्य प्रयोजन-

### गादाधरी

यिषासत्त्वेन विशिष्टाभावो निर्वहतीति क्रमेणेति । अविरलक्रमेणेत्यर्थः । सिषाधयिषासिद्ध्योरन्तरा क्षणैकविलम्बे सिषाधयिषाविरहेण क्षणं विशेष्यापि पक्षत्वानिर्वाहस्य वक्ष्यमाणत्वात् सिद्धिपरामर्शयोः परामर्शानुमित्योर्वा कालव्यवधानेनोत्पत्तौ विशेष्याभावादेव विशिष्टाभावसम्पत्तश्च । सिषाधयिषा-अनुमितित्वप्रकारकेच्छा । अनुमित्यात्मकसिद्धाविच्छायाः स्वविषयसिद्ध्युपहितत्वात् तदुत्तरमनुमित्यन्तरोत्पत्तिरेव न

---

### भावबोधिनी

मुच्यते । तद्विशेषणाभावे स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । तथा सति यत्र आदौ पर्वते वह्निमनुमिनुयाम् इति सिषाधयिषा, ततः पर्वतो वह्निमान् इति प्रत्यक्षरूपा सिद्धिः, ततः पर्वतो वह्निव्याप्यधूमवान् इति परामर्शः ततः पर्वतो वह्निमान् इत्यनुमितिः तत्र तृतीयक्षणे अर्थात् परामर्शोत्पत्तिक्षणे पक्षता न स्यात् । स्वक्षणपदेन सिद्ध्युत्पत्तिक्षणस्य ग्रहीतुं शक्यतया तदव्यवहितोत्तरपरामर्शोत्पत्तिक्षणे अनुमितेरनुत्पत्त्या स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नैव सा सिद्धिः सा च परामर्शक्षणे सिषाधयिषायाः नाशात् सिषाधयिषाविरहविशिष्टा च भवति । अतस्तदभावरूपपक्षता न स्यात् । स्वक्षणे सिषाधयिषाविरहविशिष्टत्वविशेषणे दत्ते तु सिषाधयिषाविरहविशिष्टः सिद्ध्यधिकरणक्षणः परामर्शोत्पत्तिक्षण एव । तदव्यवहितोत्तरक्षणे च अनुमितेरुत्पत्त्या सा सिद्धिः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकैव । तद्भिन्नत्वरूपविशेषणाभावात् तद्भिन्नसिद्ध्यभावरूपा पक्षता निर्वहति इति भावः ।

दीधितौ विद्यमानस्य 'क्रमेण' इत्यस्य प्रयोजनमाह—ज्ञानेच्छयोरिति । क्रमेण इत्यनुक्तौ ज्ञानेच्छयोः युगपदुत्पत्तिरिति मते यत्र सिषाधयिषा सिद्धिश्च

भावबोधिनी

युगपत् ततः परामर्शः ततोऽनुमितिः तत्र परामर्शोत्पत्तिक्षणे सिषाधयिषासत्त्वात् सिषाधयिषाविरहरूपविशेषणाभावात् तद्विरहविशिष्टसिद्ध्यभावरूपपक्षतायाः स्वक्षणे सिषाधयिषाविरहविशिष्टत्वविशेषणाभावेऽपि निर्वाहात् क्रमेणेत्युक्तम्। एवं यत्र आदौ सिषाधयिषा, ततः सिद्धिरूपः समूहालम्बनपरामर्शः ततोऽनुमितिः तत्रापि परामर्शक्षणे सिषाधयिषाविरहरूपविशेषणाभावादेव पक्षतानिर्वाहात् स्वक्षणे सिषाधयिषाविरहविशेषणस्य तत्र प्रयोजनं नास्तीत्याशयेन क्रमेणेत्युक्तमिति भावः। ज्ञानेच्छयोः युगपदनुत्पादमते सिद्धेर्वा परामर्शरूपत्वे इत्युक्तम्। क्रमेणेत्यस्य अविरलक्रमेणेत्यर्थः। तत्र अविरलत्वांशस्य प्रयोजनमाह—सिषाधयिषासिद्ध्योरिति। यत्र आदौ सिषाधयिषा ततः क्षणं विलम्ब्य तृतीयक्षणे सिद्धिः चतुर्थक्षणे परामर्शः पञ्चमक्षणेऽनुमितिः तत्र स्वक्षणे सिषाधयिषाविरहविशिष्टत्वविशेषणे दत्तेऽपि पक्षताया अनिर्वाहः। यतः तत्र सिषाधयिषाविरहविशिष्टः स्वक्षणः सिद्ध्युत्पत्तिक्षणः। तदव्यवहितोत्तरक्षणे अर्थात् परामर्शोत्पत्तिक्षणे अनुमितेरनुत्पत्त्या सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नैव सा सिद्धिः तथा सिषाधयिषाविरहविशिष्टा चेति। एवं यत्र आदौ सिषाधयिषा ततः सिद्धिः ततः क्षणविलम्बेन परामर्शः ततोऽनुमितिः, अथ वा यत्र आदौ सिषाधयिषा, ततः सिद्धिः ततः परामर्शः ततः क्षणविलम्बेन अनुमितिः तत्र सिद्धिरूपविशेष्याभावादेव विशिष्टाभावरूपपक्षतासंपत्तेः स्वक्षणे सिषाधयिषाविरहविशिष्टत्वविशेषणस्य प्रयोजनं न घटते इत्याशयेन अविरलक्रमेण इत्युक्तम् इति भावः।

दीधितौ प्रात्यक्षिकसिद्धीति सिद्धौ प्रात्यक्षिकत्वविशेषणं किमर्थमुपात्तमिति शङ्कायामाह—अनुमित्यात्मकसिद्धाविति। यत्र सिषाधयिषानन्तरं अनुमित्यात्मिका सिद्धिः स्यात् तत्र तदनन्तरं पुनः अनुमितिरेव न स्यात्। सिषाधयिषायाः विषयसिद्ध्या चरितार्थत्वात् इत्यालोच्य प्रात्यक्षिकसिद्धीत्युक्तम्। न च सिद्धि-

गादाधरी

सम्भवतीति प्रात्यक्षिकेति। पक्षतासम्पत्त्यर्थमिति। सिषाधयिषाविरहस्य क्षणविशेष-णस्यानुपादाने तत्रानुमित्युत्पादक्षणस्य सिद्धिक्षणध्वंसाधिकरणपरामर्शोत्पत्तिक्षणध्वं-साधिकरणत्वेन सिद्धिक्षणाव्यवहितत्वविरहात्तादृशसिद्धेरपि प्रतिबन्धकतापत्त्या पक्षता-नुपपत्तिः; तद्विशेषणोपादाने च सिद्ध्युत्पत्तिक्षणस्य सिषाधयिषाविशिष्टतया सिषा-धयिषाविरहविशिष्टस्वक्षणः परामर्शोत्पत्तिक्षण एव तद्ध्वंसाधिकरणकालध्वंसानधि-करणत्वरूपमव्यवधानमनुमित्युत्पादक्षणस्याक्षतमेवेति पक्षतोपपत्तिरिति भावः। एव-

---

भावबोधिनी

विषयकेच्छारूपायां सिषाधयिषायां प्रत्यक्षरूपायाः सिद्धेरपि विषयतया सिषा-धयिषायाः स्वविषयसिद्ध्या चरितार्थत्वम्, कथं तत्र तद्बलात् पुनरनुमितिः इति वाच्यम्। सिषाधयिषापदस्य प्रकृते अनुमितित्वप्रकारकेच्छापरत्वात् तस्यां च प्रत्यक्षसिद्धिः न विषय इत्याशयात्। 'सिषाधयिषाविरहस्ये'त्यादिगादाधर-ग्रन्थाशयः पूर्वमेवोक्तः।

इतः परं स्वक्षणे सिद्धौ च अप्रामाण्यज्ञानाभावविशिष्टत्वं दीधितौ अनुक्तमपि अवश्यं निवेशनीयमित्याह—एवमुभयविधा इत्यादिना। सिद्धौ अप्रामाण्यज्ञाना-भावविशिष्टत्वानुपादाने यत्र आदौ सिद्ध्यात्मकपरामर्शः तदनन्तरं 'इयं सिद्धिः अप्रमा' इत्याकारकं सिद्धिधर्मिकाप्रामाण्यज्ञानम्, ततः अनुमितिः तत्र सिषा-धयिषाविरहविशिष्टस्वक्षणः सिद्ध्युत्पत्तिक्षणः। तदव्यवहितोत्तरक्षणः द्वितीयक्षणः अर्थात् अप्रामाण्यज्ञानोत्पत्तिक्षणः तदुत्पत्तिकानुमितिर्न भवतीति तदुत्पत्तिकानुमितिक-मिन्ना सिद्धिरेव द्वितीयक्षणे वर्तते तदभावरूपपक्षता नास्तीति तृतीयक्षणे अनु-मितिर्न स्यात्। तदर्थं सिद्धौ अप्रामाण्यज्ञानाभावविशिष्टत्वं निवेशनीयम्। तन्निवेशे च द्वितीयक्षणे अप्रामाण्यज्ञानस्य सत्त्वात्, अप्रामाण्यज्ञानाभावरूपविशेषणा-

## गादाधरी

मुभयदिशि अप्रामाण्यज्ञानाभावोपि निवेशनीयः। अविरलक्रमेण यत्र सिद्धितद्धर्मिकाप्रामाण्यज्ञानानुमितयः तत्र द्वितीयक्षणे पक्षतासंपत्तय शेषदिशि तन्निवेशः। प्रथमदिशि तन्निवेशस्तु यत्र क्रमेण भाविसिद्धिधर्मिकाप्रामाण्यज्ञानसिद्धिपरामर्शानुमितयस्तत्र पक्षतासम्पत्त्यर्थमिति। एवं तृतीयक्षणसाधारणाव्यवहितोत्तरत्वमते यत्र क्रमेण सिद्धितद्धर्मिकाप्रामाण्यज्ञानानुमितयस्तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणे तन्निवेशः। सिद्धौ तन्निवेशस्तु द्वितीयक्षणे पक्षतासंपत्तय इति बोध्यम्।

---

## भावबोधिनी

भावात् तद्विशिष्टसिद्ध्यभावरूपपक्षता संपद्यते। स्वक्षणे अप्रामाण्यज्ञानाभावविशिष्टत्वानिवेशे यत्र आदौ भाविसिद्धिः अप्रमा इत्याकारकः अप्रामाण्यग्रहः ततः पर्वतो वह्निमान् इति सिद्धिः ततः पर्वतो वह्निव्याप्यधूमवान् इति परामर्शः, ततः पर्वतो वह्निमान् इत्यनुमितिः तत्र परामर्शोत्पत्तिक्षणे पक्षता न स्यात्। स्वक्षणपदेन सिद्ध्युत्पत्तिक्षणस्य ग्रहणे तदव्यवहितत्वं अनुमितिक्षणस्य नास्ति, किन्तु परामर्शक्षणस्यैव वर्तते। तत्क्षणे तु अनुमितेरनुत्पत्त्या सा सिद्धिः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना, तथा परामर्शक्षणावच्छेदेन अप्रामाण्यज्ञानाभावविशिष्टा चेति तदभावस्य परामर्शक्षणेऽसत्त्वात्। स्वक्षणे अप्रामाण्यज्ञानाभावविशिष्टत्वनिवेशे तु तत्र सिद्ध्युत्पत्तिक्षणः अप्रामाण्यज्ञानविशिष्ट इति अप्रामाण्यज्ञानाभावविशिष्टसिद्ध्यधिकरणक्षणः सिद्ध्युत्पत्तिद्वितीयक्षण एव। अर्थात् परामर्शोत्पत्तिक्षण एव। तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकैव सा सिद्धिरिति तादृशक्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावरूपपक्षतायाः संपत्तिरिति भावः।

द्वितीयक्षणसाधारणाव्यवहितोत्तरत्वनिवेशकल्पे अभयदिशि अप्रामाण्यज्ञानाभावरूपविशेषणस्य प्रयोजनमुक्त्वा तृतीयक्षणसाधारणाव्यवहितोत्तरत्वनिवेशकल्पे

दीधितिः

प्रात्यक्षिकसिद्धिपरामर्शानुमितयस्तत्र तृतीयक्षणे पक्ष..संपत्त्यर्थं-मिति। तन्न; यत्रानुमित्सानाशकाले प्रात्यक्षिकसिद्धिः अथ परामर्शानुमिती, तत्र पक्षताविरहप्रसङ्गात्। अथ प्रथमक्षणमपेक्ष्य द्वितीय-

---

भावबोधिनी

तन्निवेशप्रयोजनमाह—एवमिति। यत्र आदौ सिद्धिः ततः तद्धर्मिकाप्रामाण्यज्ञानम्, ततोऽनुमितिः तत्र सिद्धेः स्वक्षणाव्यवहितोत्तरतृतीयक्षणोत्पत्तिकानुमितिकत्वतया तद्भिन्न-सिद्ध्यभावरूपपक्षतायाः प्रथमक्षणेपि सत्त्वात् द्वितीयक्षणे अनुमित्यापत्तिः। तद्वारणाय उत्तरक्षणे अप्रामाण्यज्ञानाभावविशिष्टत्वं निवेशनीयम्। तन्निवेशे सिद्ध्यव्यवहितोत्तरस्य अनुमित्युत्पत्तिक्षणस्य अप्रामाण्यज्ञानविशिष्टत्वात् अप्रामाण्यज्ञानाभावविशिष्टोत्तरक्षणो-त्पत्तिकानुमितिकभिन्नैव सा सिद्धिरिति तदभावरूपपक्षताविरहात् न द्वितीयक्षणे अनु-मित्यापत्तिः। एवं तत्रैव द्वितीयक्षणे भिन्नान्तविशेषणाक्रान्तसिद्धेरेव सत्त्वात् पक्षतायाः अभावात् तृतीयक्षणेऽनुमितिर्न स्यात्। अतः सिद्धौ अप्रामाण्यज्ञानाभावनिवेशः द्वितीयक्षणे अप्रामाण्यज्ञानस्यैव सत्त्वात् तदभावरूपविशेषणाभावात् विशिष्टाभाव-रूपा पक्षता निर्वहतीति भावः। अत्र अव्यवधानघटकस्वक्षणेऽप्रामाण्यज्ञाना-भावविशिष्टत्वनिवेशे अप्रामाण्यज्ञानाभावविशिष्टं प्रथमं क्षणमादाय तदव्यवहित-तृतीयक्षणोत्पत्तिकानुमितिकत्वात् सिद्धेः अप्रामाण्यज्ञानाभावविशेषणे दत्तेऽपि प्रथमक्षणे पक्षता वारयितुं न शक्यत इत्यालोच्य उत्तरक्षणे तन्निवेश इत्युक्तम्। एवञ्च सिषाधयिषाविरहविशिष्टः अप्रामाण्यज्ञानाभावविशिष्टश्च यः स्वक्षणः तदव्यवहितो-त्तरक्षणोत्पत्तिकानुमितिकभिन्ना सिषाधयिषाविरहविशिष्टा अप्रामाण्यज्ञानाभावविशिष्टा च या सिद्धिः तदभावः पक्षता इति द्वितीयक्षणमात्रसाधारणाव्यवहितोत्तरत्वनिवेश-पक्षे पक्षतास्वरूपनिष्कर्षः। तृतीयक्षणसाधारणाव्यवहितोत्तरत्वनिवेशपक्षे तु स्व-

दीधितिः

स्यैव द्वितीयक्षणमपेक्ष्य तृतीयक्षणस्यापि अन्यवहितोत्तरत्वं, स्व-ध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वं-साधिकरणत्वं वा तत्राव्यवहितोत्तरत्वं वाच्यम् ।

---

भावबोधिनी

क्षणाव्यवहितोत्तरसिषाधयिषाविरहविशिष्टाप्रामाण्यज्ञानाभावविशिष्टक्षणोत्पत्तिकानुमिति-कभिन्नसिषाधयिषाविरहाप्रामाण्यज्ञानविरहोभयविशिष्टसिद्ध्यभावः पक्षता इति पक्षता-स्वरूपनिष्कर्षः ।

दीधितौ—तत्रेति । यत्र प्रथमक्षणे अनुमित्सा द्वितीयक्षणे इन्द्रियसन्निकर्षः तृतीयक्षणे पर्वतो वह्निमान् इति प्रत्यक्षरूपा सिद्धिः, चतुर्थक्षणे परामर्शः पञ्चम-क्षणेऽनुमितिः, तत्र सिषाधयिषाविरहविशिष्टस्वक्षणः सिद्ध्युत्पत्तिक्षणः तदव्यवहितोत्तर-क्षणोत्पत्तिकत्वम् अनुमितेर्नास्तीति तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना सा सिद्धिर्भवति । तथा सिषाधयिषाविरहविशिष्टा च भवतीति तदभावरूपपक्षतायाः अभा-वात् अनुमित्यनुत्पादप्रसङ्गः इति दोषः सार्वभौमपरिष्कारे भवतीति भावः । अनुमित्यु-त्पत्तिक्षणस्य सिद्ध्युत्पत्तिक्षणध्वंसाधिकरणपरामर्शक्षणध्वंसाधिकरणतया तदनधिकरणत्व-रूपम् अव्यवहितत्वं नास्ति, किन्तु परामर्शोत्पत्तिक्षणस्यैव तदस्ति । तत्क्षणे च अनु-मितेरनुत्पत्त्या भिन्नान्तविशेषणाक्रान्तत्वं सिद्धेरिति उपपादयति गादाधर्यां सिद्ध्यु-त्पादक्षणस्यापीति । ननु सिषाधयिषाविरहविशिष्टस्वक्षणे ग्रनेन सिद्ध्युत्पत्तिद्वितीय-क्षणग्रहणे तदव्यवहितत्वं अनुमित्युत्पत्तिक्षणस्य अस्त्येवेति नोक्तदोषः इति चेन्न । अव्यवहितत्वमित्यनेन स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वसामान्याभावस्य विवक्षिततया प्रकृते सिद्ध्युत्पत्तिक्षणमादाय तादृशध्वंसाधिकरणत्वसत्त्वेन तत्सामान्या-भावरूपम् अव्यवहितत्वं न संभवतीत्याशयात् । तदेतत् सूचितम् तत्सामान्या-

गादाधरी

पक्षताविरहेति। सिद्ध्युत्पादक्षणस्यापि सिषाधयिषाविरहविशिष्टतयानुमित्युत्पादक्षणस्य तादृशक्षणध्वंसाधिकरणकालध्वंसाधिकरणतया तत्सामान्याभावात्मकतादृशक्षणाव्यवधानविरहादिति भावः। यद्यपि सिषाधयिषाविरहविशिष्टानुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नत्वविशिष्टसिद्ध्यभावस्य पक्षतात्वमङ्गीकृत्याप्युक्तानुपपत्तिः शक्यते वारयितुम्; तथाप्यव्यवहितोत्तरक्षणोत्पत्तिघटितपक्षस्याक्षिप्तत्वात् तत्रैव दर्शितदोषोद्धारं तृतीयक्षणसाधारणाव्यवधानं निवेश्य शङ्कते–अथेति। तृतीयस्यापि

---

भावबोधिनी

भावात्मकतादृशक्षणाव्यवधानविरहादित्यनेन।

अथ 'प्रथमक्षणमपेक्ष्य' इत्यादिदीधितिग्रन्थेन तृतीयक्षणसाधारणम् अव्यवहितोत्तरत्वं निवेश्य पूर्वोक्तदोषवारणं शङ्क्यते। तदपेक्षया सिषाधयिषाविरहविशिष्टानुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नत्वविशिष्टसिद्ध्यभावस्य लघुभूतस्य पक्षतात्वमङ्गीकृत्यापि उक्तानुपपत्तिः वारयितुं शक्यते। पूर्वोक्तस्थले प्रत्यक्षरूपायाः सिद्धेः सिषाधयिषाविरहविशिष्टः यः अनुमित्यव्यवहितपूर्वक्षणः परामर्शक्षणः तद्वृत्तितया तद्वृत्तिसिद्धिभिन्नत्वविरहात् तादृशसिद्धिभिन्नत्वविशिष्टसिद्ध्यभावरूपपक्षतायाः अक्षतत्वात्। तथा च गुरुभूतपक्षतामवलम्ब्य दोषोद्धारशङ्का नोचिता इत्याशङ्क्य सार्वभौमैः अव्यवहितोत्तरक्षणोत्पत्तिकत्वघटितपक्षतापक्षस्यैव उपक्षिप्तत्वात् तत्रैव च दीधितिकारैः दोषस्य प्रदर्शितत्वात् दोषोद्धारशङ्कापि तत्पक्ष एव युक्ता इत्याशयेन शङ्काग्रन्थप्रवृत्तिरित्याह–यद्यपीत्यादिना। तथा च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वमव्यवहितोत्तरत्वम् तत्र सिद्ध्युत्पत्तिक्षणतद्द्वितीयक्षणोभयसाधारणं यत् स्वाधिकरणक्षणत्वं तेन रूपेण स्वक्षणस्य यदि अव्यवधानशरीरे निवेशः, तदानीं तत् अव्यवधानं

## गादाधरी

क्षणस्याव्यवहितोत्तरत्वमिति। क्षणद्वयानुगमकस्वक्षणत्वेन स्वक्षणमनन्तर्भाव्य प्रातिस्विकरूपेण स्वक्षणस्याव्यवधानशरीरे निवेशनीयत्वात् तृतीयक्षणे च स्वोत्पत्तिक्षणध्वंसाधिकरणद्वितीयक्षणध्वंसाधिकरणत्वेऽपि स्वाधिकरणद्वितीयक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वेन स्वक्षणाव्यवधानस्याक्षतत्वादिति भावः। द्वितीयतृतीयक्षणसाधारणं स्वक्षणध्वंसाधिकरणकालध्वंसाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वरूपानुगताव्यवधाननिवेशनं न सम्भवति अपेक्षाबुद्ध्यात्मकसिद्धिचतुर्थसिषाधयिषा-

---

## भावबोधिनी

तृतीयक्षणसाधारणं न भवति, किन्तु द्वितीयक्षणमात्रवृत्ति। यदा तु तत्तत्क्षणत्वेन प्रातिस्विकरूपेण अव्यवधानशरीरे स्वक्षणस्य निवेशः तदानीं सिद्ध्युत्पत्तिद्वितीयक्षणं स्वक्षणपदेन गृहीत्वा तद्ध्वंसाधिकरणक्षणध्वंसानधिकरणत्वरूपम् अव्यवधानं तृतीयक्षणस्यापि भवति। तथा च सिद्ध्युत्पत्तितृतीयक्षणस्यापि सिद्धिक्षणाव्यवहिततया तृतीयक्षणे च अनुमितेरुत्पत्त्या स्वक्षणाव्यवहितक्षणोत्पत्तिकानुमितिकत्वात् सिद्धेः तद्भिन्नसिद्ध्यभावरूपपक्षतायाः संभवात् न दोष इति शङ्कितुः तात्पर्यम्। तदेवाह—क्षणद्वयानुगमकेत्यादिना।

ननु एतदपेक्षया द्वितीयतृतीयोभयक्षणसाधारणं अव्यवहितोत्तरत्वमेव निवेश्यताम्, तच्च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम्। क्षणपदेन उत्पत्तिक्षणस्य ग्रहणे तद्ध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वं तृतीयक्षणस्य द्वितीयक्षणस्य च वर्तते। एवं स्वाधिकरणक्षणध्वंसाधिकरणत्वं प्रथमक्षणध्वंसमादाय उभयोरपि क्षणयोः वर्तते। अतः अस्य अव्यवधानस्य द्वितीयतृतीयसाधारण्यम् इत्याशङ्क्याह—द्वितीयतृतीयक्षणसाधारणमित्यादिना। यत्र प्रथमं सिषाधयिषा, ततः अपेक्षाबुद्ध्यात्मकसिद्धिः,

गादाधरी

पञ्चमक्षणोत्पन्नानुमितौ व्यभिचारतादवस्थ्यात्, चतुर्थक्षणसाधारणानुगताव्यवहितोत्तरत्वस्य कथंचिन्निवेशे चतुर्थक्षणोत्पन्नानुमितिकापेक्षाबुद्धयनात्मकसिद्धेरप्रतिबन्धकतापत्तिरिति ध्येयम्। अपेक्षाबुद्धिद्वितीयक्षणावधिकक्षणत्रयतदितरबुद्धिद्वितीयतृतीयक्षणसाधारणमनुगताव्यवहितोत्तरत्वं प्रकारान्तरेण निर्वक्ति स्वध्वंसेति। उभयत्र कालपदं कालिकसंबन्धेन स्वध्वंसवत्वलाभाय, तेन सर्वस्यैव क्षणस्य स्वनाशविषयकपूर्वपूर्वज्ञाननाशवत्वेपि न सत्यन्ताप्रसिद्धिः, न वा स्वपूर्वकालत्यापि तत्पूर्वकालीनस्वविषयकज्ञान-

---

भावबोधिनी

तद्द्वितीयक्षणे विशेषगुणानुत्पादात् तत्तृतीयक्षणे परामर्शः, अर्थात् चतुर्थक्षणे परामर्शः पञ्चमक्षणेऽनुमितिः, तत्र पक्षतायाः अनुपपत्तिः। तृतीयक्षणसाधारणाव्यवहितोत्तरत्वनिवेशकल्पे अव्यवधानघटकस्वक्षणे न सिषाधयिषाविरहविशिष्टत्वं विशेषणम्, किन्तु उत्तरक्षणे तद्विशेषणमिति वक्ष्यमाणतया स्वक्षणपदेन सिद्ध्युत्पत्तिक्षणस्यापि ग्रहीतुं शक्यतया तदव्यवहितत्वं पञ्चमक्षणस्य नास्तीति सिद्धेः अव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नतया सिषाधयिषाविरहविशिष्टतया च तदभावरूपपक्षतायाः अनिर्वाहात् द्वितीयतृतीयक्षणसाधारणम् अव्यवहितत्वं न निवेशयितुं शक्यम् इति भावः।

व्यभिचारतादवस्थ्यादिति। पक्षतां विना अनुमित्युत्पत्तिरूपस्य व्यतिरेकव्यभिचारस्य तदवस्थत्वात् इत्यर्थः।

ननु एतद्दोषवारणाय चतुर्थक्षणसाधारणम् अव्यवहितोत्तरत्वं निवेश्यते। तच्च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वम्। एवञ्च उक्तस्थले

भावबोधिनी

सिद्धयुत्पत्तिक्षणस्य स्वाधिकरणक्षणपदेन ग्रहणेऽपि ततः चतुर्थस्य अनुमित्युत्पत्तिक्षणस्य अव्यवहितत्वम् अक्षतमेवेति अव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया सिद्धेः तद्भिन्न-सिद्धयभावरूपपक्षतायाः नानुपपत्तिः इत्यत आह–चतुर्थक्षणेति। तथा च उक्त-विधस्य चतुर्थक्षणसाधारणस्य अनुगतस्य अव्यवहितोत्तरत्वस्य निवेशे यत्र आदौ सिद्धिः ततः परामर्शः तदनन्तरं सिद्धिरूपप्रतिबन्धकसत्त्वात् क्षणविलम्बेन चतुर्थ-क्षणेऽनुमितिः तत्र सिद्धेः तृतीयक्षणे अनुमितिं प्रति अप्रतिबन्धकत्वापत्तिः। सिद्धयु-त्पत्तिक्षणाव्यवहितत्वस्य चतुर्थक्षणे सत्त्वात् तदुत्पत्तिकानुमितिकतया सिद्धेः भिन्नान्त-विशेषणाभावात् विशिष्टाभावरूपपक्षतायाः परामर्शक्षणे सत्त्वात् तृतीयक्षणेऽनुमित्या-पत्तिः इति भावः।

दीधितौ तु अपेक्षाबुद्धिद्वितीयक्षणमारभ्य क्षणत्रयसाधारणं तदितरबुद्धि-द्वितीयतृतीयक्षणसाधारणञ्च अनुगतम् अव्यवहितोत्तरत्वं प्रकारान्तरेण निरुक्तम्। तद्यथा स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकारणकालध्वंसाधिकरणत्वम्। यत्र अनुमित्सानाशकाले प्रत्यक्षरूपा सिद्धिः ततः परामर्शानुमिती, तत्र स्वपदेन सिद्धेर्ग्रहणे स्वध्वंसाधिकरणकालः अनुमित्युत्पत्तिक्षणः। तद्ध्वंसानधिकरणत्वं अनुमित्युत्पत्तिक्षणे वर्तते। तथा स्वाधिकरणं यः कालः सिद्धयधिकरणभूतः क्षणः तद्ध्वंसाधिकरणत्वं च अनुमित्युत्पत्तिक्षणस्य वर्तते। अतः स्वाव्यवहितोत्तरक्षणो-त्पत्तिकानुमितिकतया सिद्धेः पक्षतानिर्वाहः। यत्र आदौ सिषाधयिषा ततः अपेक्षाबुद्धयात्मकसिद्धिः ततः क्षणविलम्बेन परामर्शः पञ्चमक्षणे च अनुमितिः, तत्र अपेक्षाबुद्धयात्मकसिद्धिध्वंसाधिकरणकालः पञ्चमक्षणः। तद्ध्वंसानधिकरणं स एव। तदुत्पादकत्वमनुमितेरस्तीति सिद्धेः भिन्नान्तविशेषणाभावात् पक्षताया उपपत्तिः। परन्तु अस्मिन् कल्पे चतुर्थक्षणोत्पन्नानुमितिकापेक्षाबुद्धयनात्मकसिद्धेरप्रतिबन्धकता-पत्तिः इति भट्टाचार्यैः पूर्वोक्तस्य दोषस्य परिहारः न लभ्यते।

दीधितिः

तथा च यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणे विशेषणं प्रथमं विशिष्टान्तम्, द्वितीयन्तु सिद्धेस्तत्रैव द्वितीयक्षणे पक्षतासंपत्तये।

---

गादाधरी

नाशवत्त्वेपि तदुत्तरत्वस्य तत्साधारण्यप्रसङ्गः। एवं सति यत्र सिषाधयिषासिद्धिपरामर्शानुमितीनां क्रमेणोत्पादस्तत्र सिद्धेः स्वक्षणे सिषाधयिषाविरहविशेषणमन्तरेणापि अव्यवहितोत्तरक्षणोत्पन्नानुमितिकत्वनिर्वाहादुक्तप्रथमविशिष्टान्तव्यावृत्त्यसङ्गतेः स्थलान्तरे तद्व्यावृत्तिमाह – तथा चेति। प्रथमक्षणे पक्षतावारणायेति। तादृशसिद्धेस्तृतीयक्षणोत्पन्नानुमितिकतया निरुक्तसिद्धिभिन्नत्वविरहेण पक्षताप्रसक्तेरिति भावः। प्रथमक्षणे पूर्ववत्सिषाधयिषाविरहविशेषणसत्त्वेपि स्वनाशाधिकरणकाल-

---

भावबोधिनी

उभयत्र कालपदमिति। अव्यवधानशरीरे कालिकसंबन्धेन स्वध्वंसाधिकरणत्वलाभाय कालपदम्। उत्तरत्वशरीरे कालिकसंबन्धेन स्वाधिकरणत्वलाभाय कालपदम् इत्यर्थः। कालिकसंबन्धविवक्षायाः प्रयोजनमाह–तेन सर्वस्यैवेति। तथा च सिद्धिनाशविषयकं यत् सिद्धिपूर्वकालीनं ज्ञानं तस्यापि विषयतासंबन्धेन सिद्धिनाशाधिकरणतया सिद्धिनाशाधिकरणतादृशज्ञानध्वंसाधिकरणत्वमेव अनुमित्युत्पत्तिक्षणस्य अस्तीति तदनधिकरणत्वरूपाव्यवधानाप्रसिद्धिः। एवं सिद्धेः यः पूर्वकालः तस्यापि ततः पूर्वकालीनं यत् सिद्धिविषयकं ज्ञानं तन्नाशवत्त्वात् सिद्ध्युत्तरत्वापत्तिः। कालिकसंबन्धविवक्षायां तु ज्ञानस्य विषयतासंबन्धेन सिद्धिध्वंसवत्त्वे सिद्धिमत्त्वे च सत्यपि कालिकसंबन्धेन तद्वत्त्वविरहात् न दोषः। द्वितीयक्षण-

## गादाधरी

ध्वंसाधिकरणत्वघटिताव्यवहितोत्तरत्वनिवेशकल्पे नोक्तातिप्रसङ्गवारणसंभवः। अनुमित्युत्पत्तिक्षणे तत्सिद्धिनाशाधिकरणकालध्वंसानधिकरणत्वस्य सिषाधयिषाविरहविशिष्टतत्सिद्धयधिकरणप्रथमक्षणध्वंसाधिकरणत्वस्य च सत्त्वात्। अतोऽव्यवहितोत्तरक्षणे तस्य विशेषणतामाह उत्तरेति। तथा चोक्तस्थले सिद्धयव्यवहितोत्तरतृतीयक्षणेऽपि सिषाधयिषासत्वात्सिषाधयिषाविरहविशिष्टतादृशक्षणोत्पत्तिकत्वं नानुमितेरिति तादृशसिद्धेरनुमितिप्रतिबन्धकतानिर्वाहः। द्वितीयविशिष्टान्तस्य यद्विशेष-

---

## भावबोधिनी

साधारणाव्यवहितोत्तरत्वकल्पे यत्र सिषाधयिषासिद्धिपरामर्शानुमितीनां क्रमेणोत्पत्तिः तत्र परामर्शक्षणे पक्षतासंपत्तये अव्यवधानघटकस्वक्षणे सिषाधयिषाविरहविशिष्टत्वविशेषणमित्युक्तम्। तृतीयक्षणसाधारणाव्यवहितोत्तरत्वपक्षे तु उक्तस्थले स्वक्षणपदेन सिद्धयुत्पत्तिक्षणग्रहणेऽपि अनुमितिक्षणस्य अव्यवहितत्वमस्तीति स्वक्षणाव्यवहितोत्तरानुमितिका सा सिद्धिः। तद्भिन्नसिद्धयभावश्च वर्तते इति स्वक्षणे सिषाधयिषाविरहविशेषणं विनापि पक्षतानिर्वाहात् प्रथमविशिष्टान्तस्य स्थलान्तरे व्यावृत्तिं प्रदर्शयतीत्याह—एवं सतीत्यादिना। तथा च यत्र क्रमेण सिद्धयात्मकपरामर्शसिषाधयिषानुमितयः तत्र सिद्धयुत्पत्तिक्षणाव्यवहिततृतीयक्षणोत्पन्नानुमितिकतया तत्रत्यसिद्धेः, तादृशानुमितिकसिद्धिभिन्नसिद्धयभावस्य सिद्धयुत्पत्तिक्षणेऽपि सत्त्वात् तद्बलात् सिषाधयिषोत्पत्तिक्षणेऽनुमित्यापत्तिः। अतः उत्तरक्षणे सिषाधयिषाविरहविशिष्टत्वं निवेशनीयम्। तन्निवेशे च सिद्धयव्यवहितोत्तरः तृतीयक्षणः सिषाधयिषाविशिष्ट एव भवतीति सिषाधयिषाविरहविशिष्टक्षणोत्पत्तिकानुमितिकभिन्नैव सा सिद्धिः प्रथमक्षणे सिषाधयिषाविरहविशिष्टा चेति तदभावरूपपक्षताविरहात् न द्वितीयक्षणेऽनुमित्यापत्तिः।

## गादाधरी

णत्वं यत्प्रयोजनकत्वं च प्रागभिहितमिदानीमपि तस्य तद्विशेषणत्वं तत्प्रयोजनकत्वं च न तु प्रथमविशिष्टान्तवदन्यादृशमिति प्रदर्शयितुं पूर्वोक्तमप्यनुवदति द्वितीयन्त्विति। सिद्धेर्विशेषणमित्यनुषज्यते। तत्रैवेति। यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्रैवेत्यर्थः। द्वितीयक्षण इति। तृतीयक्षणेऽनुमितिनिर्वाहार्थमित्यादिः। पक्षतासम्पत्तय इति। विशेषणाभावेन विशिष्टाभावरूपपक्षतानिर्वाहायेत्यर्थः।

---

## भावबोधिनी

ननु उत्तरत्वशरीरघटके स्वाधिकरणकाल एव सिषाधयिषाविरहविशेषणमस्तु। किमिति स्वाधिकरणकालध्वंसाधिकरणकाले तद्विशेषणम् इत्यत्राह—अनुमित्युत्पत्तिक्षण इति। पूर्वोक्तस्थले अनुमित्युत्पत्तिक्षणस्य सिद्धिध्वंसाधिकरणकालध्वंसानधिकरणत्वरूपाव्यवहितत्वस्य सिषाधयिषाविरहविशिष्टः यः सिद्ध्यधिकरणप्रथमक्षणः तद्ध्वंसाधिकरणत्वरूपोत्तरत्वस्य च सत्त्वात् स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वात् सिद्धेः सिषाधयिषाविरहविशेषणे दत्तेऽपि प्रथमक्षणे पक्षतायाः आपत्तिः। तद्वारणाय उत्तरक्षण एव सिषाधयिषाविरहविशिष्टत्वं निवेशनीयम्। तन्निवेशे च सिद्ध्यधिकरणक्षणध्वंसाधिकरणक्षणः द्वितीयक्षणो वा तृतीयक्षणो वा सिषाधयिषाविशिष्ट एव भवतीति सिषाधयिषाविरहविशिष्टक्षणोत्पत्तिकत्वमनुमितेर्नास्तीति प्रथमक्षणे न पक्षताप्रसङ्गः। द्वितीयक्षणे तु सिषाधयिषाविरहरूपविशेषणाभावात् पक्षतायाः निर्वाह इति भावः। सिद्धौ सिषाधयिषाविरहविशिष्टत्वानुपादाने यत्र क्रमेण सिद्धिसिषाधयिषानुमितयः तत्रैव द्वितीयक्षणे पक्षता न स्यात्। सिद्धिक्षणाव्यवहितोत्तरस्य अनुमितिक्षणस्य सिषाधयिषाविशिष्टतया सिषाधयिषाविरहविशिष्टोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वात् सिद्धेः। सिद्धौ तद्विशेषणे दत्ते तु द्वितीयक्षणे सिषाधयिषासत्त्वेन सिषाधयिषाविरहरूपविशेषणाभावेन विशिष्टाभावरूपपक्षता निर्वहतीत्याह—द्वितीयविशिष्टान्तस्येति।

## दीधितिः

यदि पुनरिच्छाजनिका सामग्री प्रतिबध्नात्यनुमितिं, तदा अनुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नसिद्धयभावमात्रं पक्षतेति चेत्–

---

## गादाधरी

अन्यथा उक्तक्रमेण तादृशसिद्धेः निरुक्तसिद्धिभिन्नतया सिशेष्यसत्त्वेन पक्षतानुपपत्तेरिति भावः। ननु दर्शितस्थले प्रथमक्षणे पक्षतासत्त्वेऽपि न क्षतिः। सिषाधयिषाकाले अनुमित्युत्पादस्य इच्छासामग्र्या प्रतिबन्धेनाप्यसंभवात्। इत्थं च निष्प्रयोजनकतया प्रथमविशिष्टान्तानुपादाने द्वितीयमपि निष्प्रयोजनकम्। तादृशसिद्धेः स्वाव्यवहितोत्तरतृतीयक्षणोत्पन्नानुमितिकतयैव अप्रतिबन्धकत्वेन तृतीयक्षणोत्पन्नानुमितिनिर्वाहादित्याशयेन इच्छासामग्र्या अनुमितिप्रतिबन्धकतामते तदुभयं परित्यज्यति– यदि पुनरिति। इच्छासामग्र्यपेक्षया अनुमितिसामग्र्या हीनबलवत्त्वेऽपि

---

## भावबोधिनी

यदि पुनरिति ग्रन्थमवतारयति–ननु दर्शितस्थले इत्यादिना। तथा च तृतीयक्षणसाधारणाव्यवहितोत्तरत्वनिर्वचनपक्षे उत्तरक्षणे सिषाधयिषाविरहविशिष्टत्वस्य यत् प्रयोजनमुक्तम् सिद्धिसिषाधयिषानुमितीनां क्रमेणोत्पत्तिस्थले प्रथमक्षणे पक्षतावारणरूपं तत् न सङ्गच्छते। प्रथमक्षणे पक्षतासत्त्वेऽपि तदानीं इच्छासामग्र्याः सत्त्वेन तस्याः अनुमितिं प्रति प्रतिबन्धकत्वादेव सिषाधयिषाकाले अनुमित्युत्पादस्यासंभवात्। इत्थं च निष्प्रयोजनकतया प्रथमस्य सिषाधयिषाविरहवैशिष्ट्यस्य अनुपादाने द्वितीयं सिद्धौ तद्विशेषणमपि नोपादेयम्। तादृशसिद्धेः स्वाव्यवहितोत्तरतृतीयक्षणोत्पन्नानुमितिकतया तद्भिन्नत्वविरहात् तद्भिन्नसिद्धयभावरूपपक्षतायाः द्वितीयक्षणे सत्त्वेन तृतीयक्षणे अनुमित्युत्पादनिर्वाहात् इत्या-

## गादाधरी

अनुमितीच्छाविशिष्टाया अनुमितिसामग्र्याः इच्छां प्रति प्रतिबन्धकताकल्पनस्यावश्यकतया तस्या एव बलवत्त्वकल्पनमुचितम्, अन्यथा इच्छासामग्र्यपेक्षया बाधादिरूपानेकप्रतिबन्धकाभावघटिततया गुरुतरानुमितिसामग्र्याः प्रतिबन्धकतायामिच्छानिवेशेन गौरवादिति युक्त्या ज्ञानेच्छयोर्यौगपद्यस्वीकारसंभवेन वा इच्छासामग्र्या अनुमितिविरोधिताव्यवस्थापनं न सम्भवतीत्याशयेन यदीत्युक्तम्। सिषाधयिषाविरहविशेषणसार्थक्यस्याशक्यत्वे अनुमित्यव्यवहितपूर्ववृत्तित्वं परित्यज्याव्यवहितोत्तरक्षणोत्पत्ति-

---

## भावबोधिनी

शङ्क्य इच्छासामग्र्याः अनुमितिप्रतिबन्धकतामते सिषाधयिषाविरहविशिष्टत्वरूपं विशेषणं परित्यज्य गुरुत्वात् स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वं च परित्यज्य तत्स्थाने अनुमित्यव्यवहितपूर्वक्षणवृत्तित्वं निवेश्य अनुमित्यव्यवहितपूर्ववृत्तिसिद्धिभिन्नसिद्ध्यभावस्य पक्षतात्वं शङ्कते इति भावः। 'यदि' इति कथनेन इच्छासामग्र्याः अनुमितिप्रतिबन्धकत्वं न संभवतीति सूच्यते। तत् स्पष्टीकरोति इच्छासामग्र्यपेक्षया इत्यादिना। इच्छासामग्र्याः अनुमितिप्रतिबन्धकत्ववादिनापि अनुमितीच्छाविशिष्टायाः अनुमितिसामग्र्याः इच्छां प्रति प्रतिबन्धकत्वं अवश्यं कल्पनीयम्। तत्र च बाधादिरूपाणां प्रतिबन्धकानामभावः अनुमितिसामग्र्यां निवेशनीयः। अनुमितीच्छावैशिष्ट्यं च निवेशनीयमिति महद्गौरवम्। तदपेक्षया इच्छासामग्र्याः अनुमितिप्रतिबन्धकत्वकल्पनमेवोचितम्। इच्छासामग्र्याः अनुमितिसामग्र्याश्च समवधाने इच्छायाः अनुमितेश्च युगपदुत्पत्तिस्वीकारसंभवात्। तथा च इच्छासामग्र्याः अनुमितिविरोधित्वे अस्वारस्यप्रदर्शनाय यदीत्युक्तमिति भावः।

ननु अनुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नसिद्ध्यभावस्य पक्षतात्वे सर्वासा-

## गादाधरी

कानुमितिकत्वरूपगुरुविशेषणोपादानमनुचितमित्याशयेनाह—अनुमित्यव्यवहितेति । अनुमितिपदं स्वसमानाधिकरणानुमितिपरम् । अतो व्यधिकरणानुमित्यव्यवहितपूर्ववृत्तिसिद्धेः स्वाश्रयेऽनुमित्यनुत्पादोपपादकतानिर्वाहः । यन्नाशानन्तरमनुमितिरुत्पद्यते तादृशसिद्धेरप्रतिबन्धकतावारणायाव्यवहितत्वोपादानम, तच्चानुमितिपूर्वकालीनध्वंसाप्रतियोगिस्वरूपं पूर्वक्षणे सिद्धावेव वा विशेषणम्, पूर्वकालीनत्वं च कालिकसंबन्धेन तत्प्रागभाववत्त्वमेव, ध्वंसस्य कालोपाधितया तदुपपत्तिः । सर्वासामेव सिद्धीनां पूर्वजातयत्किंचिदनुमितिनिरूपितनिरुक्ताव्यवधानवत्तयाऽनुमित्यव्यवहितसिद्धिभिन्नसिद्ध्यप्रसिद्धिः

---

## भावबोधिनी

मेव सिद्धीनां उत्तरक्षणे अन्यस्मिन्नात्मनि अनुमित्युत्पादसंभवात् अनुमित्यव्यवहितपूर्ववृत्तितया पूर्ववृत्तिसिद्धिभिन्नसिद्धेरप्रसिद्धिः । यादृशसिद्ध्युत्तरं अनुमितेरनुत्पत्त्यैव महाप्रलयो जातः तादृशसिद्धेः अनुमित्यव्यवहितपूर्ववृत्तिसिद्धिभिन्नत्वेऽपि तदभावस्य प्रतिबन्धकसिद्धिकाले अक्षतत्वात् प्रतिबन्धकसिद्ध्युत्तरक्षणे तदात्मनि अनुमित्यापत्तिः इत्याशङ्क्याह—अनुमितिपदमिति। तथा च स्वसमानाधिकरणानुमित्यव्यवहितपूर्ववृत्तिसिद्धिभिन्नसिद्ध्यभावः पक्षता । स्वपदं यादृशसिद्ध्यव्यवहितोत्तरक्षणे तदात्मनि अनुमितिर्जायते तादृशसिद्धिपरम् । तथा च स्वसमानाधिकरणा या अनुमितिः तदव्यवहितपूर्वक्षणवृत्तिः सिद्धिः सिषाधयिषाकालीना सिद्धिः । तद्भिन्ना सिद्धिस्तु प्रतिबन्धकीभूता सिद्धिः, तदभावस्य प्रतिबन्धकसिद्धिकालेऽसंभवात् न अनुमित्यापत्तिरिति भावः । अव्यवहितत्वदलस्य प्रयोजनमाह— यन्नाशानन्तरमिति । तथा च अव्यवहितत्वानुपादाने अनुमितिपूर्वक्षणवृत्तिसिद्धिभिन्नसिद्ध्यभावः पक्षता स्यात् । तत्र यादृशसिद्धिनाशानन्तरं अनुमितिर्जायते, तादृशसिद्धेः अनुमितिपूर्ववृत्तिसिद्धिभिन्नत्वविरहेण प्रतिबन्धकत्वाभावात् तादृशसिद्धेः द्वितीयक्षणेऽनुमित्या-

## गादाधरी

अतः पूर्वक्षणवृत्तित्वविशेषणम्। पूर्वत्वं प्रागभाववत्त्वं अनुमित्यादिपर्यन्तावस्थायिस्थूलकालसाधारणमित्युक्तदोषतादवस्थ्यमतः क्षणपर्यन्तनिवेशः। प्रागभावावच्छिन्नवृत्तित्वनिवेशनेऽप्रतियोगित्वान्तस्य सिद्धिविशेषणत्वे च क्षणत्वमनुपादेयमेव। जन्यमात्रस्य कालोपाधित्वे तु कालिकसंबन्धेन प्रागभाववत्त्वं सिद्धेरेव विशेषणं देयम्। प्रागभावानभ्युपगमे वक्ष्यमाणतदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपमव्यवहितपूर्वत्वमेव क्षणविशेषणम्। तद्घटकदलानां व्यावृत्तिरग्रे व्यक्तीभविष्यति।

अनुमित्यव्यवहितपूर्वर्वात्तिन आत्ममनोयोगादेस्तादृशसिद्धिभिन्नतया प्रसक्तप्रतिबन्धकतावारकद्वितीयसिद्धिपदसार्थक्याय प्रथमसिद्धिपदम्। न च प्रक्षालनाद्यो-

---

## भावबोधिनी

पत्तिः। तद्वारणाय अव्यवहितत्वोपादानम। तदुपादाने च सिद्धेः अनुमितिपूर्वक्षणवृत्तिध्वंसप्रतियोगितया अनुमितिपूर्वक्षणवृत्तिध्वंसाप्रतियोगित्वरूपं अनुमित्यव्यवहितत्वं सिद्धौ नास्तीति अनुमित्यव्यवहितसिद्धिभिन्नत्वात् प्रतिबन्धकत्वनिर्वाहः। अनुमित्यव्यवहितत्वं पूर्वक्षणे सिद्धौ वा विशेषणम्। पूर्वक्षणवृत्तित्वं च कालिकसंबन्धेन अनुमितिप्रागभाववत्त्वम्। तथा च कालिकसंबन्धेन अनुमितिप्रागभाववान् यः ध्वंसः तदप्रतियोगिक्षणवृत्तित्वं, अथ वा तदप्रतियोगित्वमनुमित्यव्यवहितत्वमिति पर्यवसितम्। तर्हि अनुमित्यव्यवहितसिद्धिभिन्नसिद्ध्यभाव एव पक्षता अस्तु। सिद्धौ पूर्वक्षणवृत्तित्वविशेषणं किमर्थमित्याशङ्क्य तस्य प्रयोजनमाह—सर्वासामेव सिद्धीनामिति। सर्वासामेव सिद्धीनां ततः पूर्वमुत्पन्ना या अनुमितिः तदव्यवहितत्वं वर्तते। अनुमित्युत्तरकालीनसिद्धेः अनुमितिपूर्वकालीनध्वंसप्रतियोगित्वविरहेण अनुमितिपूर्वकालीनध्वंसाप्रतियोगित्वरूपस्य अव्यवहितत्वस्य अक्षतत्वात्। तथा च अनुमित्यव्यवहितसिद्धिभिन्नसिद्धेरप्रसिद्धिः। अतः पूर्वक्षणवृत्तित्वं सिद्धौ विशेषणम्। तथा

## भावबोधिनी

सति सिद्धेः पूर्वकालीना या अनुमितिः तत्पूर्वक्षणवृत्तित्वं सिद्धेर्नास्तीति पूर्वक्षणवृत्तिसिद्धिभिन्नत्वं प्रसिद्धमेव। पूर्वक्षणवृत्तित्वं च अनुमितिप्रागभाववत्क्षणवृत्तित्वम्। तत्र क्षणपदानुपादाने अनुमितिप्रागभाववत्कालपदेन स्थूलकालं महाकालं वा आदाय तद्वृत्तितया सिद्धेः पूर्वकालवृत्तिसिद्धिभिन्नसिद्ध्यप्रसिद्धिः। अनुमितिप्रागभावावच्छेदेन वृत्तित्वनिवेशे वा अप्रतियोगित्वस्य सिद्धिविशेषणत्वे वा क्षणपदं नोपादेयमेव। जन्यमात्रस्य कालोपाधित्वे तु कालिकसंबन्धेन अनुमितिप्रागभाववत्त्वरूपं पूर्वक्षणवृत्तित्वं सिद्धेरेव विशेषणम्। एवञ्च कालिकसंबन्धेन अनुमितिप्रागभाववान् यः ध्वंसः तदप्रतियोगिक्षणवृत्तिः तदप्रतियोगिनी वा, अपि च अनुमितिप्रागभाववत्क्षणवृत्तिः कालिकसंबन्धेन अनुमितिप्रागभाववती वा या सिद्धिः तद्भिन्नसिद्ध्यभावः पक्षता इति फलितम्। प्रागभावानङ्गीकारे तु प्रागभावघटितस्य उक्तपरिष्कारस्य असंभवात् अनुमित्यव्यवहितपूर्वत्वम् अनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपम्। तथा च तत्पक्षे अनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तिसिद्धिभिन्नसिद्ध्यभावः पक्षता इति प्रघट्टकार्थः।

अनुमित्यादिपर्यन्तेति। अनुमितेरादिः अनुमित्यादिः। अनुमितिपूर्वक्षण इत्यर्थः। अनुमितिपूर्वक्षणमारभ्य सिद्धिपर्यन्तस्थायी स्थूलकालः इत्यर्थः। ननु अनुमित्यव्यवहितपूर्ववर्तिसिद्धिभिन्नसिद्ध्यभाव इत्यत्र सिद्धिपदद्वयं मास्तु, अनुमित्यव्यवहितपूर्ववर्त्तिभिन्नाभावः पक्षतेत्येवास्तु इत्याशङ्क्य तत्प्रयोजनमाह—अनुमित्यव्यवहितेत्यादिना। तथा च द्वितीयसिद्धिपदानुपादाने अनुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नाभावः पक्षतेत्युक्तौ नियमेन अनुमितेः पूर्वमात्ममनोयोगादेः सत्त्वेन तस्य चानुमित्यव्यवहितपूर्ववर्तिसिद्धिभिन्नतया अनुमितिप्रतिबन्धकत्वापत्तिः। तद्वारणाय सिद्धिपदोपादानम्। तेन सिद्धेरेव प्रतिबन्धकतालाभान्नोक्तदोषः। एवंरीत्या द्वितीयसिद्धिपदसार्थक्यं प्रथमसिद्धिपदसत्त्व एव घटते। अन्यथा आत्ममनो-

गादाधरी

त्यादिन्यायेन उभयपरित्याग एव उचित इति वाच्यम्, तथा सति बाधबुद्ध्यादेरपि निरुक्तरूपेणैव प्रतिबन्धकतया स्वतन्त्रतत्प्रतिबन्धकताव्याघातात्। न च व्याहन्यतां तत्प्रतिबन्धकत्वान्तरम्, न हि तत्क्षतिमावहति, किं तु तावता लाघवं नैवेति वैयर्थ्यदोषो दुर्वार एवेति वाच्यम्; तद्दोषस्य वैयर्थ्याच्च सिद्धेरित्यनेन स्वयं दर्शनीयत्वात्। यद्यप्येवं प्रथमसिद्ध्यनुपादानेपि बाधादेस्स्वतन्त्रप्रतिबन्धकताविलोपभीरूणां द्वितीयसिद्धिपदोपादानं न विरुद्ध्यते, अखण्डाभाव सम्पादकत्वेन

---

भावबोधिनी

योगादेः अनुमित्यव्यवहितपूर्ववर्तितया पूर्ववर्तिभिन्नत्वविरहादेव प्रतिबन्धकत्वाप्रसक्तेः द्वितीयसिद्धिपदवैयर्थ्यात्। तथा च द्वितीयसिद्धिपदसार्थक्याय प्रथमसिद्धिपदम् इति भावः। ननु प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् इति न्यायात् द्वयोः परित्याग एवोचित इति चेत्—न। बाधबुद्ध्यादीनामपि अनुमित्यव्यवहितपूर्ववर्तिभिन्नतया पक्षताकुक्षिनिक्षेपेणैव प्रतिबन्धकत्वापत्तौ पृथक्प्रतिबन्धकतायाः विलयप्रसङ्गात्। सिद्धिपदोपादाने तु बाधबुद्ध्यादेः सिद्धिरूपत्वाभावेन पृथक्प्रतिबन्धकता सिध्यति।

यद्यप्येवमित्यादि। प्रथमसिद्धिपदानुपादानेऽपि बाधबुद्ध्यादेः अनुमित्यव्यवहितपूर्ववर्तिभिन्नस्य पृथक्प्रतिबन्धकतासिद्ध्यर्थं द्वितीयसिद्धिपदोपादानं न विरुध्यते। अनुमित्यव्यवहितपूर्ववर्तित्वावच्छिन्नाभावाघटितस्य अनुमित्यव्यवहितपूर्ववर्तिभिन्नसिद्धित्वावच्छिन्नाभावस्य भिन्नतया अखण्डाभावघटकतया सार्थक्येन गौरवानवकाशात्। तथा च प्रथमसिद्धिपदोपादानमनावश्यकमिति शङ्का अवतरति। तथापि अनुमित्यव्यवहितपूर्ववर्तिनाम् अनुमित्यव्यवहितपूर्ववर्तित्वेनानुगमं कृत्वा तदवच्छिन्नभिन्नत्वं सिद्धौ न निवेशयितुं शक्यते। अनुमितौ स्वसमानाधिकरणत्वविशेषण-

## गादाधरी

लक्षणदोषासंस्पर्शादिति प्रथमतस्तदुपादानमनुचितम्; तथाप्यनुमित्यव्यवहितपूर्ववर्तिनां स्वत्वघटितेन निरुक्तरूपेणाननुगमासम्भवेन तत्तद्व्यक्तित्वेन तेषां भेदकूटस्यैव निवेशनीयतया सिद्धौ सिद्ध्यतिरिक्ततादृशपदार्थभेदानामव्यावर्तकानां निवेशे गौरवात् सिद्धिव्यक्तीनां भेदा निवेशनीया इत्येतत्सूचनाय प्रथमसिद्धिपदोपादानम्। अत एव अग्रे तत्तद्व्यक्तित्वेन सिद्धिव्यक्तीनां भेदनिवेशे भेदानां विशेष्यविशेषणभावे विनिगमनाविरहेण महागौरवात् फलानुत्पादनियतसिद्धिव्यक्तीनां तत्तद्व्यक्तित्वेन

---

## भावबोधिनी

स्यावश्यकतया अनुमित्यव्यवहितपूर्वत्वस्य स्वत्वघटितत्वेन अनुगतत्वासम्भवात् स्वसमानाधिकरणानुमित्यव्यवहितपूर्ववर्तिनो ये ये तत्तद्भेदकूटस्यैव सिद्धौ निवेशनीयतया सिद्धिभिन्ना येऽनुमित्यव्यवहितपूर्ववर्तिनः पदार्थाः तत्तद्भेदानां अव्यावर्तकानां सिद्धौ निवेशे गौरवात् अनुमित्यव्यवहितपूर्ववर्तिसिद्धिव्यक्तिभेदा एव सिद्धौ विशेषणतया निवेशनीया इति सूचनाय प्रथमसिद्धिपदोपादानमिति भावः।

अत एवेति। अत एव इत्याशयेन वैयर्थ्याच्च सिद्धेरिति वक्ष्यति इति योजना। अत एव–उक्तरीत्या सिद्धिपदसार्थक्यादेव। अस्य चिन्ताहेतौ इतिपदार्थेऽन्वयः। उक्तस्थले अनुमितिनिर्वाहाय स्वसमानाधिकरणानुमित्यव्यहितपूर्ववर्तिन्यो या याः सिद्धयः तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्सिद्धित्वेन प्रतिबन्धकतामुपेत्य तदवच्छिन्नाभावस्य पक्षतात्वमुपेयम्। तत्र च महागौरवम्। तदपेक्षया लाघवात् यत्सिद्धिव्यक्तिसत्त्वे तदुत्तरक्षणेऽनुमितिर्नोत्पद्यते तत्सिद्धिव्यक्तेः प्रतिबन्धकत्वकल्प एव साधीयान् स्यात्। दूषणान्तरमाह–सिषाधयिषाविरहेति। एतद्विशेषणस्य प्रयोजनाभावात् परित्याग इत्यनुचितम्। यत्र सिषाधयिषासिद्ध्यनुमितय इत्यादिस्थले पक्षतासंपत्तये स्वसमानाधिकरणेत्यादिविशेषणाक्रान्ततत्त-

## गादाधरी

प्रतिबन्धकतापक्ष एव साधीयान्। सिषाधयिषाविरहविशेषणपरित्यागश्चानुचितः, सिषाधयिषाकालीनसिद्धिव्यक्तीनामनन्तानां तत्तद्व्यक्तित्वावच्छिन्नभेदकूटनिवेशापेक्षया तद्विशेषणदानस्यैव युक्तत्वादिति कथंचिदनुगमप्रकारः परिचिन्तनीय इति सिद्धेर्वैयर्थ्यमित्याशयेन वैयर्थ्याच्च सिद्धेरिति वक्ष्यति। तादृशसिद्धीनां—भिन्नान्तपरिचेयसिद्धिव्यक्तीनाम्, निरुक्तरूपेति। निरुक्तसिद्धिभिन्नत्वविशिष्टसिद्धित्वेनेत्यर्थः। अगत्या कार्यकारणभावानन्त्यमदोषायेत्यत आह—तादृशेति। तत्तद्व्यक्तित्वेन कल्प्यमान-

---

## भावबोधिनी

त्सिद्धिभेदकूटं निवेशनीयम्, तदपेक्षया सिषाधयिषाविरहवैशिष्ट्यरूपविशेषणदाने लाघवात्। तथा चागत्या सिषाधयिषानाशकालीनसिद्धिव्यक्तिभेदकूटनिवेशेऽपि सिषाधयिषाकालीनसिद्धिभेदकूटनिवेशो नास्ति, एतादृशप्रयोजनसंभवादिति युक्तिद्वयेन भेदकूटनिवेशापेक्षया अनुगमः कर्तव्यः। स च स्वसमानाधिकरणत्वस्वाव्यवहितपूर्वक्षणवृत्तित्वोभयसंबन्धेनानुमितिविशिष्टत्वरूपः। एतादृशानुगमकरूपविशिष्टसिद्धिभिन्नसिद्ध्यभावः पक्षता वाच्या। तत्र सिद्धिमात्रवैयर्थ्यात् तादृशरूपवैशिष्ट्यावच्छिन्नाभाव एव सा स्यादित्यर्थः।

एतावता तृतीयक्षणसाधारणमव्यवहितोत्तरत्वं निवेश्य सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावः पक्षता अथ वा अनुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नसिद्ध्यभावः पक्षता अस्तु इति आक्षेपः फलितः। तत्समाधानं तादृशसिद्धीनाम् इत्यादिदीधितिग्रन्थेन कथ्यते। भिन्नान्तविशेषणाक्रान्तानां सिद्धिव्यक्तीनां किं तत्तद्व्यक्तित्वेन अभावः अनुमितौ कारणम्, अथ वा निरुक्तसिद्धिभिन्नत्वविशिष्टसिद्धित्वेन अभावः कारणम्। नाद्यः। सिद्धिव्यक्तिभेदेन कारणतावच्छेदकभेदेन च अनन्तकार्यकारणभावप्रसङ्गात्। न च

## गादाधरी

प्रतिबन्धकताकेत्यर्थः। यादृशसिद्ध्युत्तरं सिषाधयिषोत्पत्तावनुमितिः सिषाधयिषोत्पत्तिक्षणे अनुमितिवारणाय कल्पनीयप्रतिबन्धकताकतादृशव्यक्तौ सिषाधयिषाविरहविशेषणवैशिष्ट्यनिवेशनस्यावश्यकतया सकलेति।

ननु क्वचित्सिषाधयिषाविरहविशेषणस्यावश्यकतया तदभिप्रायेणैव मूले तदुपादानसङ्गतिः, अतो दूषणान्तरमाह तत्तत्समयेति। तत्तदात्मनिष्ठाः याः

---

## भावबोधिनी

गत्यन्तराभावात् कार्यकारणभावानन्त्यं न दोषमावहति इति वाच्यम्। तथापि तत्तद्व्यक्तित्वेन प्रतिबन्धकीभूतासु सकलसिद्धिव्यक्तिषु सिषाधयिषाविरहविशेषणदानस्य वैयर्थ्यात्। यादृशसिद्ध्युत्तरं सिषाधयिषोत्पत्तौ अनुमितिः तत्र सिषाधयिषोत्पत्तिक्षणे अनुमितिवारणाय कल्पनीयप्रतिबन्धकताश्रयतादृशसिद्धिव्यक्तौ सिषाधयिषाविरहविशेषणस्य आवश्यकत्वेऽपि तदितरसिद्धिव्यक्तिषु तद्विशेषणदानस्य व्यर्थत्वात्। न च क्वचित् सिषाधयिषाविरहविशेषणस्य आवश्यकतया तदभिप्रायेणैव मूले तद्विशेषणोपादानम्, न तु प्रतिबन्धकत्वेन कल्प्यमानासु सर्वासु सिद्धिव्यक्तिषु तद्विशेषणस्य आवश्यकत्वाभिप्रायेण इति वाच्यम्। एवमपि किं तत्तदात्मनिष्ठाः याः पक्षतातिरिक्तसकलकारणसमवधानाधिकरणीभूतक्षणसंबन्धव्यक्तयः तासां प्रतिबन्धकत्वेन तत्तद्व्यक्तित्वेनाभावः कारणम्; अथ वा तत्तत्समयावच्छिन्नतत्तन्मनःसंयोगादीनां तत्तद्व्यक्तित्वेनाभावः कारणम् इत्यत्र विनिगमनाविरहप्रसङ्गात्। न द्वितीयः, निरुक्तपक्षतायाः तदभावस्य च अनुमित्युत्पादतदनुत्पादाभ्यां निर्वाह्यतया अनुमित्युत्पादे सति पक्षता। पक्षतायां सत्यां अनुमित्युत्पादः। एवम् अनुमित्यनुत्पादे सति पक्षताविरहः। पक्षताविरहे सति अनुमित्यनुत्पादः इति अन्योन्याश्रयाभ्यां निरुक्तपक्षतातद्विरहयोः अनुमित्युत्पा-

दीधितिः

**तादृशसिद्धीनां तत्तद्व्यक्तित्वेनाभावः कारणं निरुक्तरूपविशिष्टत्वेन वा? नाद्यः, अनन्तकार्यकारणभावप्रसङ्गात्, तादृशसकलसिद्धौ अनुमित्साविरहविशेषणदानस्य वैयर्थ्यात्; तत्तत्समयसंबन्धव्यक्तीनां तत्तत्समयावच्छिन्नतत्तन्मनोयोगादीनां वा प्रति-**

---

भावबोधिनी

दानुत्पादप्रयोजकत्वासंभवात् सत्यपि परामर्शादौ कस्याश्चित् सिद्धेरनन्तरं अनुमितिः कस्याश्चिदनन्तरं नानुमितिः इत्यत्र नियमकाभावप्रसङ्गात् इति दीधितिग्रन्थस्य तात्पर्यम् ।

गादाधर्यां तत्तदात्मनिष्ठा इत्यादि । सिद्ध्यभावसहितसकलकारणसमवधाने क्षणसंबन्धव्यक्तेः प्रतिबन्धकत्वे क्वापि अनुमितिर्न स्यात् । अतः सिद्ध्यभावातिरिक्तेत्युक्तम् । एवं यत्किञ्चित्कारणसत्त्वे तत्प्रतिबन्धकत्वकल्पनं व्यर्थम् । कारणान्तराभावादेव अनुमित्यभावोपपत्तेः । अतः सकलकारणेति । ननु विनिगमनाविरहेण उभयमेव सिद्ध्यतीति सिषाधयिषाविरहस्य न वैयर्थ्यम् इत्यत आह—क्रमिकेति । तथा च सिद्धिसिषाधयिषानुमितीनां क्रमेणोत्पत्तिस्थले सिषाधयिषोत्पत्तिक्षणे अनुमितेर्वारणाय सिद्धेः सिषाधयिषाविरहविशिष्टतद्व्यक्तित्वेन प्रतिबन्धकत्वापेक्षया समयसंबन्धव्यक्तेः तद्व्यक्तित्वेन प्रतिबन्धकत्वे लाघवात् तस्यैव प्रतिबन्धकतापत्तेरिति भावः । तथा च मूलोक्तस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वं न सिद्ध्यति, विनिगमनाविरहात् लाघवाच्च तत्तत्क्षणसंबन्धव्यक्त्यभावस्यैव पक्षतात्वसिद्धेरिति हृदयम् ।

सिद्ध्यनन्तरमित्यादिना स्थलविशेषानुधावनेन अन्यत्र तत्तत्समयावच्छिन्नतत्तन्मनोयोगापेक्षया तत्तत्सिद्धिव्यक्तीनां प्रतिबन्धकत्वे लाघवमाविष्कृतम् । ननु

दीधितिः

बन्धकत्वप्रसङ्गाच्च । नांत्यः सत्यपि परामर्शादौ कस्याश्चित्सिद्धेरनन्तरमनुमितिः कस्याश्चिन्नेत्यत्र नियामकाभावात् । न वा कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्योत्पादादिकं कारणतावच्छेदककोटौ निवेशते । तथा सति उत्पत्तिकालावच्छिन्नत्व-

गादाधरी

सिषाधयिषाविरहविशिष्टसिद्ध्यभावातिरिक्तसकलकारणसमवधानाधिकरणीभूतक्षणसंबन्धव्यक्तयस्तासां विनिगमनाविरहेण क्रमिकसिद्धिसिषाधयिषानुमित्युत्पत्तिस्थले सिषाधयिषोत्पत्तिक्षणे अनुमितिवारणाय सिद्धेः सिषाधयिषाविशिष्टतत्तद्व्यक्तित्वेन प्रतिबन्धकत्वापेक्षया लाघवेन च प्रतिबन्धकतापत्तेरित्यर्थः । तथा च मूलोक्तस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वव्याघात इति भावः । ननु तत्तत्समयैस्समं तत्तदात्मनां संबन्धाः स्वरूपानतिरिक्ताः, तथा च तत्तदात्मस्वरूपस्य तत्तत्समय-

भावबोधिनी

वस्तुतः पक्षताया एव नियामकतया नियामकाभावकथनासङ्गतिः इत्यत आह—नियामकाभावप्रसङ्गादिति । कुतः इत्याकाङ्क्षायाम् अन्योन्याश्रयद्वयरूपं हेतुं दर्शयति—सिषाधयिषेति । यत्र सिषाधयिषासिद्धिपरामर्शाः तत्र सिषाधयिषापूर्वकसिषाधयिषाशून्यसिद्धिमति अनुमित्युत्पादनिर्वाह्यायाः पक्षतायाः अन्योन्याश्रयमिया अनुमित्युत्पादप्रयोजकत्वस्य, यत्र सिद्धिपरामर्शावेव न तु सिषाधयिषा तत्र सिषाधयिषाशून्यसिद्धिसत्त्वे तदनुत्पादनिर्वाह्यस्य पक्षताविरहस्य अन्योन्याश्रयमिया अनुमित्यनुत्पादप्रयोजकत्वस्य च असंभवादित्यर्थः । इदमत्राकूतम्—यत्र सिषाधयिषा नास्ति सिद्धिः परामर्शश्च वर्तते तत्र कुतो नानुमितिः इति प्रश्ने पक्षताविरहाद

गादाधरी

रूपस्य वा संबन्धस्य प्रतिबन्धकत्वे तत्तदात्मन्यन्यदा तत्तत्समये चान्यत्रात्मन्यनुमित्यनुपपत्तिः, अतः अन्यस्य प्रतिबन्धकतां प्रसञ्जयति– तत्तत्समयावच्छिन्नेति ।

सिद्धयनन्तरं सिषाधयिषाद्वितीयक्षणेऽनुमितिस्थले इत्यादिः । सिषाधयिषाविरहविशिष्टसिद्धयभावेतरसकलकारणाधिकरणतत्तत्क्षणावच्छिन्नानां तत्तदात्मनिष्ठतत्तन्मनोयोगादिव्यक्तीनामित्यर्थः । सामानाधिकरण्यसंबन्धेन सिषाधयिषाविरहावच्छिन्नायास्तत्तत्सिद्धेः प्रतिबन्धकत्वापेक्षया लाघवादिति भावः । नियामकाभावात्– नियामका-

---

भावबोधिनी

नानुमितिरिति वक्तव्यम् । कुतः पक्षताविरहः इत्याकाङ्क्षायां यस्मात् तदनन्तरं अनुमितिर्नोत्पद्यते तस्मात् सा सिद्धिः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना भवति । अतस्तदभावरूपपक्षता नास्तीति वक्तव्यम् । तथा चानुमित्युनुत्पादः पक्षताविरहात्, पक्षताविरहः अनुमित्यनुत्पादादित्यन्योन्याश्रयः । एवं यत्र सिषाधयिषासिद्धिपरामर्शाः तत्रानुमितिः पक्षतासद्भावात् भवतीति वक्तव्यम् । पक्षता कथमस्तीति जिज्ञासायां यतस्तत्र अनुमितिः जायते अतः सा सिद्धिः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिका भवति । तद्भिन्नत्वरूपविशेषणाभावात् विशिष्टसिद्धयभावरूपा पक्षता अस्तीति वक्तव्यम् । एवञ्च पक्षतासत्ता अनुमित्युत्पादनिर्वाह्या; अनुमित्युत्पादः पक्षतासत्त्वनिर्वाह्य इत्यन्योन्याश्रय इति ।

ननु ज्ञप्तौ उत्पत्तौ वा अन्योन्याश्रय एव दोषः, न तु स्थितौ । पूर्वोक्तौ अन्योन्याश्रयौ तु न ज्ञप्तौ न वा उत्पत्तौ अपि तु स्थिताविति न दोषमावहतः । इत्याशङ्क्य नवेत्यादिना स्थितावपि अन्योन्याश्रयस्य दोषत्वमुपपादितं दीधितौ । कारणतावच्छेदकावच्छिन्नसमुदायाधीनायाः कार्योत्पत्तेः कारणतावच्छेदककुक्षौ प्रवेशे अन्योन्याश्रयः अवर्जनीयः । स यदि दोषो न भवतीत्युच्यते, तर्हि त्वदुक्तपक्ष-

## गादाधरी

भावप्रसङ्गात्। सिषाधयिषाविरहविशिष्टसिद्धिसत्त्वे द्वितीयक्षणेऽनुमित्युत्पत्तिनिर्वाह्याया निरुक्तसिद्धिभिन्नसिद्ध्यभावरूपपक्षताया अनुमित्यनुत्पादनिर्वाह्यतदभावस्य चान्योन्याश्रयभिया अनुमित्युत्पादानुत्पादप्रयोजकत्वासम्भवादिति भावः।

तादृशान्योन्याश्रयस्यादोषतावादिनं प्रतिबन्द्या निरस्यति— न वेत्यादिना। एवकारार्थो वाकारः। उत्पत्तेः कारणतावच्छेदकवच्छिन्नसमाजाधीनत्वकथनेन तस्याः कारणतावच्छेदकावच्छिन्नसमवधानस्यापि अग्रेतनकार्योत्पत्तिप्रयोज्यत्वापातात्। निविशते—

---

## भावबोधिनी

तापेक्षया लघुभूता कार्योत्पत्तिघटिता पक्षतैव कुतो नाश्रीयते इति तथा सतीत्यादिना प्रतिबन्दी प्रदर्शिता। सा प्रतिबन्दी यद्यन्योन्याश्रयप्रसक्त्या निराक्रियते तर्हि त्वदुक्तपरिष्कारोऽपि अन्योन्याश्रयप्रसक्त्या न सङ्गच्छत इति दीधितिकारहृदयम्। वाकारः न समुच्चये, दूषणान्तरासमारम्भात्। नापि हेतौ, अन्योन्याश्रयस्य नियामकाभावस्य वा अनुपपादनात् इत्यत आह—एवकारार्थो वाकार इति। कार्योत्पत्तेः कारणतावच्छेदकवच्छिन्नसमाजाधीनत्वकथनेन कारणतावच्छेदकावच्छिन्नसमाजस्यापि अग्रेतनकार्योत्पत्त्यधीनत्वलाभात् अन्योन्याश्रयःसूचितः। ननु निविशत इत्यतः तादृशान्योन्याश्रयस्य अदोषतावादः न लभ्यत इत्यत आह—निविशमानमदूषणावहमिति। कार्योत्पत्तिनिवेशस्य आदोषत्वे तन्निबन्धनस्य अन्योन्याश्रयस्य अदोषत्वलाभः।

ननु तथासतीत्यादिना प्रतिबन्दीरूपेण प्रदर्श्यमानपक्षतापरिष्कारापेक्षया पूर्वोक्तपरिष्कारे न गौरवम्। तथा हि—सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्धित्वेन तदभावस्य कारणत्वे गुरुशरीरतया गौरवस्य प्रसक्तिः। तेन रूपेण सिद्धीनामभावस्य कारणत्वं नोच्यते; स्वक्षणाव्यवहि—

## गादाधरी

निविशमानमदूषणावहम् । अथ वोक्तपक्षतायाः कार्योत्पत्तिनियामकत्वमेव नवेत्यादिना निराकृतम् । कारणतावच्छेदककोटावित्यादेः कार्योत्पत्तिनियामकतावच्छेदकघटकमित्यर्थः । अत्रान्योन्याश्रयदोषं प्रतिबन्द्या स्वीकारयति तथासतीत्येवं व्याख्येयम् । यद्यपि स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वं स्वत्वघटितत्वेन तत्तद्व्यक्तिविश्रान्तमिति भेदप्रतियोगितावच्छेदकगर्भे तन्निवेशानर्थक्यात् तत्परिचेयव्यक्तीनां तत्तद्व्यक्तित्वेनैव भेदा। सिद्धौ निवेशनीयाः, तथा च कारणतावच्छेदकस्य नोत्पत्ति-

---

## भावबोधिनी

तोत्तरक्षणोत्पत्तिकानुमितिकत्वस्य स्वत्वघटितत्वेन तत्तद्व्यक्तिविश्रान्ततया भेदप्रतियोगितावच्छेदककुक्षौ तन्निवेशस्य वैयर्थ्यात् । किन्तु याः सिद्धिव्यक्तयः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाः भवन्ति तासां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाः सिद्धौ निवेशनीयाः । तादृशभेदविशिष्टसिद्ध्यभावः कारणम् । तथा च कारणतावच्छेदकशरीरे कार्योत्पत्तेः अप्रवेशात् अन्योन्याश्रयस्यापि नावकाशः । एवञ्च प्रतिबन्दीप्रदर्शनं नोचितमिति शङ्का भवति । तथापि भेदकूटनिवेशे भेदानां विशेषणविशेष्यभावे विनिगमनाविरहेण कारणतानन्त्यप्रयुक्तं गौरवं दुष्परिहारमित्यालोच्य लघुभूतानां पक्षतानां प्रतिबन्द्या कारणत्वप्रदर्शनमिति भावः ।

उत्पत्तिकालावच्छिन्नत्वविशिष्टं स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकं पक्षता इति प्रथमकल्पः । यत्र सिद्धिसिषाधयिषापरामर्शानुमितयो भवन्ति, तत्र स्वपदेन परामर्शः गृह्यते । तत्क्षणाव्यवहितोत्तरक्षणे परामर्शाधिकरणे आत्मनि अनुमितेरुत्पत्त्या स परामर्शः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिको भवति । सविषयकश्च भवति । अतस्तस्य पक्षतात्वम् । तस्य परामर्शस्य अनुमित्युत्पत्तिक्षणेऽपि सत्त्वात अनुमित्यनन्तरं

## गादाधरी

घटितत्वम्, तथापि भेदकूटनिवेशे विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतानन्त्यं दुष्परिहरमेवेति भावः। कार्योत्पादादिकमित्यादिपदेन तादृशगौरवप्रयोजकभेदकूटस्यापि परिग्रहः। तस्य कारणतावच्छेदकत्वे तृतीयप्रतिबन्देरेव सङ्गतेः। अनुमित्यव्यवहितपूर्वोत्पन्नपरामर्शादितोऽनुमित्युत्तरमनुमित्यापत्तेर्वारणाय उत्पत्तिकालावच्छिन्नत्वविशेषितेनेति। स्वाधिकरणसमयध्वंसवदन्यकालसम्बन्धविशेषितेनेत्यर्थः।

---

## भावबोधिनी

तद्बलात् पुनः अनुमित्युत्पत्तिवारणाय उत्पत्तिकालावच्छिन्नत्वविशेषितेन इत्युक्तम्। अनुमित्युत्पत्तिक्षणे उत्पत्तिकालावच्छिन्नत्वविशिष्टस्य परामर्शस्य असत्त्वात् न दोषः। उत्पत्तिकालावच्छिन्नत्वं नाम स्वाधिकरणसमयध्वंसवदन्यकालसंबन्धः। स्वं-परामर्शः। स्वाधिकरणसमयः परामर्शोत्पत्तिक्षणः। तद्ध्वंसवान् परामर्शद्वितीयक्षणः। तदन्यः कालः परामर्शोत्पत्तिक्षण एव। तत्संबन्धः परामर्शे वर्तते। अत्र ध्वंसवत्त्वं कालिकसंबन्धेन। अन्यथा उत्पत्तिक्षणस्यापि प्रतियोगितासंबन्धेन स्वाधिकरणकालध्वंसवत्त्वात् तदन्यकालः उत्पत्तिकालो न स्यात्। अत्र कालपदमनुपादाय कालिकसंबन्धेन स्वाधिकरणसमयध्वंसवदन्यसंबन्धः उत्पत्तिकालावच्छिन्नत्वम् इत्युक्तौ 'नित्येषु कालिकायोगात्' परामर्शाधिकरणसमयध्वंसस्य कालिकसंबन्धेन आत्मन्यसत्त्वात् कालिकसंबन्धेन स्वाधिकरणसमयध्वंसवदन्यः आत्मा, तत्संबन्धविशिष्टस्य परामर्शस्य द्वितीयक्षणेऽपि सत्वात् अनुमित्यनन्तरम् अनुमित्यापत्तिः। तद्वारणाय कालपदोपादानम्। आत्मनः कालरूपत्वाभावात् नोक्तदोषः। तदाह-एवञ्चेति।

उत्पत्तिकालसंबन्धस्य उपलक्षणविधया अवच्छेदकत्वे उत्पत्तिकालोपलक्षितस्य परामर्शस्य अनुमित्युत्पत्तिक्षणेऽपि सत्त्वात् अनुमित्युत्पत्त्यनन्तरमपि अनुमित्यापत्तिरूपः स एव दोषः स्यात्। अतः विशेषणविधया उत्पत्तिकालसंबन्धस्य

## गादाधरी

तादृशध्वंसवत्त्वं कालिकसंबन्धेन। तेनोत्पत्तिक्षणस्यापि प्रतियोगित्वादिसंबन्धेन स्वाधिकरणकालध्वंसावच्छिन्नत्वेपि न क्षतिः।

एवं च कालिकसंबन्धेन तादृशध्वंसवदन्यात्मसंबन्धविशिष्टज्ञानादेर्द्वितीयक्षणे सत्त्वात् उक्तातिप्रसङ्गतादवस्थ्यम्; अतः कालपदम्। तादृशकालसंबन्धस्य उपलक्षणविधयाऽवच्छेदकत्वे स एव दोषः इत्यतो विशेषणविधया तयात्वलाभायोत्तरत्रानुषङ्गाय चावच्छिन्नान्तस्य कर्मधारयमध्ये प्रक्षेपमुपेक्ष्यावच्छिन्नत्वविशेषितेनेत्युक्तम्। विशेषणत्वं चास्य सामानाधिकरण्यसंबन्धेन बोध्यम्, धर्मिणोऽविशेष्यत्वात्। काला-

---

## भावबोधिनी

अवच्छेदकत्वं वक्तव्यम्। उत्पत्तिकालसंबन्धविशिष्टस्य परामर्शस्य अनुमित्युत्पत्तिक्षणेऽभावात् नोक्तदोषः। एतादृशविशेषलाभायैव उत्पत्तिकालावच्छिन्नसविषयकत्वेनेति कर्मधारयसमासमध्ये अवच्छिन्नान्तस्य प्रक्षेपमुपेक्ष्य उत्पत्तिकालावच्छिन्नत्वविशेषितेनेत्युक्तम्। तदाह—तादृशकालसंबन्धस्येति। उत्पत्तिकालावच्छिन्नत्वं सविषयकत्वे सामानाधिकरण्यसंबन्धेन विशेषणम्। न तु आश्रयतासंबन्धेन। सविषयकत्वरूपधर्मस्यैव विशेष्यत्वेन निर्देशात् इत्याह—विशेषणत्वञ्चास्येति। धर्मिण इति। सविषयकरूपधर्मिण इत्यर्थः। अविशेष्यत्वादिति। उत्पत्तिकालावच्छिन्नत्वं प्रति इति शेषः। अनुमितौ स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वविशेषणस्य प्रयोजनमाह—कालान्तरीणेति। तथा च तदनुपादाने उत्पत्तिकालावच्छिन्नत्वविशिष्टं स्वसमानाधिकरणानुमितिकं सविषयकं पक्षता स्यात्। तथा सति कालान्तरीणानुमित्यधिकरणात्मवृत्तिघटज्ञानादेरपि स्वसमानाधिकरणानुमितिकत्वात सविषयकत्वाच्च पक्षतात्वं स्यात्। तद्वारणाय स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वनिवेशः। घटज्ञानाव्यहितोत्तरक्षणे अनुमितेरनुत्पत्त्या नोक्तदोषः। स्वक्षणाव्यवहितोत्तरत्वं च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरण-

## गादाधरी

न्तरीणानुमितिसमानाधिकरणघटज्ञानादितोऽनुमित्यापत्तिवारणाय स्वक्षणाव्यवहितोत्तरक्षणोत्पन्नत्वमनुमितिविशेषणम् । तदर्थश्च स्वाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणो यः क्षणस्तदुत्पन्नत्वम् । सत्यन्तनिवेशात् स्वोत्तरतृतीयक्षणोत्पन्नानुमितिकज्ञानादितस्तद्द्वितीयक्षणे नानुमितिप्रसङ्गः । तादृशानुमितिकसंस्कारद्वितीयक्षणेऽनुमितिवारणाय स्वाधिकरणत्वे सतीत्युपेक्षितम्,

---

## भावबोधिनी

क्षणध्वंसाधिकरणत्वरूपम् । तच्च द्वितीयक्षणमात्रवृत्ति । तत्र सत्यन्तानिवेशे स्वोत्तरक्षणोत्पन्नानुमितिकसविषयकं पक्षतेत्युक्तौ यत्र सिषाधयिषासिद्धिपरामर्शानुमितयः तत्र सिद्धिरूपस्य सविषयकस्य स्वोत्तरतृतीयक्षणोत्पत्तिकानुमितिकतया तद्बलात् परामर्शक्षणेऽनुमित्यापत्तिः । तद्वारणाय स्वक्षणाव्यवहितत्वरूपस्य सत्यन्तस्य निवेशः । ननु स्वाधिकरणत्वे सति इति निवेशेऽपि तृतीयक्षणस्य स्वाधिकरणत्वविरहात् पूर्वोक्तदोषवारणसंभवात् किमर्थं गुरुतरस्य अव्यवहितत्वस्य निवेशनमित्यत्राह–तादृशानुमितिकेति । यादृशसंस्कारोत्पत्त्यनन्तरं तृतीयादिक्षणे अनुमितिर्जायते तादृशसंस्कारस्य स्वाधिकरणभूतस्वोत्तरतृतीयक्षणोत्पन्नानुमितिकत्वात् सविषयकत्वाच्च पक्षतात्वापत्तौ तद्बलात् संस्कारद्वितीयक्षणे अनुमित्यापत्तिः . तद्वारणाय स्वाधिकरणत्वे सतीत्यनुक्त्वा स्वाव्यवहितत्वे सतीत्युक्तम् । संस्कारतृतीयक्षणस्य स्वाधिकरणक्षणध्वंसाधिकरणद्वितीयक्षणध्वंसाधिकरणतया तदनधिकरणत्वरूपं अव्यवहितत्वं नास्तीति न दोषः । ननु संस्कारस्य द्विक्षणवृत्तेः तृतीयक्षणे नाशात् कथं तृतीयक्षणस्य संस्काराधिकरणत्वमित्यत्राह–द्वितीयादिक्षणस्येति । ज्ञानादिवत् संस्कारस्य द्विक्षणमात्रस्थायित्वं नाभ्युपगम्यते । कालान्तरे स्मरणानुपपत्तेरिति भावः ।

गादाधरी

तृतीयादिक्षणस्य ज्ञानाद्यनधिकरणत्वेऽपि संस्काराद्यधिकरणत्वाक्षतेः। तादृशापेक्षाबुद्धिद्वितीयक्षणेऽनुमितिवारणानुरोधस्तु न तदुपेक्षाबीजम्;, तदानीं समानाधिकरणविशेषगुणान्तरस्याप्यनुत्पत्त्या तत्प्रयोजकादेवानुमित्यनुत्पादोपपत्तेः। अपेक्षाबुद्धिद्वितीयक्षणे समानाधिकरणविशेषगुणोत्पादोपगमे त्वपेक्षाबुद्धेस्तृतीयक्षणावस्थायिताया एवानुपपत्तेः। वस्तुतस्त्वपेक्षाबुद्धेर्द्विक्षणावस्थायितामत एवैतत्प्रतिबन्दिप्रदर्शनम्। अन्यथा सिद्धयादिद्वितीयक्षणोत्पन्नापेक्षाबुद्ध्यात्मकपरामर्शतृतीयक्षणेऽनुमित्यनुपपत्तेस्तस्यास्तृतीयक्षणपर्य-

---

भावबोधिनी

केचित्तु अपेक्षाबुद्ध्यात्मकपरामर्शतृतीयक्षणे यत्रानुमितिः तत्र स्वाधिकरणस्वोत्तरतृतीयक्षणोत्पत्तिकानुमितिकसविषयकापेक्षाबुद्धिबलात् अपेक्षाबुद्धिद्वितीयक्षणे अनुमित्यापत्तिवारणाय स्वाधिकरणत्वे सति इति उपेक्ष्य स्वाव्यवहितत्वे सतीत्युक्तम् इत्याहुः। तन्मतं दूषयति—तादृशपेक्षाबुद्धीति। अपेक्षाबुद्धेः त्रिक्षणावस्थायित्वमते तद्द्वितीयक्षणे तदधिकरणे आत्मनि विशेषगुणान्तरस्य अनुत्पत्तेः अनुमितेरपि विशेषगुणरूपायाः अनुत्पादोपपत्तेः। अपेक्षाबुद्धिद्वितीयक्षणे विशेषगुणोत्पत्तिस्वीकारे तेन विशेषगुणेन तस्याः तृतीयक्षणे नाशप्रसङ्गात् अपेक्षाबुद्धेः त्रिक्षणावस्थायित्वस्यानुपपत्तेः इत्यर्थः। वस्तुत इति। अपेक्षाबुद्धेः द्विक्षणावस्थायित्वमत एव इयं प्रतिबन्दी। अन्यथा यत्रादौ सिद्धिः ततः अपेक्षाबुद्ध्यात्मकः परामर्शः तत्तृतीयक्षणे अनुमितिः तत्र अनुमितिपूर्वक्षणे अपेक्षाबुद्धिरूपस्य सविषयकस्य सत्त्वेऽपि उत्पत्तिकालावच्छिन्नत्वविशिष्टस्य सविषयस्य अभावात् अनुमित्यनुपपत्तेः। तृतीयक्षणपर्यन्तस्थायितामते द्वितीयक्षणे विशेषगुणानुत्पत्त्या उत्पत्तिकालावच्छिन्नस्य सविषयकस्य दुर्घटत्वात्। तथा च अपेक्षाबुद्धेः तृतीयक्षणे अनुमित्युत्पत्तिस्थले तृतीयक्षणस्य स्वाधिकरणत्वाभावादेव स्वाधिकरणोत्तरक्षणोत्पत्तिकानुमितिकत्वविरहात् द्वितीयक्षणे अनुमित्यापत्त्यसंभवात् तद्वारणानुरोधः

गादाधरी

न्तावस्थानमते द्वितीयक्षणे विशेषगुणानुत्पत्त्या तदानीमुत्पत्तिकालावच्छिन्नसविषयक-सत्त्वस्य दुर्घटत्वादित्यवधेयम्। अनुमितेस्स्वसमानाधिकरणानुमित्युत्तरोत्पन्न-ज्ञानान्तराद्वानुमितिप्रसङ्गवारणायाधिकरणान्तं क्षणविशेषणम्। स्वपूर्वकालाद्युत्पन्नानु-मितेरपि स्वाव्यवहितोत्तरत्वाक्रान्तस्वद्वितीयक्षणपर्यन्तस्थायिस्थूलकालोत्पन्नतया तद्दोष-तादवस्थ्यमिति क्षणत्वनिवेशः। अनुमितेः स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वसमाना-धिकरणस्वात्मकानुमितिकतया तद्वारणाय उत्पत्तिनिवेशः। वस्तुतस्स्वपेक्षाबुद्धि-

---

भावबोधिनी

स्वाधिकरणत्वोपेक्षाबीजमित्येतन्न सङ्गच्छते इति भावः।

उत्तरत्वांशनिवेशनस्य प्रयोजनमाह—अनुमितेरिति। स्वाधिकरणक्षणध्वंसा-धिकरणत्वरूपस्य उत्तरत्वस्य क्षणविशेषणतया अनुपादाने स्वक्षणाव्यवहितक्षणो-त्पत्तिकानुमितिकसविषयकं पक्षता इत्युक्तौ अनुमितेरपि स्वाव्यवहितस्वोत्पत्तिक्षण-वृत्तित्वात् सविषयकत्वाच्च अनुमित्यनन्तरं अनुमित्यापत्तिः। अथ वा अनु-मित्यनन्तरं यत् घटादिज्ञानं तस्यापि स्वाव्यवहितपूर्वक्षणोत्पन्नानुमितिकत्वात् सविषय-कत्वाच्च ततः पुनरनुमित्यापत्तिः। तद्वारणायोत्तरत्वनिवेशः। तन्निवेशे अनुमितेः तदुत्तरोत्पन्नघटज्ञानस्य वा स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वाभावात् न दोष इति भावः। न चात्र घटज्ञानकाले परामर्शस्य अभावात् कथं तदनन्तरं अनुमित्यापादनम् इति वाच्यम्। घटज्ञानपूर्वोत्पन्नानुमितेः 'पर्वतो वह्निमान् वह्निव्याप्यधूमवाँश्चेति' समूहालम्बनरूपायाः अत्र विवक्षितत्वात्। तस्याश्च परामर्शरूपायाः घटज्ञानकाले सत्त्वात् तदनन्तरं 'पर्वतो वह्निमान्' इत्यनु-मित्यापादनस्य सम्भवात्। एवमन्यत्राप्यापादनस्थले ऊह्यम्।

स्वक्षणाव्यवहितेत्यक्षणेत्यत्र द्वितीयपदस्थाने कालपदोपेक्षायाः प्रयोजन-

भावबोधिनी

माह—स्वपूर्वकालेति । तथा च क्षणपदस्थाने कालपदं प्रक्षिप्य स्वक्षणाव्यवहितोत्तरकालोत्पत्तिकानुमितिकसविषयकं पक्षता इत्युक्तौ पूर्वोक्तस्थले एव अनुमित्यनन्तरमुत्पन्नस्य घटज्ञानस्य अनुमितिक्षणमारभ्य घटज्ञानद्वितीयक्षणपर्यन्तस्थायी यः स्थूलकालः तस्य स्वाव्यवहितोत्तरत्वाक्रान्ततया स्वाव्यवहितोत्तरतादृशस्थूलकालोत्पत्तिकानुमितिकत्वात् घटज्ञानोत्तरमनुमित्यापत्तिः । तद्वारणाय क्षणपदोपादानम् । स्थूलकालस्य क्षणत्वाभावात् नोक्तदोष इति भावः । उत्पत्तिपदप्रयोजनमाह—अनुमितेरिति । उत्पत्तिपदानुपादाने स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वसमानाधिकरणानुमितिकसविषयकं पक्षता स्यात् । तथा सति अनुमितिरपि स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वसमानाधिकरणस्वात्मकानुमितिका सविषया चेति पक्षता स्यात् । तद्बलात् अनुमित्यनन्तरं अनुमित्यापत्तिः । तद्वारणाय उत्पत्तिनिवेशः । अनुमितेः स्वक्षणाव्यवहितोत्तरक्षणे उत्पत्त्यभावात् न दोषः इति भावः । उत्पत्तिपदमनिवेश्य, स्वसमानाधिकरणानुमितौ स्वान्यत्वं निवेश्यापि अनुमित्यनन्तरमनुमित्यापत्तिर्वारयितुं शक्यते; स्वाव्यवहितोत्तरक्षणे स्वात्मकानुमितेर्वृत्तित्वेऽपि स्वान्यानुमितेरवृत्तेः । तथा च स्वक्षणाव्यवहितोत्तरवृत्तिस्वसमानाधिकरणस्वान्यानुमितिकसविषयकं पक्षतेत्येव वक्तु शक्यत इत्याह—वस्तुतस्त्वति । नन्वपेक्षाबुद्ध्यात्मकानुमित्यनन्तरक्षणोत्पन्नघटादिज्ञानात पुनरनुमित्यापत्तिः । घटज्ञानस्य स्वाव्यवहितोत्तरक्षणवृत्तिस्वान्यप्रथमक्षणोत्पन्नानुमितिकत्वात् इत्यत उक्तम् अपेक्षाबुद्धिद्वितीयक्षणे विशेषगुणान्तरानुत्पाद इति । तथा च द्वितीयक्षणे घटज्ञानस्योत्पत्त्यसंभवात् तस्य न पक्षतात्वमिति भावः । अत्राहुः—अनुमित्युत्पत्तिक्षणे परामर्शजन्यसंस्कारोत्पत्तौ बाधकाभावः । एवं च तादृशसंस्कारादनुमितिद्वितीयक्षणेऽनुमित्यापत्तिवारणायोत्पत्तिनिवेश आवश्यकः । न च संस्कारान्यत्वमपि विशेषणम् । संस्काराद्वेत्युत्तरग्रन्थासंगतेः । न च तत्संस्कारान्यत्वं दीयताम् । तथा सत्यनन्त-

## गादाधरी

द्वितीयक्षणे विशेषगुणान्तरानुत्पादे अनुमितौ स्वान्यत्वनिवेशादपि उत्पत्तिप्रयोजन-निर्वाहो बोध्यः। तथा सत्यपेक्षाबुद्ध्यात्मकानुमित्यनन्तरोत्पन्नज्ञानादप्यनुमित्यापत्तेर-सम्भवात्। अपेक्षाबुद्धेर्द्विक्षणमात्रावस्थायितामत एवैषा प्रतिबन्दिरित्युक्तत्वाच्च। पुरुषान्तरीयानुमित्यव्यवहितपूर्वोत्पन्नज्ञानात्तद्वतः पुंसोऽनुमितेर्वारणाय स्वसामानाधि-करण्यमनुमितिविशेषणम। एकपुरुषीयानुमित्यव्यवहितपूर्वोत्पन्नद्वित्वादितस्तद्वतः पुरुषा-न्तरस्यानुमितेर्वारणाय सविषयकत्वनिवेशनम्। अनुमित्यव्यवहितपूर्वक्षणे ज्ञानोत्पत्त्य-

---

## भावबोधिनी

संस्कारभेदनिवेशमपेक्ष्य लाघवेन उत्पत्तिनिवेशनौचित्यात्। वस्तुतस्तु उत्पत्ति-निवेशखण्डनपाठ एव प्रामादिकः। अपेक्षाबुद्धेर्द्विक्षणावस्थायितामत एवैतल्लक्षण-करणेन पुनस्तृतीयक्षणावस्थायिताशङ्कनेन संदर्भविरोधादिति। पुरुषान्तरीयेति। पुरुषान्तरस्य यानुमितिः तदव्यवहितपूर्वक्षणेऽन्यस्य पुरुषस्य घटज्ञानसत्त्वे तस्य घटज्ञानस्य स्वक्षणाव्यवहितोत्तरक्षणोत्पन्नानुमितिकत्वात् सविषयकत्वाच्च तद्बलात् घटज्ञानवतः पुरुषस्यानुमितिवारणाय अनुमितौ स्वसमानाधिकरणत्वं विशेषणम्। अनुमितेर्घटज्ञानवत्पुरुषवृत्तित्वाभावान्न दोष इति भावः।

एकपुरुषीयेति। चैत्रगतानुमित्यव्यवहितपूर्वक्षणे चैत्रमैत्रगतद्वित्वोत्पत्तौ तस्य द्वित्वस्य स्वाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकत्वात् ततः द्वित्वा-श्रयस्यमैत्रस्यानुमित्यापत्तिवारणाय सविषयकेत्युक्तम्। द्वित्वस्य सविषयकत्वा-भावान्न दोष इति भावः।

ननु सविषयकेत्यस्य स्थाने ज्ञानेत्येवोच्यताम्। द्वित्वस्य ज्ञानत्वाभादेव वारणसंभवादित्यत आह-अनुमित्यवहितपूर्वक्षण इति। अनन्तरकल्पावलम्बने हेतुमाह-बहुव्रीहिप्रतिपाद्येति। उत्पत्तिकेत्यत्र अनुमितिकेऽत्र च बहुव्रीहिभ्यां

दीधितिः

विशेषितेन स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयत्वेन, स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयत्वेन, स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधि-

.................................................................................................

गादाधरी

नियमाशङ्कया ज्ञानत्वमुपेक्षितम् । व्यक्तीभविष्यति चेदमुपरिष्टात् ।

बहुव्रीहिप्रतिपाद्यसंबन्धांशस्याधिकस्यात्र निवेशात् बहुव्रीहिं परित्यज्य लघुरूपान्तरमाह – स्वसमानाधिकरणेति । अत्राप्युत्पत्तिकालावच्छिन्नत्वविशेषितेनेत्यनुषज्यते । अन्यथा अनुमित्यव्यवहितपूर्वोत्पन्नज्ञानादेरनुमित्युत्पत्त्यधिकरणक्षणेऽपि सत्त्वात्तदनन्तरमनुमित्यन्तरोत्पत्त्यापत्तेः । न चानुमित्यव्यवहितपूर्वोत्पत्तेर्विशेषणतयैव सामंजस्ये उत्पत्तिकालावच्छिन्नत्वस्य पृथग्विशेषणत्वमयुक्तमिति

---

भावबोधिनी

प्रतिपाद्यो यो संबन्धो तयोरित्यर्थः ।

उत्पत्तिकालावच्छिन्नत्वविशिष्टं स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नं सविषयकं पक्षता । परामर्शादिकं तादृशम् । अनुमित्यव्यवहितपूर्वक्षणोत्पन्नस्य ज्ञानस्य परामर्शादेः अनुमित्युत्पत्तिक्षणेऽपि सत्त्वात् तद्बलात् अनुमित्युत्पत्त्यनन्तरक्षणे पुनरनुमितेर्वारणाय उत्पत्तिकालावच्छिन्नत्वविशिष्टेति सविषयकत्वविशेषणम् । अनुमित्युत्पत्तिकालस्थितपरामर्शादेः उत्पत्तिकालावच्छिन्नत्वाभावात् न पक्षतात्वम् । न चानुमित्यव्यवहितेति । उत्पत्तिकालावच्छिन्नत्वविशेषितेनेति पृथग्विशेषणं मास्तु । अनुमित्यव्यवहितपूर्वोत्पन्नेत्यत्र उत्पत्तेर्विशेषणत्वं स्वीकृत्य अनुमित्यव-

## गादाधरी

वाच्यम्; अव्यवहितपूर्वक्षणोत्पत्तेर्विशेषणत्वे तद्घटकवृत्त्यंशविशेषणतयैव सामंजस्ये क्षणे स्वाधिकरणकालध्वंसानधिकरणत्वरूपस्य उत्पत्तिघटकांशस्य वैयर्थ्यापातात्। प्रक्षालनाद्धीति न्यायेन तदंशमपि परित्यज्य स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टज्ञानत्वेन कारणताप्रसङ्गोऽग्रे दर्शयिष्यत एव। अनुमितौ सामानाधिकरण्यविशेषणप्रयोजनं पूर्ववत्। अनुमेरव्यवहितपूर्वत्वं प्रागभावसत्त्वे तत्प्रागभावाधि-

---

## भावबोधिनी

हितपूर्वोत्पत्तिविशिष्टसविषयकं पक्षतेत्येवोच्यताम्। अनुमित्यव्यवहिपूर्वोत्पत्तिविशिष्टस्य सविषयकस्य परामर्शादेः अनुमित्युत्पत्तिक्षणेऽभावादेवानुमित्यनन्तरमनुमित्युत्पत्तिवारणसंभवादिति भावः। अव्यवहितपूर्वक्षणोत्पत्तेरिति। पूर्वक्षणोत्पत्तिर्नाम पूर्वक्षणध्वंसानधिकरणं यः क्षणः अर्थात् पूर्वक्षणः तद्वृत्तित्वम्। तत्र पूर्वक्षणध्वंसानधिकरणत्वांशमनिवेश्य पूर्वक्षणवृत्तित्वमात्रं विशेषणतया निवेश्य अनुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टसविषयकमित्युक्तावपि पूर्वक्षणवृत्तित्वविशिष्टज्ञानस्य अनुमित्युत्पत्तिक्षणेऽभावादेव तदनन्तरमनुमित्यापत्त्यसंभवात् उत्पत्तिघटकांशस्य वैयर्थ्यमिति भावः। ननु वैयर्थ्यात्तत्परित्यज्यतामित्यत आह—प्रक्षालनाद्धीति। पूर्ववदिति। पुरुषान्तरीयानुमित्यव्यवहितपूर्वोत्पन्नज्ञानात् तद्वतः पुंसोऽनुमितेर्वारणाय स्वसमानाधिकरणत्वमनुमितेर्विशेषणमिति भावः। अनुमितिपूर्वविनष्टस्येति। यत्र अनुमितेः पूर्वक्षणे परामर्शक्षणे विनष्टः यः लिङ्गदर्शनादिः तस्यापि अनुमितिप्रागभावाधिकरणक्षणोत्पन्नत्वात् ततः परामर्शपूर्वमनुमितेर्वारणाय अनुमितिप्रागभावाधिकरणक्षणप्रागभावानधिकरणत्वरूपाव्यवधाननिवेशः। अनुमित्यनन्तरोत्पन्नघटज्ञानादेरपि अनुमित्यव्यवहितोत्पन्नसविषयकत्वात् ततोऽनुमितिवारणाय अनुमितिप्रागभावाधिकरणत्वं क्षणविशेषणमिति भावः।

## गादाधरी

करणकालप्रागभावानधिकरणत्वे सति तत्प्रागभाववत्त्वम्। अनुमितिपूर्वविनष्टस्य तदुत्तरोत्पन्नस्य च घटज्ञानादेर्वारणाय दलद्वयम्। अव्यवहितोत्तरत्वघटकात् स्वाधिकरणकालध्वंसाधिकरणकालध्वंसाधिकरणत्वरूपसत्यन्तादेतदीयसत्यन्तस्य लघुत्वादप्येतत्कल्पे लाघवं बोध्यम्। प्रागभावानङ्गीकारे तदघटितं वक्ष्यमाणाव्यवहितपूर्वत्वमेव निवेश्यम्। अनुमित्यव्यवहितपूर्वोत्पन्नतदुत्तरस्थायिस्थूलकालेऽनुमित्युत्तरमुत्पन्नस्य घटादिज्ञानस्य वारणाय क्षणत्वनिवेशनम्। अनुमितिप्रागभावविशिष्टोत्पत्तिकत्वविवक्षणे क्षणपदं कालपरमेव। अनुमित्यव्यवहितपूर्वक्षणपर्यन्तस्थायिनस्तत्पूर्वजात-

---

## भावबोधिनी

तदघटितं वक्ष्यमाणाव्यवहितपूर्वत्वमिति। प्रागभावाघटितं तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वमव्यवहितपूर्वत्वमित्यर्थः। अनुमित्युत्तरमुत्पन्नं यत् घटज्ञानं तस्य अनुमित्यव्यवहितपूर्वत्वाश्रयः यः कालः अनुमितिपूर्वक्षणमारभ्य अनुमित्युत्तरक्षणपर्यन्तस्थायी स्थूलकालः तदुत्पन्नत्वात् सविषयकत्वाच्च पक्षतात्वापत्तौ तदुत्तरक्षणेऽनुमित्यापत्तिः तद्वारणाय कालत्वमुपेक्ष्य क्षणत्वोपादानमित्याह—अनुमित्यव्यवहितपूर्वोत्पन्नेति। उत्पन्नपदप्रयोजनमाह—अनुमित्यव्यवहितपूर्वक्षणपर्यन्तेति। आदौ घटज्ञानं ततः क्षणविलम्बनेनानुमितिर्यत्र तत्र घटज्ञानस्यानुमित्यव्यवहितपूर्ववृत्तिसविषयकत्वात् ततः घटज्ञानोत्पत्तिद्वितीयक्षणेऽनुमितिपूर्वक्षणेऽनुमित्यापत्तिः। तद्वारणाय पूर्वक्षणवृत्तीत्यनुक्त्वा पूर्वक्षणोत्पन्नेत्युक्तम्। घटज्ञानस्य पूर्वक्षणोत्पन्नत्वाभावान्न दोषः इत्यर्थः।

पूर्ववद्द्वित्वादिवारणायेति। एकपुरुषीयानुमित्यव्यवहितपूर्वोत्पन्नद्वित्वादितः तद्भिन्नतः पुरुषान्तरस्यानुमितेर्वारणाय सविषयकत्वनिवेशनमिति भावः। ज्ञानत्वोपेक्षायामिति। अनुमित्यव्यवहितपूर्वक्षणे ज्ञानोत्पत्त्यनियमशङ्कया ज्ञानत्वमुपेक्षितमित्यर्थः।

## गादाधरी

घटज्ञानादितोऽनुमितिपूर्वमनुमितेर्वारणाय उत्पन्नत्वनिवेशनम् । पूर्ववद् वित्वादिवारणाय सविषयत्वनिवेशनम् । ज्ञानत्वोपेक्षायां बीजमपि पूर्ववद्बोध्यम् ।

अत्रोभयत्र स्वत्वघटितत्वेन ततद्व्यक्तिविश्रामादननुगम इति प्रतियोगिनि स्वत्वमन्तर्भाव्यानुगतभेदकूटघटितधर्मेण कारणतां प्रसंजयति—स्वक्षणेति । स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकं स्वं अनुमितिसामग्र्यसमवधान-

---

## भावबोधिनी

अत्रोभयत्रेति । स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयकत्वेन वा कारणत्वपक्ष इत्यर्थः । स्वक्षणाव्यवहितोत्तरक्षणेऽनुत्पत्तिर्यस्यास्सा स्वसमानाधिकरणा चानुमितिर्यस्य तद्भिन्नं सविषयकं तत्त्वेन कारणतेत्यर्थः । स्वं अनुमितिसामग्र्यसमवहितं घटज्ञानादि तदव्यवहितोत्तरक्षणेऽनुमित्यनुत्पत्त्या कालान्तरे तदधिकरणे आत्मनि अनुमित्युत्पत्त्या च तत् स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमामाधिकरणानुमितिकं भवति तद्भिन्नः सविषयकः अनुमित्यव्यवहितपूर्वक्षणोत्पन्नः तत्समानाधिकरणः परामर्शादिः तस्य हेतुत्वात् ततोऽनुमित्युपपत्तिः । भेदप्रतियोगिपरस्वपदेन परामर्शादिः ग्रहीतुं न शक्यत इति सूचनाय अनुमित्यव्यवहिपूर्वक्षणोत्पन्न इत्युक्तम् ।

यत्र परामर्शाव्यवहितोत्तरक्षणेऽनुमितिरुत्पद्यते यत्र भिन्नान्तविशेषणाक्रान्तपरामर्शस्यानुमित्युत्पत्तिक्षणेऽपि सत्त्वात् ततः अनुमित्युत्पत्त्यनन्तरमनुमित्यापत्तिः, तद्वारणाय उत्पत्तिकालावच्छिन्नत्वविशेषणं पूर्ववत् सविषयके दातव्यमेव । पूर्वतनदीधितिग्रन्थाच्च तदत्रानुषञ्जनीयमित्याह—तादृशादेव परामर्शादिति ।

ननु सविषयके उत्पत्तिक्षणावच्छिन्नत्वविशेषितेति विशेषणे दत्तेऽपि अनु-

## गादाधरी

क्षणोत्पन्नं घटज्ञानादिकमेव तदन्यसविषयकोऽनुमित्यव्यवहितपूर्वक्षणोत्पन्नतत्समानाधिकरणपरामर्शादिः अतस्ततोऽनुमित्युपपत्तिः। तादृशादेव परामर्शादनुमित्यनन्तरमनुमित्यन्तरवारणायात्राप्युत्पत्तिकालावच्छिन्नत्वविशेषितेनेत्यनुषज्यते। न चैवं स्वोत्पत्तिक्षणावच्छिन्नत्वस्यानुयोगिनि प्रवेशेनाननुगमस्यावश्यकतया प्रयासोऽयमफल इति वाच्यम्; तत्तद्वस्तुनिष्ठतत्तदधिकरणसमयध्वंसाधिकरणसमयसंबन्धानामभावकूटविशिष्टस्यैवात्रोत्पत्तिकालावच्छिन्नार्थत्वात्तादृशस्य चानुगतत्वात् स्वसमानाधिकरणानु-

---

## भावबोधिनी

मित्युत्पत्तिक्षणे विद्यमानस्य परामर्शस्य अनुमित्युत्पत्तिक्षणावच्छिन्नत्वमस्तीति तद्दोषतादवस्थ्यवारणाय स्वोत्पत्तिक्षणावच्छिन्नेत्यवश्यं वक्तव्यम्। स्वपदस्य च भेदानुयोगिसविषयकपरस्य तत्तत्सविषयकव्यक्तिविश्रान्ततया अननुगमतादवस्थ्यादेतत्परिष्कारप्रयासो विफल इति शङ्कते—न चैवमिति। तत्तद्वस्तुनिष्ठाः ये तत्तद्वस्त्वधिकरणक्षणध्वंसाधिकरणक्षणसंबन्धाः तेषां ये अभावाः तत्कूटविशिष्टेति उत्पत्तिकालावच्छिन्नेत्यस्य प्रकृतेऽर्थः। ते च संबन्धाः परामर्शद्वितीयक्षणोत्पन्नवस्तुनिष्ठाः तदभावकूटविशिष्टत्वं प्रथमक्षणीयपरामर्शस्यैवेति न दोष इति भावः।

नन्वेवमपि जन्ये सविषयके भेदकूटाप्रसिद्धिः। तथाहि यादृशपरामर्शाव्यवहितोत्तरक्षणे तदात्मन्यनुमितिर्जायते तादृशपरामर्श एव भिन्नान्तविशेषणाक्रान्तः। तदव्यवहितोत्तरक्षणानुत्पत्तिकत्वस्यानुमितावभावात् तस्य स्वपदेन धर्तुमशक्यत्वादिति वक्तव्यम्। परं तु अनुत्पादकपरामर्शाधिकरणे आत्मनि कालान्तरे उत्पन्नायानुमितस्तस्याः एतदनुमित्युत्पादकपरामर्शाव्यवहितोत्तरक्षणानुत्पत्तिकतया तत्समानाधिकरणतया च स्वसमानाधिकरणस्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकानुमितिकत्वात् परामर्शस्य तद्भिन्नत्वविरहात्। एवंरीत्या सर्वेषामप्यनुमित्यव्यवहितपूर्ववर्तिनां सविषय-

गादाधरी

मितित्वावच्छेदेन स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वं विवक्षणीयम् । अतोऽनुमित्युत्पादकपरामर्शाद्यधिकरणक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वस्य तत्परामर्शसमानाधिकरणकालान्तरीणानुमितौ सत्त्वेपि न जन्यसविषयके भेदकूटाप्रसिद्धिः । स्वक्षणाव्यवहितोत्तरत्वं पूर्वंनिरुक्तं ग्राह्यम् । तत्पुरुषीययादृशघटज्ञानाद्युत्तरं तदीयानुमितावनुत्पन्नायामेव तस्य पुंसो मुक्तिस्तादृशमेव घटज्ञानादिकं स्वाधिकरणसमयोत्तरक्षणानु-

---

भावबोधिनी

ज्ञानां स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वसमानाधिकरणकालान्तरीयानुमितिकतया तद्भेदकूटविशिष्टस्य जन्यसविषयकस्य दौर्लभ्यम् । ईश्वरज्ञानादेर्नित्यसविषयकस्य त्वव्यावर्तकतया न कारणत्वमित्याशङ्क्य स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वं स्वसमानाधिकरणानुमितित्वावच्छेदेन विवक्षणीयम् । स्वसमानाधिकरणानुमितिसामान्ये तादृशानुत्पत्तिकत्वं निवेशनीयमिति यावत् । कालान्तरीयानुमितौ तादृशानुत्पत्तिकत्वसत्त्वेऽपि स्वसमानाधिकरणानुमितित्वाश्रये परामर्शाव्यवहितोत्तरक्षणोत्पन्नानुमितौ स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वविरहेण तादृशानुमितित्वावच्छेदेन तादृशानुत्पत्तिकत्वविरहात् स्वपदेनानुमित्युत्पादकपरामर्शादेः ग्रहीतुमशक्यतया अनुमित्यनुत्पादकपरामर्शादेरेव ग्राह्यतया तद्भिन्नत्वस्यानुमित्यव्यवहितप्राक्क्षणोत्पन्नपरामर्शे सत्त्वात् नाप्रसिद्धिरिति समाधत्ते–स्वसमानाधिकरणेत्यादिना । पूर्वंनिरुक्तं ग्राह्यमिति । स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वं स्वक्षणाव्यवहितोत्तरत्वमित्यर्थः । सत्यन्तमव्यवहितत्वरूपम्, विशेष्यमुत्तरत्वरूपम् । तत्राव्यवहितत्वरूपसत्यन्तनिवेशस्य प्रयोजनमाह–तत्पुरुषीयेति । तथा चाव्यवहितत्वानुपादाने स्वाधिकरणक्षणध्वंसाधिकरणक्षणानुत्पत्तिकत्वसमानाधिकरणानुमितिकसविषयकं पक्षतेति स्यात् । तथा सति यादृशघटज्ञानोत्तरमनुमितिर्न जायते तादृशघटज्ञानादिकमपि स्वपदेनोपादातुं न शक्यते, तादृशघटज्ञाननाशा-

## गादाधरी

त्पत्तिकस्वसमानाधिकरणानुमितिसामान्यकमिति परामर्शाद्यसमवहितात्ततदन्यघटज्ञानादितोऽनुमित्यापत्तिस्तस्य स्वपदेनोपादानासंभवादतोऽव्यवधाननिवेशः। निरुक्ताव्यवधानस्य चानुमित्यनुत्पादकघटज्ञानादेः पूर्वं कदाचिदुत्पन्नाया अप्यनुमितेरुत्पत्त्यधिकरणक्षणे अव्यवहितोत्तरत्वस्य तादृशानुमित्युत्पत्तिमति तादृशघटज्ञानादिद्वितीयक्षणपर्यन्तस्थायिस्थूलकाले सत्त्वात्तादृशं स्वमप्रसिद्धमेव स्यात्; अत उत्तरत्वक्षणत्वयोर्निवेशनम्। अनुमितेः स्वाव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकतया स्वपदेनोपादानासम्भवात्ततोऽनुमित्यन्तरापत्तिरत उत्पत्तिनिवेशः। व्यधिकरणानुमित्यव्यवहित-

---

## भावबोधिनी

नन्तरं तदात्मनि अनुमित्युत्पादसंभवात्, स्वक्षणोत्तरक्षणोत्पत्तिकानुमितिकत्वात् तस्य। अपि तु तत्पुरुषीययादृशघटज्ञानानन्तरं स पुरुषः अनुमित्युत्पत्तिं विनैव मुक्तः तदेव घटज्ञानं स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकं, तद्भिन्नं सविषयकं अनुमित्यनुत्पादकं पुरुषान्तरीयं घटज्ञानमपि इति तस्यापि अनुमितिहेतुत्वापत्तिः। तद्वारणाय अव्यवहितत्वनिवेशः। तन्निवेशे अमुक्तपुरुषीयं घटज्ञानमपि स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकमिति तद्भिन्नत्वविरहान्न तस्य हेतुत्वापत्तिरिति भावः।

उत्तरत्वक्षणत्वयोर्निवेशस्य प्रयोजनमाह—निरुक्ताव्यवधानस्येति। स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वरूपस्याव्यवधानस्येत्यर्थः। तथा च उत्तरत्वानिवेशे यादृशघटादिज्ञानोत्तरमनुमितिर्न जायते तादृशघटादिज्ञानाव्यवहिते पूर्वकाले तदात्मनि उत्पन्ना या अनुमितिः तमादाय स्वक्षणाव्यवहितक्षणोत्पत्तिकानुमितिकत्वस्यैव सत्त्वेन स्वक्षणाव्यवहितक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकमेव अप्रसिद्धं स्यात्। अत उत्तरत्वनिवेशः। तथा च तत्राव्यवहितपूर्वक्षणेऽनुमित्युत्पत्ता-

## भावबोधिनी

ऽपि अव्यवहितोत्तरक्षणेऽनुमित्यनुत्पत्त्या स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकानुमितिकं घटज्ञानादिकं प्रसिद्धमेवेति न दोषः। क्षणपदमनुपादाय स्वक्षणाव्यवहितोत्तरकालानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयकं हेतुरित्युक्तौ यादृशघटज्ञानाव्यवहितोत्तरक्षणेऽनुमितिर्न जायते अपि तु त्रिचतुरक्षणानन्तरमनुमितिर्जायते तादृशानुमितेः घटज्ञानद्वितीयक्षणमारभ्य अनुमित्युत्पत्तिक्षणपर्यन्तस्थायी यः स्थूलकालः स घटज्ञानाव्यवहितोत्तरकाल इति तादृशस्थूलकालोत्पत्तिकतया स्वक्षणाव्यवहितोत्तरकालानुत्पत्तिकस्वसमानाधिकरणानुमितिकस्य अप्रसिद्धिः स्यात्। अतः क्षणत्वनिवेशः। तथा च घटज्ञानस्य स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकानुमितिकतया नाप्रसिद्धिरिति भावः। तादृशं स्वमिति। स्वक्षणाव्यवहितक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकं स्वक्षणाव्यवहितोत्तरकालानुत्पत्तिकस्वसमानाधिकरणानुमितिकं चाप्रसिद्धमिति भावः।

स्वक्षणाव्यवहितोत्तरक्षणावृत्ति इत्यनुक्त्वा स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकेत्युक्तेः प्रयोजनमाह—अनुमितेरिति। परामर्शादितो जाता यानुमितिः तस्याः स्वक्षणाव्यवहितोत्तरक्षणवृत्तितया तदवृत्तिस्वसमानाधिकरणानुमितिकं घटज्ञानादि तद्भिन्नं सविषयकमनुमितिः इति तस्याः कारणत्वापत्तौ अनुमित्यनन्तरमनुमित्यापत्तिः। अतः अनुत्पत्तिकेत्युक्तम्। तदुक्तौ चानुमित्यनन्तरक्षणेऽनुमितेः सत्त्वेऽपि अनुत्पत्त्या स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकानुमितिकतया तद्भिन्नत्वविरहात् नानुमितेः अनुमितिहेतुत्वमित्याशयः। स्वेतरत्वोपादाने तु यत्र अपेक्षाबुद्ध्यात्मकानुमितिः ततः सिद्धिः तत्र स्वसमानाधिकरणानुमितिसामान्यान्तर्गततदनुमितेः स्वभिन्नस्वक्षणाव्यवहितोत्तरक्षणवृत्तितया तद्दशसिद्धिद्वितीयक्षणेऽनुमित्यन्तरापत्तिः। तदनुमितेः स्वभिन्नस्वक्षणाव्यवहितोत्तरक्षणवृत्तिभिन्नस्वसमानाधिकरणानुमितिकत्वेऽपि तद्भिन्नसविषयकत्वादिति कृष्णम्भट्टीये।

दीधितिः

करणानुमितिकसविषयत्वेन वा किं वा स्वसमानाधिकारणानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टज्ञानत्वादिना कारणत्वं स्यात् । अव्यवहितोत्तरश्च द्वितीयक्षण एवेति नातिप्रसङ्गः । न चाद्रिमेषु

गादाधरी

पूर्वोत्पन्नघटज्ञानादिवारणाय सामानाधिकरण्यमनुमितिविशेषणम् ।

द्वितीयकल्पेऽनुमित्यव्यवहितपूर्वक्षणोत्पत्तिमुपलक्षणीकृत्य पृथगुत्पत्तिकालस्य विशेषणतया निवेशापेक्षया तादृशक्षणोत्पत्तिघटकतादृशक्षणवृत्तित्वस्य विशेषणतया निवेशनमेवोचितम्, तावतैवातिप्रसङ्गभङ्गात् इत्याशयेनाह-किंवेति । पदकृत्यस्तुतिः स्फुटैव । यादृशपरामर्शाद्द्वितीयक्षणे किमपि ज्ञानं नोत्पन्नं तृतीयक्षणे चानुमितिर्जाता, तत्र परामर्शरूपज्ञानस्यैवानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टस्यानुमित्यव्यवहित-

भावबोधिनी

द्वितीयकल्प इति । उत्पत्तिकालावच्छिन्नत्वविशेषितेन स्वक्षणाव्यवहितपूर्वक्षणोत्पन्नसविषयत्वेन हेतुत्वमिति द्वितीयकल्प इत्यर्थः । अतिप्रसङ्गभङ्गादिति । अनुमित्यव्यवहितपूर्वोत्पन्नज्ञानादेः अनुमित्युत्पत्त्यधिकरणक्षणेऽपि सत्त्वात् तदनन्तरमनुमित्यन्तरापत्तेरभावादित्यर्थः । अनुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टस्य परामर्शादेरनुमित्युत्पत्तिक्षणेऽभावादिति भावः । पदकृत्यावृत्तिरिति । अव्यवहितोत्तरत्वक्षणत्वादीनां प्रयोजनमित्यर्थः । स्फुटैवेति । द्वितीयकल्पव्याख्यानावसरे प्रयोजनस्य दर्शितत्वादिति भावः । प्रथमकल्पद्वये उत्पत्तिप्रवेशात् अनुमित्यव्यवहितप्राक्क्षणे ज्ञानोत्पत्त्यनियमशङ्कया ज्ञानत्वमुपेक्षितम् । किं वेत्याद्यस्मिन् कल्पे तु उत्पत्त्यघटनात् ज्ञानस्य च अनुमित्यव्यवहितपूर्वक्षणे वृत्तिसंभवाद् ज्ञानत्वमेव निवेशयितुं

## गादाधरी

प्राक्क्षणे सत्त्वात् ज्ञानत्वमुपेक्ष्य सविषयकत्वनिवेशनमफलमित्यतो ज्ञानत्वमेवात्र निवेशितम्। अत्राप्यनुयोगिनि स्वत्वान्तर्भावेनाननुगमस्तु नाशंकनीयः; पूर्वकल्पद्वयेपि तत्सत्त्वात् गौरवस्य चाधिक्यात्। अननुगमासहिष्णुतायां तु तत्तद्वस्तुनिष्ठतत्तद्वस्तुसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणसंबन्धानामभावकूटविशिष्टज्ञानत्वेन कारणत्वप्रसक्तिर्बोध्या। न चोपदर्शितसकलरूपापेक्षया लिंगपरामर्शत्वस्य लघुतया तेनैव रूपेण परामर्शहेतुत्वमुचितमिति च प्रतिबन्ध्यवकाश इति वाच्यम्; उक्तरूपेण हेतुत्वे कारणान्तरविरहदशायामुक्तरूपावच्छिन्नविरहेणैवानुमितिवारणसम्भ-

---

## भावबोधिनी

शक्यं न सविषयकत्वम् इत्याह—यादृशपरामर्शेति। अन्यत् सर्वं निगदव्याख्यातम्।

पूर्वकल्पत्रय इति। उत्पत्तिकालावच्छिन्नत्वविशेषितेन स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वेन तादृशेन स्वसमानाधिकरणानुमित्यव्यहितपूर्वक्षणोत्पन्नसविषयकत्वेन स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयकत्वेन वा कारणत्वमिति त्रिषु कल्पेषु इत्यर्थः। न चादिमेष्वित्यादिदीधितेरयमर्थः—यत्रादौ सिद्धिः ततः परामर्शः ततः प्रतिबन्धकसिद्धिसत्त्वेन क्षणविलम्बेन अनुमितिः तत्र परामर्शतृतीयक्षणे अनुमितिं प्रति परामर्शस्यैव हेतुत्वं वक्तव्यम्। तच्च न संभवति, परामर्शाव्यवहितोत्तरक्षणेऽनुमितेरनुत्पत्त्या परामर्शस्य स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वाभावात्, अनुमित्यव्यवहितपूर्वक्षणोत्पन्नत्वाभावात् स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकानुमितिकत्वेन तद्भिन्नत्वाभावाच्च। परामर्शद्वितीयक्षणे ज्ञानान्तराभावाच्चेति प्रश्नः। परामर्शद्वितीयक्षणे परामर्शविषयकः परामृशामीत्याकारकः अनुव्यवसायः जायते ततोऽनुमितिरिति अनुव्यवसाय एव तत्र स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया हेतुः।

गाबाधरी

वात्। कारणान्तरंयाकल्पनीयतया लिंगपरामर्शत्वापेक्षया तच्छरीरगौरवस्याकिंचित्करत्वात्। ननु यत्र घटज्ञानादिद्वितीयक्षणे लिङ्गपरामर्शस्तदुत्तरमनुमितिस्तत्र परामर्शोत्पत्तिक्षणेप्यनुमितिप्रसङ्गः, प्रथमक्षणमपेक्ष्य द्वितीयस्येव द्वितीयक्षणमपेक्ष्य तृतीयस्यापि क्षणस्याव्यवहितोत्तरत्वेन तादृशघटज्ञानादेः स्वक्षणाव्यवहितोत्तरक्षणोत्पन्नानुमितिकत्वात्, इत्यत आह–अव्यवहितोत्तरश्चेति। द्वितीयक्षण एवेति। अव्यवहितोत्तरत्वमध्ये स्वक्षणस्य न प्रातिस्विकरूपेण निवेशः; किं तु स्वाधिकरण-

---

भावबोधिनी

न च परामर्शरूपानुमितिसामग्रीसत्त्वात् भिन्ने विषये अनुमितिसामग्र्याः प्रतिबन्धकत्वात् कथं मानसप्रत्यक्षरूपोऽनुव्यवसायः परामर्शद्वितीयक्षणे भवितुमर्हति इति वाच्यम्। परामर्शमात्रं न प्रतिबन्धकम्, अपि तु अनुमितिसामग्री। सा चानुमित्यव्यवहितपूर्वक्षण एवास्ति न तु ततः प्राक् इति। अथ वा ज्ञानत्वेन न हेतुता, अपि तु सविषयकत्वेन। उक्तस्थले परामर्शानन्तरं परामर्शविषयवह्निविषयकः संस्कारो जायते, ततोऽनुमितिरिति स एवानुमित्यव्यवहितपूर्ववर्तिसविषयको हेतुर्भविष्यतीति समाधानम्। परामर्शस्थितिक्षण इति। परामर्शोत्पत्तिद्वितीयक्षणे इत्यर्थः। ननु संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिरित्यत आह–संस्कारजन्यत्वेनेति। संस्कारत्वावच्छिन्नजनकतानिरूपितजन्यत्वमेव स्मृतित्वप्रयोजकं न तु सविषयकत्वावच्छिन्नजनकतानिरूपितजन्यत्वमिति नानुमितेः स्मृतित्वप्रसङ्ग इति भावः।

गादाधर्या–शेषकल्प इति। स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टज्ञानत्वेन हेतुत्वमिति कल्प इत्यर्थः। तथा च तत्कल्पे यत्रादौ सिद्धिः ततः परामर्शः ततः क्षणविलम्बेन अनुमितिः तत्र अनुमित्यव्यवहितपूर्वक्षणे परामर्शो वर्तत इति पूर्वक्षणवृत्तित्वविशिष्टपरामर्शस्य हेतुत्वं संभवतीति पूर्वकल्पेषु हेतुत्वानु-

## गादाधरी

कालत्वेन। तथा च स्वाधिकरणकालध्वंसाधिकरणत्वसामान्याभावस्य तृतीयक्षणेऽसत्वान्न तस्याव्यवहितोत्तरत्वमिति भावः।

पूर्वकल्पत्रये ज्ञानत्वमुपेक्ष्य सविषयकत्वनिवेशनप्रयोजनं स्फुटयितुमाशंकते-न चादिमेष्विति। शेषकल्पे विनश्यदवस्थपरामर्शजन्यानुमितिस्थले स्वव्यवहितपूर्वक्षणवृत्तित्वविशिष्टस्य परामर्शस्यैवानुमित्यव्यवहितपूर्वक्षणे सत्वान्नानुपपत्तिरित्यत आदिमेष्वित्युक्तम्। अतथात्वादिति। तद्द्वितीयक्षणे अनुमित्यनुत्पत्त्या तत्कारणतावच्छेदकानाक्रान्तत्वादुत्पत्तिकालावच्छिन्नस्यानुमित्यव्यवहितप्राक्क्षणेऽसत्वाच्चेत्यर्थः। अनुमित्युत्पत्तिक्षण इव दर्शितस्थले अनुमितिपूर्वमपि परामर्शेन प्रतिबन्धात् अनुव्यव-

---

## भावबोधिनी

पपत्तिः प्रदर्शितेति भावः। तत्कारणतावच्छेदकानाक्रान्तत्वादिति। कारणतावच्छेदकं स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वादिकम्। तद्द्वितीयक्षण इति। परामर्शोत्पत्तिद्वितीयक्षण इत्यर्थः। अनुमितेः प्रत्यक्षस्य च समानविषयकत्वे समानविषयकप्रत्यक्षसामग्र्याः अनुमितिप्रतिबन्धकत्वात् अनुमितिर्न जायते शाब्दबोधानुमित्योः भिन्नविषयकयोः सामग्रीसत्त्वे भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वात् शाब्दबोधो न जायते। एवं भिन्नविषयकप्रत्यक्षशाब्दबोधसामग्र्योर्मध्ये भिन्नविषयकशाब्दबोधसामग्र्याः भिन्नविषयकप्रत्यक्षप्रतिबन्धकत्वात् प्रत्यक्षमपि न जायते इत्याशयेन किमपि ज्ञानं न जायत इत्युक्तम्। तत्तत्सामग्र्यभावश्च न प्रतिबन्धकतावच्छेदकघटक इत्याशयः। उपेक्षात्मकः इति। संस्कारानाधायकोऽनुभवः उपेक्षा।

अन्यथेति। संस्कारनिष्ठजनकतानिरूपितजन्यत्वमात्रस्य स्मृतित्वप्रयोजकत्व इत्यर्थः। जन्यमात्रं कालोपाधिः कालोपाधीनां च कार्यसामान्यहेतुत्वात् घट-

दीधितिः

परामर्शस्थितिक्षणे यत्र विरोधिसिद्धिविनाशस्तत्रोत्तरक्षणेऽनुमितिर्न स्यात् परामर्शस्यातथात्वादिति वाच्यम्; अनुमितिसामग्र्या विरोधिन्या विरहेण तदानीमुत्पन्नादेवानुव्यवसायादेरन्ततः संस्काराद्वा तत्संभवात्, संस्कारजन्यत्वेन स्मृतित्वस्य प्रागेव निरासात्। स्याद्वा

---

गादाधरी

सायादिर्नोत्पत्तुमर्हतीति शंकानिरासाय अनुमितिसामग्र्या विरोधिन्या विरहेणेति। परामर्शमात्रं न प्रतिबन्धकम्; अपि त्वनुमितिसामग्र्येव, तथा च न तत्सामग्री, तस्याः फलाव्यवहितप्राक्काल एव सत्त्वादिति। तदानीम्–तादृशपरामर्शद्वितीयक्षणे। अनुव्यवसायादेरित्यादिना सन्निकृष्टवस्त्वन्तरज्ञानपरिग्रहः। ननु यत्र परामर्शोत्पत्तिकाले समानविषये लौकिकचाक्षुषादिप्रत्यक्षस्य भिन्नविषये च शाब्दबोधस्य सामग्र्यासीत्तद्द्वितीयक्षणे विनिगमनाविरहेण किमपि ज्ञानं न जायते; सकलज्ञानसामग्रीषु प्रतिबन्धकसमवधानस्य तुल्यत्वात्; अतः तद्द्वितीयक्षणे प्रत्यक्षादिसाम-

---

भावबोधिनी

संस्कारस्यापि कालोपाधित्वेन रूपेण पटज्ञानहेतुत्वात् पटज्ञानस्य स्मृतित्वप्रसङ्गः। एवं यत्र संस्कारेण किमप्यनुमीयते तत्र लिङ्गकरणतामते लिङ्गत्वेन संस्कारजन्यत्वमनुमितेरस्तीति अनुमितेरपि स्मृतित्वापत्तिः। अतः संस्कारत्वावच्छिन्नजनकतानिरूपितजन्यत्वमेव स्मृतित्वप्रयोजकमिति भावः।

प्रकृतसाम्यायेति। सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नसिद्धित्वेन प्रतिबन्धकत्वं प्रकृतम्, तत्साम्यायेत्यर्थः। प्रतिबन्धकत्वमेवेति। एवकारेण कारणत्वप्रसञ्जनस्य पूर्वकृतस्य व्यवच्छेदः। कार्यानुत्पत्ति-

## गाङ्गाधरी

ग्रीविगमेऽपि तृतीयक्षणे नानुमितिः स्यात्; उक्तकारणतावच्छेदकाक्रान्तज्ञानाभावात्, इत्यत आह अन्तत इति. कथंचित् ज्ञानानुत्पादेऽपीत्यर्थः। संस्कारादिति। तस्यापि सविषयकत्वघटिततत्कारणतावच्छेदकाक्रान्तत्वादिति भावः। न च यत्र परामर्शादिरुपेक्षात्मकस्तत्र का गतिरिति वाच्यम्, फलानुरोधेन तत्र संस्कारकल्पनाया आवश्यकत्वेन परामर्शादिरुपेक्षात्वस्यैवासिद्धेः। नन्वनुमितेस्संस्कारजन्यत्वोपगमे तस्याः स्मृतित्वापत्तिः, संस्कारजन्यज्ञानत्वस्य स्मृतित्वप्रयोजकत्वात्, अत आह —संस्कारजन्यत्वेनेति। निरासादिति। संस्कारत्वेन संस्कारजन्यत्वस्यैव स्मृतित्वप्रयोजकत्वात्, अन्यथा

---

## भावबोधिनी

निर्वाह्यतावच्छेदकरूपेणेत्युक्त्या अन्योन्याश्रयः सूच्यते।

स्वसमानाधिकरणानुमित्यव्यवहितपूर्ववर्तिभिन्नमनुमितिप्रतिबन्धकम्। यदव्यवहितोत्तरमनुमितिर्भवति तत् परामर्शादिकं स्वपदग्राह्यम्, तद्भिन्नं सिद्ध्यादिकमनुमितिप्रतिबन्धकम्। अत्र कल्पे यत्र सिद्ध्यात्मकपरामर्शसिषाधयिषानुमितयः तत्र सिद्ध्यात्मकपरामर्शस्यानुमित्यव्यवहितपूर्वसिषाधयिषाक्षणवृत्तितया तद्भिन्नत्वविरहात् अप्रतिबन्धकत्वे सति सिषाधयिषोत्पत्तिक्षणेऽनुमित्यापत्तिः। अतः कल्पान्तरमनुसरतीत्याह सिद्ध्यात्मकपरामर्शानन्तरमिति। यदि सिषाधयिषोत्पत्तिकाले सिद्ध्यात्मकपरामर्शनाशः स्यात् तदा तस्य अनुमित्यव्यवहितपूर्ववर्तिभिन्नतया प्रतिबन्धकतया न सिषाधयिषोत्पत्तिकालेऽनुमित्यापत्तिरित्याशङ्क्य तादृशस्थले आपत्त्यभावेऽपि यत्र न तन्नाशस्तत्रापत्तिरस्त्येवेति कल्पान्तरानुसरणमिति भावः। प्रथमप्रतिबन्धकतावच्छेदकमनुमित्यव्यवहितपूर्ववर्तिभिन्नत्वम्।

स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमिति द्वितीयकल्पः। सिद्धिसिषाधयिषानुमितिस्थले सिद्ध्यात्मकपरामर्शस्यानुमित्यव्यवहितपूर्वक्षणवृत्तित्वेऽपि परामर्शोत्पादक्षणः अनुमित्यव्यवहितपूर्वत्वानधि-

गादाधरी

कालोपाधिविधया ज्ञानान्तरे ज्ञायमानलिङ्गकरणतामते संस्कारलिङ्गकानुमितौ च संस्कारस्य जनकत्वेनातिप्रसङ्गादिति भावः। प्रकृतसाम्याय कार्यानुत्पत्तिनिर्वाह्यता-वच्छेदकरूपेण प्रतिबन्धकत्वमेव प्रसञ्जयति स्वसमानाधिकरणेति। पदव्यावृत्ति-रनुमित्यव्यवहितपूर्ववृत्तिसिद्धिभिन्नसिद्ध्यभावपक्षतावद्बोध्या।

सिद्ध्यात्मकपरामर्शानन्तरं सिषाधयिषोत्पत्तिकाले सर्वत्र तदात्मसमवेतधर्म-नाशस्याप्रामाणिकत्वे यत्र न तन्नाशस्तत्र प्रथमप्रतिबन्धकतावच्छेदकावच्छिन्नस्या-

---

भावबोधिनी

करण इति अनुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टतया प्रतिबन्धकत्वान्न सिषाधयिषोत्पत्तिकालेऽनुमित्यापत्तिः। तद्विशिष्टस्य परामर्शस्य सिषाधयिषोत्पत्ति-कालेऽसत्त्वात् प्रतिबन्धकाभावेन सिषाधयिषोत्पत्त्यनन्तरक्षणेऽनुमितेरुपपत्तिश्चेति भावः।

अनुमित्यव्यवहितपूर्वत्वं नाम अनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्। तथा च अनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमिति फलितम्। तत्र प्रथमक्षणपदप्रयोजनमाह– तत्र क्षणत्वानिवेशे इति। अनुमित्युत्पत्तिकालपदेन महाकालस्य ग्रहणे तदुत्पत्तिकध्वंसप्रतियोगित्वं सर्वेषां क्षणानामस्तीति अनुमित्यव्यवहितपूर्वत्वानधिकरणक्षणाप्रसिद्धिः। अतः महाकालादिवारणाय क्षणपदोपादानमित्यर्थः।

तृतीयकल्पमवतारयति–एवं च तदपेक्षयेति। स्वसमानाधिकरणानुमित्युत्प-त्त्यनधिकरणकालोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टं प्रतिबन्धकम्। अत्र पक्षे क्षणत्वस्य सकृन्निवेशः। पूर्वस्मिन् द्विः इति लाघवम्। यत्र सिद्धिसिषाधयि

## गादाधरी

सत्त्वेनातिप्रसङ्गसम्भवात् कल्पान्तरमाह—स्वसमानाधिकरणेति । उक्तस्थले परामर्शादेरनुमित्यव्यवहितपूर्वक्षणवृत्तित्वेऽपि तदुत्पादक्षणस्यानुमित्यव्यवहितपूर्वत्वानधिकरणतया तद्वृत्तित्वविशिष्टत्वेन तत्परामर्शादेरेव प्रतिबन्धकत्वान्नात्र कल्पे तादृशस्थले सिषाधयिषोत्पत्तिकालेऽनुमितिप्रसङ्ग इति भावः । अत्रानुमितेरव्यवहितपूर्वत्वं वक्ष्यमाणं तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम् । तत्र क्षणत्वानिवेशे अनुमित्युत्पत्त्यधिकरणमहाकालाद्युत्पत्तिकध्वंसमादाय क्षणमात्रस्यैवाव्यवहितपूर्वत्वं स्यादिति क्षणत्वनिवेशनमावश्यकम् । एवं च तदपेक्षया तादृशानुमित्युत्पत्त्यनधिकरणसमयोत्पत्तिकध्वंसप्रति-

---

## भावबोधिनी

पानुमितयः तत्र अनुमित्युत्पत्त्यनधिकरणकालः सिषाधयिषोत्पत्तिकालः तदुत्पत्तिकध्वंसः सिद्ध्युत्पत्त्यधिकरणक्षणध्वंसः तत्प्रतियोगिक्षणवृत्तित्वविशिष्टसिद्धेः प्रतिबन्धिकायाः सत्त्वात् न सिषाधयिषोत्पत्तिकालेऽनुमित्यापत्तिः । उभयत्रैवावश्यकमिति । पूर्वकल्पे चरमक्षणत्वानिवेशे अनुमित्यव्यवहितपूर्वत्वानधिकरणकालवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वेऽनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपानुमित्यव्यवहितपूर्वत्वानधिकरणमहाकालवृत्तित्वविशिष्टस्य परामर्शादेः प्रतिबन्धकतावच्छेदकाक्रान्तस्य अनुमित्यव्यवहितपूर्वक्षणे सत्त्वात् अनुमित्यनुपपत्तिः । अस्मिन् कल्पे उत्तरत्र क्षणत्वानिवेशे स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणकालोत्पत्तिकध्वंप्रतियोगिकालवृत्तित्वविशिष्टस्य प्रतिबन्धकत्वे अनुमित्युत्पत्त्यनधिकरणः यः समयः अनुमित्यनन्तरक्षणः तदुत्पन्नध्वंसः परामर्शमारभ्यानुमितिपर्यन्तस्थायिस्थूलकालध्वंसः तत्प्रतियोगिस्थूलकालवृत्तित्वविशिष्टस्य परामर्शस्य प्रतिबन्धकतया अनुमित्यनुपपत्तिः । अतः उभयत्र चरमक्षणत्वोपादानम् । महाकालस्थूलकालयोः क्षणत्वाभावान्न दोष इति भावः ।

**यदि चेत्यादि ।** अनुमित्युत्पत्त्यधिकरणक्षणोत्पत्तिकध्वंसप्रतियोगित्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमिति पूर्वस्मिन् कल्पे प्रथमक्षणानुपादाने अनु-

## दीधितिः

स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन

---

## गादाधरी

योगिक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमेवोचितम्, अनुमित्युत्पत्त्यनधिकरणसमयस्य क्षणत्वेनानिवेशेऽपि क्षतिविरहात् अनुमित्युत्पत्त्यनधिकरणस्थूलकालोत्पन्नध्वंसप्रतियोगित्वस्यानुमित्यव्यवहितपूर्वक्षणभिन्नक्षण एव सत्त्वात्। चरमक्षणे क्षणत्वनिवेशनं चोभयत्रैवावश्यकम्। अन्यथा अनुमित्यव्यवहितप्राक्क्षणेऽपि तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वानधिकरणमहाकालादिवृत्तित्वविशिष्टसत्त्वेन अनुमित्युत्पत्त्यनधिकरणसमयोत्पन्न-

---

## भावबोधिनी

मित्युत्पत्त्युपलक्षितकालेत्युक्तौ महाकालमादाय अप्रसिद्धिरूपः पूर्वोक्तदोषो भवति। अनुमित्युत्पत्तिविशिष्टकालेत्युक्तौ तु तद्विशिष्टकालोत्पत्तिकः ध्वंसः अनुमितिव्यवहितक्षणध्वंसो न भवति, अपि स्वव्यवहितपूर्वक्षणध्वंस एव तत्प्रतियोगित्वाधिकरणं अव्यवहितपूर्वक्षणः तत्प्रतियोगित्वानधिकरणं व्यवहितपूर्वक्षणः तद्वृत्तित्वविशिष्टस्य प्रतिबन्धकत्वनिर्वाहः। एवं च पूर्वकल्पेऽपि उत्पत्त्यधिकरणकाले क्षणत्वानिवेशान्न गौरवमिति शङ्कायां द्वितीयकल्पे अनुमित्युत्पत्तिविरहोपलक्षितत्वमेव समये निवेश्यते पूर्वकल्पे तु अनुमित्युत्पत्तिविशिष्टत्वमिति गौरवमिति समाधानमत्र विवक्षितम्। गुरुशरीरतयेति। अयं भावः—उपलक्षणं परिचायकम्। तच्चोपलक्षितं परिचाय्य स्वयं निवर्तते। कारणतावच्छेदकशरीरानन्तर्गतं भवतीति यावत्। न तु विशिष्टं तथेति गौरवमिति।

न चैतत्कल्पेऽपीत्यादि। स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयान्यव-

## गादाधरी

ध्वंसप्रतियोगिस्थूलकालविशेषवृत्तित्वविशिष्टसत्त्वेन चानुमितिमात्रानुपपत्तिरित्याशये-नाह– स्वसमानाधिकरणेति ।

यदि च पूर्वकल्पे क्षणत्वानिवेशेऽनुमित्युत्पत्त्युपलक्षितकालोत्पत्तिकत्वनिवेशन एवान्यकालावच्छेदेनानुमित्युत्पत्त्यनधिकरणमहाकालाद्युत्पत्तिकध्वंसमादायातिप्रसङ्गः, न तूत्पत्तिविशिष्टसमयोत्पत्तिकत्वनिवेशे, तथा च क्षणत्वमुत्पत्त्यधिकरणकाले न विवेश्य-मेवेत्युच्यते; तथाप्युपलक्षितोत्पत्तिकत्वापेक्षया विशिष्टोत्पत्तिकत्वस्य गुरुशरीरतयैव

---

## भावबोधिनी

हितपूर्वक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमित्यस्मिन्कल्पेऽपि किं नाम अनुमित्युत्प-त्त्यनधिकरणत्वम्? अनुमित्युत्पत्त्यधिकरणभिन्नत्वं वा? अनुमित्युत्पत्त्यभाववत्त्वं वा? आद्ये यत्र सामग्रीवशात् पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकः अनुमित्यात्मकः परामर्शः ततः पर्वते वह्निमनुमिनुयामित्याकारकानुमित्सा ततः पुनः पर्वतो वह्नि-मानित्यनुमितिः तत्रानुमित्सोत्पादकालेऽनुमित्यापत्तिः । तथा हि–अनुमित्युत्पत्त्यधि-करणभिन्नकालपदेन अनुमित्सोत्पत्तिमतः स्थूलकालस्य अनुमित्साप्राक्क्षणात् अनु-मित्सोत्पत्तिपर्यन्तस्थस्य अनुमित्सोत्पत्तिक्षणात् तदुत्तरक्षणपर्यन्तस्थस्य वा ग्रहणं न संभवति, उभयोरपि स्थूलकालयोः अनुमित्युत्पत्त्यधिकरणतया तद्भिन्नत्वाभावात् । अपि तु प्रथमानुमित्युत्पत्तेः पूर्वकालो वा द्वितीयानुमितेः पश्चात्कालो वा ग्राह्यः तदुत्पत्तिकध्वंसप्रतियोगित्वं च प्रथमानुमित्युत्पत्तिक्षणस्य नास्तीति प्रथमानुमितेः अनुमित्युत्पत्त्यधिकरणभिन्नसमयोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टत्वाभावात् अप्रति-बन्धकत्वापत्त्या तदुत्तरक्षणे अनुमित्सोत्पादक्षणेऽनुमित्यापत्तिरिति । अनुमित्युत्पत्त्य-त्यनधिकरणत्वम् अनुमित्युत्पत्त्यभाववत्त्वं इति द्वितीयपक्षे यद्यनुमित्युत्पत्त्यभावोपलक्षि-तत्वं तत् तदा क्षणान्तरावच्छेदेन अनुमित्युत्पत्त्यभावोपलक्षितो यः स्थूलकालः अनुमित्युत्पत्त्यधिकरणभूतः तदव्यवहितपूर्वक्षणवृत्तित्वविशिष्टस्य परामर्शादेः अनुमिति-

## गादाधरी

कल्पान्तरानुसरणसङ्गतिः । न चैतःकल्पेऽप्यनुमित्युत्पत्तिविरहविशिष्टसमयोत्पत्तिकत्वभेद ध्वंसे निवेश्यम्, अनुमित्युत्पत्त्यधिकरणभिन्नोत्पत्तिकत्वनिवेशे यत्रानुमित्यात्मकपरामर्शानन्तरजातानुमित्यन्तरेच्छाबलात्पुनरनुमितिः, तत्रानुमित्सोत्पादकालस्य तत्पूर्वं परतो वाऽवस्थानावश्यकतयाऽनुमित्युत्पत्त्यधिकरणत्वनियमेन प्रथमानुमित्युत्पत्ति-अधिकरणस्य क्षणस्यानुमित्युत्पत्त्यनधिकरणसमयोत्पन्नध्वंसप्रतियोगितया दुर्घटतया अनुमित्सोत्पत्तिकालेऽनुमित्यापत्तेरनुमित्युत्पत्त्यभावोपलक्षितसमयोत्पत्तिकत्वनिवेशेऽनुमित्यव्यवहितप्राक्क्षणस्यापि तदुत्पत्त्यभावाधिकरणस्थूलकालोत्पत्तिकध्वंसप्रतियोगितया तद्-

---

## भावबोधिनी

प्रतिबन्धकत्वापत्तिः । अतः अनुमित्यभावविशिष्टत्वमेव समये निवेशनीयम् । तथा सति अनुमित्साधिकरणस्थूलकालः तत्क्षणावच्छेदेन अनुमित्युत्पत्त्यभावविशिष्टो भवतीति तदुत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टतया प्रथमानुमितेः प्रतिबन्धकतया नानुमित्सोत्पत्तिकालेऽनुमित्यापत्तिः । एवं च द्वितीयकल्पेऽपि अनुमित्युत्पत्त्यभावविशिष्टत्वं काले निवेशनीयमिति क्व लाघवावकाश इत्याक्षेपसारः । साम्यमिति । पूर्वकल्पे उत्पत्तिवैशिष्ट्यम्, अस्मिन् कल्पे उत्पत्त्यभाववैशिष्ट्यं समये निवेश्यते । तथापि वैशिष्ट्यनिवेशांशेन साम्यमिति भावः । समाधत्ते—क्षणिकक्षणाभ्युपगम इति । समये अनुमित्युत्पत्त्यनधिकरणत्वं नाम अनुमित्युत्पत्त्यधिकरणभिन्नत्वमेव । समयपदेन स्थूलकालो न गृह्यते । अपि तु अनुमित्सोत्पत्त्यधिकरणभूतः क्षणः, तस्य पूर्वापरानुमित्युत्पत्त्यधिकरणत्वाभावात् सः अनुमित्युत्पत्त्यधिकरणभिन्न एव । तादृशक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपं तदव्यवहितत्वं प्रथमानुमित्युत्पत्तिक्षणस्यस्तीति तत्क्षणवृत्तित्वविशिष्टायाः प्रथमानुमितेः प्रतिबन्धकत्वनिर्वाहात् न तदनन्तरमनुमित्सोत्पत्तिकालेऽनुमित्यापत्तिरिति भावः । क्षणिकक्षणेति । क्षणिको यः पदार्थः स एव क्षण इत्यर्थः । न तु तस्य काचन निरुक्तिरपीति भावः ।

## गादाधरी

वृत्तिपरामर्शादेरनुमितिविरोधित्वापत्तेः, तथा च साम्यमिति वाच्यम्; क्षणिकक्षणाभ्युपगमेऽनुमित्युत्पत्त्यनधिकरणत्वोपलक्षितसमयोत्पत्तिकत्वनिवेशेऽपि दर्शितस्थलेऽनुमित्सोत्पत्तिक्षणस्यानुमित्युत्पादानधिकरणतयोक्तदोषानवकाशात्, एतत्कल्पे लाघवसंभवात्। अनुमित्यनधिकरणत्वस्य समयविशेषणत्वेऽनुमित्युत्पत्तिक्षणस्याप्यनुमित्यधिकरणसमयविशेषं प्रत्येवाव्यवहितपूर्वतया तदुत्तरमनुमित्यापत्तिः, अतस्तदुत्पत्त्यनधिकरणत्वपर्यन्त-

---

## भावबोधिनी

ननु अनुमित्युत्पत्त्यनधिकरणेत्यस्य स्थानेऽनुमित्यनधिकरणेत्येवोच्यताम्। किमुत्पत्तिनिवेशेनेत्यत्राह–अनुमित्यनधिकरणत्वस्येति। तथा च अनुमित्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टस्य प्रतिबन्धकत्वमित्युक्ते सति अनुमित्युत्पत्त्यनन्तरमनुमितेर्वारणाय इष्टं प्रतिबन्धकत्वमनुमितेर्न स्यात्। द्वितीयक्षणमादाय हि अनुमितेः अव्यवहितपूर्वक्षणवृत्तित्वं वक्तव्यम्। द्वितीयक्षणस्यापि अनुमित्यधिकरणतया अनुमित्यनधिकरणसमयः तृतीयक्षण एव। तदव्यवहितपूर्वत्वस्यानुमित्युत्पत्तिक्षणेऽभावात् अनुमित्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वरूपप्रतिबन्धकतावच्छेदकानाक्रान्ततया अनुमितेः प्रतिबन्धकत्वानुपपत्तिः। अतः अनुमित्युत्पत्त्यनधिकरणेत्युक्तम्। अनुमित्यधिकरणस्यापि अनुमित्युत्पत्तिद्वितीयक्षणस्य अनुमित्युत्पत्त्यनधिकरणतया अनुमित्युत्पत्त्यनधिकरणद्वितीयक्षणोत्पत्तिकध्वंसप्रतियोगिप्रथमक्षणवृत्तित्वविशिष्टतया अनुमितेः प्रतिबन्धकत्वं निर्वहतीति भावः।

**समयाव्यवहितपूर्वत्वमिति।** तदव्यवहितपूर्वत्वं चेति वक्ष्यमाणदीधित्यनुसारेण समयाव्यवहितपूर्वत्वं नाम समयोत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वमिति लभ्यते। तत्र उत्पत्तिक्षणेत्यस्य प्रयोजनाभावात् समयोत्पत्तिकध्वंसप्रतियोगित्वमेव समयाव्यवहितपूर्वत्वमिति भावः।

दीधितिः

वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्व-विशिष्टत्वेन वा स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन वा प्रतिबन्धकत्वम्, तदव्यवहितपूर्वत्वं च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्। न चात्र

गादाधरी

निवेशः ।समय । व्यवहितपूर्वत्वं समयोत्पत्तिकध्वंसप्रतियोगित्वमेव, न तु वक्ष्यमाणतदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्; तदुत्पत्तिक्षणनिवेशप्रयोजनाभावात्। प्रागभावानभ्युपगन्तृनये तदुत्पत्तिकालीनध्वंसप्रतियोगित्वं पूर्वत्वम्। तथा च तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तिध्वंसाप्रतियोगित्वरूपाव्यवहितत्वस्य स्वातन्त्र्येण निवेशनमफलम्; तदुत्पत्तिकालीनत्वस्थले तदुत्पत्तिकालोत्पत्तिकत्वनिवेशन एव व्यवहितपूर्वकालवारणसम्भवादित्याशयेनानुमित्यव्यवहितपूर्वत्वमनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपमेव वाच्यमित्याह —तदव्यवहितेति । अनुमितिस्थितिक्षणोत्पन्नध्वंसप्रतियोगित्वमनुमित्युत्पत्ति-

भावबोधिनी

प्रागभावानभ्युपगन्तृनये इति । प्रागभावाभ्युपगन्तृनये तु कालिकसंबन्धेन तत्प्रागभाववत्त्वमेव तत्पूर्वत्वमिति भावः। तदुत्पत्तिकालीनत्वस्थल इति। व्यवहितपूर्वक्षणस्य तदुत्पत्तिक्षणवृत्तिकालीनत्वस्थान इत्यर्थः। व्यवहितपूर्वकालेति। व्यवहितपूर्वक्षणस्य तदुत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वेऽपि तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वाभावादिति भावः। अनुमित्यव्यवहितपूर्वत्वमिति। प्रथमद्वितीयकल्पनिविष्टम् अनुमित्यव्यवहितपूर्वत्वम् अनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपम्। तृतीयकल्पनिविष्टं समयाव्यवहितपूर्वत्वं तु समयोत्पत्तिकध्वंसप्रतियोगित्वरूपमिति पूर्वोक्तमेव। तथा च तदव्यवहितपूर्वत्वं चेति दीधितिग्रन्थः प्रथमद्वितीयकल्पाभिप्रायः।

## गादाधरी

क्षणसाधारणम्, अतस्तद्वृत्तित्वविशिष्टस्य विरोधित्वोपपत्तये प्रथमोत्पत्तिनिवेशः। उत्पत्तिविशिष्टोत्पत्तिकत्वनिवेशं तल्लाभायैव क्षणपदम्।

द्वितीयकल्पानुसरणबीजभूतं प्रथमकल्पदोषं कथंचिदुद्धर्तुमाशङ्कते-न चात्रेति। सिषाधयिषोत्पत्तिकाले कस्यचित्तदात्मवृत्तिधर्मस्य नाशे तस्यैवानुमितिपूर्ववृत्ति-भिन्नत्वेन विरोधितया न सिषाधयिषोत्पत्तिकालेऽनुमित्यापत्तिसम्भव इति तदविनाश-स्थलानुसरणम्। अन्यदीयधर्मनाशेऽपि तेन धर्मेणाप्रत्यासन्नतया अन्यदीयानुमितिप्रति-

---

## भावबोधिनी

तत्रत्यतत्पदं चानुमितिपरमिति भावः। प्रथमोत्पत्तिपदप्रयोजनमाह-अनुमितिस्थितिक्षणेति। यदि अनुमित्यधिकरणक्षणोत्पत्तिकध्वंसप्रतियोगित्वम् अनुमित्यव्यवहितपूर्वत्वं तदा अनुमितिस्थितिक्षणोत्पत्तिकध्वंसप्रतियोगिप्रथमक्षणवृत्तितया अनुमितेः प्रतिबन्धकत्वं न स्यात्। तथा चानुमित्यनन्तरमनुमित्यापत्तिः। अतः अनुमित्युत्पत्त्यधिकरणक्षणे-त्युक्तम्। अनुमित्युत्पत्त्यधिकरणक्षणः स्थितिक्षणः (द्वितीयक्षणः) न भवति अपि तु प्रथमक्षण एव; तदुत्पत्तिकध्वंसप्रतियोगिक्षणः अनुमित्युत्पत्तेः प्राक्क्षण एव, तद्वृत्तिभिन्नतया अनुमितेः प्रतिबन्धकत्वनिर्वाह इति भावः। द्वितीयोत्पत्त्यनिवेशे अनुमित्युत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वम् अनुमित्यव्यवहितपूर्वत्वमित्युक्तौ यत्र सिद्धि-नाशक्षणे सिषाधयिषा ततोऽनुमितिः तत्र अनुमित्युत्पत्तिक्षणवृत्तिः यः ध्वंसः सिद्धिक्षणध्वंसः तत्प्रतियोगिक्षणवृत्तितया सिद्धेः तद्भिन्नत्वाभावेन अप्रतिबन्धकत्वा-पत्त्या सिषाधयिषोत्पत्तिकालेऽनुमित्यापत्तिः। अतः द्वितीयोत्पत्तिनिवेशः। तन्निवेशे च अनुमित्युत्पत्तिक्षणे उत्पत्तिमान् ध्वंसः अनुमित्सोत्पत्तिक्षण एव ध्वं तद्वृत्तित्व-विशिष्टभिन्नतया सिद्धेः प्रतिबन्धकतया नापत्तिरिति बोध्यम्।

दीधितौ-प्रथम इति। स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन

गाधादरी

बन्धकत्वासम्भवात् तत्पुरुषोयस्येत्युक्तम्। यद्यपि परामर्शानन्तरं सिषाधयिषोत्पादस्थले परामर्शाव्यवहितप्राक्क्षणे फलेच्छावश्यमेव स्वीकार्या; तथा च तस्या एव सिषाधयिषोत्पत्तिकालेऽवश्यं विनाशः; तथाप्यपेक्षाबुद्ध्यात्मकफलज्ञानाद्यदि परामर्शोत्पत्तिकाले फलेच्छा स्वीक्रियते; तदा परामर्शोत्पत्तिद्वितीयक्षणे आत्मधर्मविनाशो न सम्भवतीत्यभिप्रायेणेदम्। अनुमितौ सुखत्वभ्रमदशायां फलान्तरेच्छामन्तरेणैव सुखत्वप्रकारेणानुमितीच्छा सम्भवतीत्यभिप्रायेण वा। सिषाधयिषानन्तरमनुमित्यनुत्पादे तत्पूर्वोत्पन्नपरामर्शादेरेवानुमित्यव्यवहितपूर्ववृत्तिभिन्नतया विरोधित्वेन नापत्तिसम्भव इत्यतस्तदनन्तरमनुमितिरित्युक्तम्।

---

भावबोधिनी

प्रतिबन्धकत्वमिति प्रथमकल्पः इत्यर्थः। तदुत्पत्तिसमयेऽपि सा स्यादिति। सिषाधयिषोत्पत्तिक्षणेऽप्यनुमितिः स्यादित्यर्थः। तादृशपूर्ववृत्तित्वेनेति। अनुमित्यव्यवहितपूर्ववृत्तित्वेनेत्यर्थः।

गादाधर्यां—तदविनाशेति। ननु सिद्ध्यात्मकपरामर्शस्य स्मरणानात्मकत्वे तज्जनकविशेषणज्ञानादेः तदुभयव्यवसायकज्ञानादेर्वा विनाशः। स्मरणात्मकत्वे तु संस्कारस्येति तादृशस्थलाभावात् कथमेतत्। मैवम्। अपेक्षाबुद्धिद्वितीयक्षणे विशेषगुणोत्पादमते अपेक्षाबुद्धिरूपविशेषणज्ञानद्वितीयक्षणे तादृशस्मृत्यनात्मकतादृशपरामर्शः सम्भवति। अन्यथा तु समूहालम्बनसंस्कारस्य चरमफलनाश्यतया तादृशस्मरणात्मकपरामर्शान्न नाश इत्यभिप्रायेण दीधितिकृतां तथाभिधानसंगतेः। अप्रत्यासन्नतयेति। संबन्धरहिततयेत्यर्थः। स्वसमानाधिकरणत्वस्यानुमितिविशेषणत्वादिति भावः। तथाप्यपेक्षाबुद्ध्यात्मकेति। प्रथममपेक्षाबुद्धिरूपफलज्ञानं ततः फलेच्छापरामर्शौ ततः सिषाधयिषाया उत्पादः ततोऽनुमितिः। तत्र सिषाधयिषोत्पादकाले फलज्ञानस्यापि न नाश इत्यविरोधितेत्यर्थः। स्वमतेऽपेक्षाबुद्धेर्द्वितीय-

## गादाधरी

अनवरतेति। अनवरतपरिस्पन्दमानानां अपरिमितपवनादिपरमाणूनां चेतनेनात्मना समं यः संयोगसंतानः संयोगधारा, तदन्तर्गतव्यक्तीनां प्रतिक्षणमेव नाशादित्यर्थः। अपरिमितानामपि घटादीनामिव स्थिरत्वे सदागतिस्वभावानामपि एकद्व्यादिरूपत्वे प्रतिक्षणं न संयोगविनाशसम्भव इत्यतोऽपरिमितान्तम्। प्रतिक्षणमात्मसमवेतसंयोगादिनाशस्य सम्भवेन प्रामाणिकतेत्याशंक्याह—फलानुत्पादेति। कल्पनासम्भवादिति। अनुमित्युत्पत्तेरुक्तकारणसत्त्वे आवश्यकतया तदनुत्पादस्य तादृशसंयोगादिनाशमन्तरेणानुपपद्यमानत्वादिति भावः। ननु तत्रानुमित्यनुत्पादनिर्वाहाय सिद्ध्यभावादिरूपकारणान्तरमेव कल्प्यताम्; तद्विरहेणापि तत्र तदुपपत्तेरित्यत आह—कारणान्तरेति। ननु अनुमित्यव्यवहितपूर्ववृत्तिभिन्नत्वावच्छिन्नाभावस्य कारणता-

---

## भावबोधिनी

क्षणे गुणानुत्पादात यदीति। ज्ञानेच्छयोर्यौगपद्याभ्युपगमश्च स्वमतेऽस्त्येवेति बोध्यम्।

इदं तु बोध्यम्। अपेक्षाबुद्ध्यात्मकफलज्ञानरूपः परामर्शः ततः फलेच्छा ततः सिषाधयिषा ततोऽनुमितिः तत्रापि प्रयोजनसंभवात् ज्ञानेच्छयोर्यौगपद्यानुधावनं व्यर्थमिति।

अनुमिताविति। सुखत्वप्रकारेणानुमितीच्छाया अनुमितिं विना चरितार्थत्वाभावात् अनुमितिप्रयोजकत्वम् प्रत्यक्षत्वप्रकारेणानुमितेरभावत्।

आवश्यकतयेति। उभयसिद्धतयेत्यर्थः। संदिग्धतयेति। कारणसत्तासन्देहाधीनस्य कार्यानुत्पादः कारणवद्वृत्तिर्नवेत्याकारकस्य अन्वयव्यभिचारसन्देहस्य औचित्यावर्जितत्वादिति भावः। सामग्रीनिष्ठकार्यव्याप्तेरिति। सामग्रीनिष्ठा या कार्यनिरूपिता व्याप्तिः यत्र सामग्री तत्र कार्यमित्येवंरूपा तस्याः कारणत्वे कार्यत्वे

दीधितिः

प्रथमे यत्र सिद्ध्यात्मकपरामर्शानन्तरं सिषाधयिषाया उत्पत्तिकाले तत्पुरुषीयस्य कस्यापि धर्मस्य न विनाशस्तदनन्तरमनुमितिः तत्र तदुत्पत्तिसमयेऽपि सा स्यात्, तत्पूर्वकालीनानां सर्वेषां तादृशपूर्व-वृत्तित्वेनाविरोधित्वादिति वाच्यम्; अनवरतपरिस्पन्दमानापरिमित-

गादाधरी

सिद्धौ उक्तकल्पेऽनुमित्यनुत्पादनिर्वाहाय तादृशकारणाभावोपपादकः संयोगादिनाशः कल्पनीयः, प्रथमं च तादृशकारणताग्रह एव न सम्भवति, उक्तस्थले तदानीं तादृशाभावरूपकारणसत्त्वस्य सन्दिग्धतया अन्वयव्यभिचारसन्देहात्, इत्यत आह—अन्वयव्यभिचारेति कारणत्वग्रहाविरोधित्वादिति। कारणतायाः कार्यव्यापकता-गर्भाया ग्रहे ग्राह्याभावावगाहितया व्यतिरेकव्यभिचारग्रहस्यैव विरोधित्वात् सामग्री-निष्ठकार्यव्याप्तेः कार्यकारणभावाघटकतया तादृशव्याप्तिविरोध्यन्वयव्यभिचारग्रहस्य कार्यकारणभावग्रहविरोधित्वे मानाभावादिति भावः। ननु प्रतिक्षणमात्मनि संयोगा-दिविनाशेपि यत्र दर्शितस्थले सिद्धिरनुमितिरूपा, तत्र द्वितीयक्षणविनष्टसंयोगादेरनु-मितिपूर्वमपि सत्त्वेनाविरोधितया उक्तापत्तिस्तदवस्थैवेत्यत आह—उपादीयन्तामिति।

भावबोधिनी

वा अघटकत्वादित्यर्थः। तथा चान्वयव्यभिचारो नाम कारणवन्निष्ठाभावप्रति-योगित्वम्। तद्ग्रहः कारणव्यापकताग्रहविरोधी। कारणव्यापकता तु न कार्य-कारणभावघटिका। सामग्रीव्यापकत्वात् कार्यस्य। व्यतिरेकव्यभिचारग्रहस्यैवेति। कार्यवान् कारणवान्न वेत्याकारकसंशयादेरित्यर्थः। दर्शितस्थले। इति। यत्र क्रमेण सिद्ध्यात्मकपरामर्शसिषाधयिषानुमितयस्तत्रेत्यर्थः।

दीधितिः

पवनादिपरमाणुचेतनसंयोगसंतानान्तःपातिव्यक्तीनामविरतमेवोपरमात्, फलानुत्पादबलेनापि तादृशकल्पनासम्भवात् कारणान्तरकल्पने गौरवात्। अन्वयव्यभिचारसन्देहस्य कारणत्वग्रहाविरोधित्वात्। उपादीयन्तां वा तत्तदात्मसमयविशेषसम्बन्धा एव तादृशपूर्ववर्ति-

---

गादाधरी

प्रतिबन्धकतया स्वीक्रियन्तामित्यर्थः। समयविशेषः—यदा तत्रात्मन्यनुमितिर्नोत्पद्यते, तदव्यवहितपूर्वक्षणरूपतत्संबन्धस्यानुमित्यव्यवहितपूर्वमभावात्। एवं च सति प्रतिबन्धकता स्वरूपसंबन्धेनैव वाच्या, सर्वत्र क्षणविशेषसंबन्धस्यैव प्रतिबन्धकतासम्भवेन सिद्ध्यादिसाधारण्याभावेऽपि न क्षतिः। क्षणसंबन्धस्य स्वरूपातिरिक्तत्वमभ्युपेत्येदम्। अनतिरिक्तत्वाभिप्रायेणानुगतेन भेदकूटाघटितेन लघुरूपान्तरेण कारणतां प्रसंजयति—भवेद्वेति। एकपुरुषीयानुमित्युत्पादक्षणे सर्वात्मन्यनुमित्यापत्तेर्वारणाय तत्पुरुषीयत्वनिवेशः। क्षणस्य कारणता च यदा तादृशक्षणः तदुत्तरं कार्यमिति कालिकप्रत्यासत्त्या बोध्या। तत्तदात्मसमवेतत्वावच्छिन्नं प्रति तत्तदात्मनस्तादात्म्येन हेतुतया दैशिकातिप्रसङ्गभङ्गो बोध्यः। परामर्शसाधारण्यानुरोधेनाह—तादृशेति।

---

भावबोधिनी

उक्तापत्तिरिति। सिषाधयिषोत्पत्तिकालेऽनुमित्यापत्तिरित्यर्थः। यदा तदात्मनीति। सिद्धिसिषाधयिषानुमितिस्थले तदात्मनि सिषाधयिषोत्पत्तिकालेऽनुमितिर्नोत्पद्यते, तदव्यवहितपूर्वक्षणसंबन्धः सिद्ध्युत्पत्तिक्षणसंबन्धः आत्मनि विद्यमानः अनुमित्यव्यवहितपूर्ववर्ती न भवतीति अव्यवहितपूर्ववर्तिभिन्नः तदात्मनिष्ठः समयसंबन्धः प्रतिबन्धक इति न सिषाधयिषोत्पत्तिकालेऽनुमित्यापत्तिरित्यर्थः। तथा

दीधितिः

भिन्नाः, भवेद्वा तत्तत्पुरुषीयानुमितिं प्रति तत्तदीयानुमित्यव्यवहित-पूर्वक्षणत्वादिना तादृशक्षणवृत्तित्वविशिष्टत्वादिना वा कारणत्वम् । तथा चोपमानादेः प्रमाणान्तरत्वं भज्येत, सर्वत्रानुमितिसामग्रीसम्भवात् । विलीयेत च परामर्शत्वादिना कारणत्वम्, बाधत्वादिना च प्रतिबन्धकत्वम् । अनयैव रीत्या कार्यान्तरेष्वपि क्लृप्तानां कारणानां प्रतिबन्धकानां चातथात्वम्, अक्लृप्तानां च तथात्वं

---

गादाधरी

तदीयानुमित्यव्यवहितपूर्वेत्यर्थः । यद्यप्यत्र पूर्वोपदर्शितस्वसमानाधिकरणस्यानुमिति-विशेषणतयातिप्रसङ्गः शक्यवारणः, तथापि तत्रास्वत्वान्तर्भावेनाननुगममाशंक्य तत्पुरुषीयत्वघटितंतत्कल्पनानुसरणं बोध्यम् । न चैवं पुरुषभेदेन कारणताभेदात्सामानाधिकरण्यप्रत्यासत्त्या लिङ्गपरामर्शत्वसिद्ध्यभावत्वादिना कारणताकल्पनमेवोचितम् इति वाच्यम् । लिङ्गपरामर्शादेरपि लिङ्गादिभेदेन कारणताभेदस्यावश्यकत्वात् पुरुषापेक्षया लिङ्गादीनामेव भूयस्त्वात् । उक्तरूपेण कारणतास्वीकारेऽनिष्टं प्रदर्शयति

---

भावबोधिनी

चानुमित्यव्यवहितपूर्ववर्तिभिन्नः तत्तदात्मनिष्ठः क्षणविशेषसंबन्ध एव प्रतिबन्धकोऽस्तु इति भाव. । ननु तत्तदात्मसमयसंबन्धानां आत्मस्वरूपत्वे तस्य सदातनत्वान्न विरोधित्वसंभवः । तत्तत्समयस्वरूपत्वे तु स्वसमानाधिकरणपुरुषान्तरीयानुमित्य-व्यवहितपूर्वत्वेन सिद्धिसमयस्यापि प्रतिबन्धकत्वं न स्यादित्यत आह-क्षणसंबन्ध-स्येति । अनतिरिक्तत्वेति । तदा दर्शितदोषोऽनुसन्धेयः । यदेति । यदा स्थूलकाले कालिकसंबन्धेन क्षणः तदुत्तरक्षणावच्छेदेन तेन संबन्धेन कार्यमित्यर्थः ।

## गादाधरी

तया चेति। उपमानादेरित्यादिना शब्दपरिग्रहः। प्रमाणान्तरत्वम्—अनुमानबहिर्भूतप्रमाणत्वम्। सर्वत्रेति। उपमानादिस्थले लिङ्गपरामर्शादिघटितानुमितिसामग्र्यनियमात्तत्र प्रमित्यन्तरमुपेयते, अत उपमानादेः प्रमाणान्तरता, अनुमित्युत्पत्तिमात्र-

---

## भावबोधिनी

ननु यदा कालिकसंबन्धेन क्षणः तदा उत्तरक्षणावच्छेदेन जायमानतत्पुरुषीयकार्यस्य अन्यात्मनि प्रसङ्ग इत्यत आह—तत्तदात्मेति। परामर्शसाधारण्येति। समवायसंबन्धेन कारणतासंरक्षणार्थमिदम्। पुरुषापेक्षयेति। लिङ्गत्वस्य केवलान्वयितया पुरुषाणामपि लिङ्गत्वसंभवात् पुरुषतदितरसर्वपदार्थानां लिङ्गत्वादित्यर्थः। अनिष्टमिति। यद्यप्यन्योन्याश्रयभयेनैवेदृशकारणता नास्तीति प्रतिबन्द्युपन्यासतात्पर्यादेव वादिविजयः। तथापीदृशान्योन्याश्रयस्यादोषत्ववादिनमधिकृत्यानिष्टप्रसङ्गोपदर्शनं सफलम्। दोषविशेषत्वेति। श्वैत्यस्मृतावपि शङ्खे श्वेतत्वप्रत्यक्षानुदयात् दोषविशेषत्वेन प्रत्यक्षप्रतिबन्धकता।

अनुमित्यव्यवहितेत्यादि। अनुमित्यव्यवहितपूर्ववर्तिसिद्धिभिन्नसिद्ध्यभावस्य कारणत्ववादिना भिन्नान्तविशेषणविशिष्टसिद्धीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावत्वेन हेतुत्वे स्वीकृते अनन्तसिद्ध्यभावानां कारणत्वं कल्पनीयमिति गौरवम्। अनुमित्यव्यवहितपूर्ववर्तिसिद्धिभिन्नसिद्धित्वावच्छिन्नप्रतियोगिताकाभावस्य हेतुत्वे कार्योत्पत्तिघटितरूपावच्छिन्नाभावस्य हेतुतापर्यवसानात् अन्योन्याश्रयः प्रसज्यते। अतः अनुमित्यव्यवहितपूर्ववर्तिन्यो याः सिद्धिव्यक्तयः तत्तद्भेदकूटविशिष्टसिद्धित्वावच्छिन्नप्रतियोगिताकाभावस्य हेतुत्वं वाच्यम्। तत्रापि कूटत्वस्यैकविशिष्टापरत्वरूपत्वात् तद्भेदविशिष्टतद्भेदविशिष्टेत्यादिरूपेण निवेशे भेदानां विशेषणविशेष्यभावे विनिगमनाविरहप्रसङ्गादित्यर्थः।

दीधितिः

**प्रसज्येत । अत एव न द्वितीयोऽपि प्रकारः, वैयर्थ्याच्च सिद्धेः ।**

---

भावबोधिनी

दीधितौ न द्वितीयोऽपि प्रकारः इत्यस्य अनुमित्यव्यवहितपूर्ववर्तिसिद्धिभिन्नसिद्धित्वावच्छिन्नाभावस्य हेतुत्वमिति द्वितीयः कल्पोऽपि अत एव न युक्तः इत्यर्थः ।

**दर्शिततृतीयक्षणेति ।** स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपं तृतीयक्षणसाधारणमव्यवहितोत्तरत्वम् । **पूर्वोक्तेति ।** सिद्धिपदमनुमित्यव्यवहितपूर्वोत्पन्नस्याव्यवहितपूर्ववर्तिनो घटज्ञानादेरविरोधितोपपत्तय इत्युक्तम् । तन्न संगच्छते । अनुमितेर्घटज्ञानतृतीयक्षणोत्पन्नत्वेन अव्यवहितोत्तरक्षणोत्पन्नत्वात् भिन्नान्तविशेषणाभावादेवाविरोधित्वोपपत्तेः । **तद्वैयर्थ्यमिति ।** न च स्वत्वाननुगमेनाव्यावर्तकभेदनिवेशे गौरवात् प्रथमसिद्धिपदम् । तथा च परामर्शादेः प्रतिबन्धकतावारणाय द्वितीयसिद्धिपदमावश्यकमिति वाच्यम् । तत्तत्सिद्धिभेदकूटस्य विशेषणविशेष्यभावे विनिगमनाविरहेण कारणतानन्त्यप्रसङ्गात् । अतः स्वोत्पत्त्यधिकरणक्षणवृत्तिध्वंसप्रतियोगिकालोत्पन्नध्वंसप्रतियोगित्वे सति स्वोत्पत्त्यधिकरणक्षणवृत्तिध्वंसप्रतियोगिक्षणवृत्तिवृत्तित्वसंबन्धेन स्वाधिकरणक्षणोत्पन्नध्वंसप्रतियोगित्वसंबन्धेन वा अनुमितिमत्त्वेनानुगमः कार्यः । दीधितिकारोक्ताव्यवहितपूर्वत्वाधिकरणक्षणवृत्तित्वं संबन्धः । सामानाधिकरण्यमपि संबन्धघटकम् । स्वोत्पत्तिक्षणे सिषाधयिषाविरहवत्त्वं च । तथा च सिद्धिपदवैयर्थ्यमिति ।

**सिषाधयिषाकालोत्पन्नेति ।** सिषाधयिषाकालोत्पन्ना या अनुमितिः तत्पूर्ववृत्तिपरामर्शादेरित्यर्थः । तथा च यत्र परामर्शतृतीयक्षणे सिषाधयिषानुमिती तत्र परामर्शाव्यवहितोत्तरक्षणः अनुमित्युत्पत्तिक्षणः स सिषाधयिषाविरहविशिष्टो नेति परामर्शस्य भिन्नान्तविशेषणाक्रान्ततया अनुमितिपूर्वं सिषाधयिषाविरहविशिष्टतया च प्रतिबन्धकता स्यात्, तद्वारणाय सिद्धिपदमिति भावः ।

गादाधरी

निर्वाह्यस्योक्तकारणस्यानुमितिसामग्रीत्वे तु तस्यास्सर्वत्रैव सम्भवेन उपमित्यादिरूपविलक्षणप्रमितेरेवासिद्ध्यापत्तेरिति भावः। ननु सर्वत्रैकजातीयप्रमितिसामग्रीसम्भवेऽपि उपमिनोमि शृणोमि अनुमिनोमीत्यनुभवसाक्षिकं प्रमितिवैलक्षण्यं दुरपह्नवमेवेति नोपमानादेः प्रामाणान्तरताभङ्ग इत्यतोऽन्यदोषमाह—विलीयेतेति। उक्तरूपेण परामर्शादेरपि कारणत्वात्—परामर्शत्वादिनेति। अनुमित्यव्यवहितपूर्ववृत्तिभिन्नत्वादिना बाधादेरपि प्रतिबन्धकत्वात्—बाधत्वादिनेति। कार्यान्तरेषु—प्रत्यक्षादिषु। कारणानाम् सर्ववादिसिद्धकारणतावच्छेदकेन्द्रियसन्निकर्षत्वाद्यवच्छिन्नानाम्—प्रतिबन्धकानाम्—सर्वसम्मतप्रतिबन्धकतावच्छेदकदोषविशेषत्वाद्यवच्छिन्नानाम्—अतथात्वम्। अकारणत्वम-

---

भावबोधिनी

ज्ञानेच्छयोर्यौगपद्य इति। यत्र सिषाधयिषासिद्धिपरामर्शाः ततोऽनुमितिसिषाधयिषे युगपत् तत्र परामर्शक्षणे पक्षताभङ्गः। सिद्धितृतीयक्षणस्य सिषाधयिषावत्वेन तृतीयक्षणसाधारणाव्यवहितोत्तरत्वघटितस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्धिसत्त्वात् सिद्धिपदोपादानेऽपि प्रतिबन्धकता दुर्वारेति भावः। चतुर्थक्षण इति। युगपदित्यत्रान्वेति, न तु सिद्धौ, तृतीयक्षणसिद्धावपि एतद्दोषस्य लग्नत्वात्। दुर्वारत्वात् इति। तथा च सिद्धेस्तत्र प्रतिबन्धकत्ववारणाय स्वाधिकरणध्वंसाधिकरणत्वकालिकविशेषणत्वोभयसंबन्धावच्छिन्नसिषाधयिषाविरह उत्तरक्षणविशेषणम्। तथा च दर्शितस्थले सिद्धेर्न विरोधितापत्तिः। न चैवं सिषाधयिषाकालोत्पन्नानुमितिपूर्ववर्तिपरामर्शस्य विरोधितापत्त्यनवकाशात् सिद्धिपदवैयर्थ्यं दुर्वारमेवेति वाच्यम्। यत्रापेक्षाबुद्ध्यात्मकघटज्ञानतृतीयक्षणे परामर्शोऽथानुमितिस्तत्र घटज्ञानस्य प्रतिबन्धकत्ववारणाय सिद्धिपदस्यावश्यकत्वात्। तस्मादत्रानुत्पादक्षणस्य प्रथमक्षणमारभ्य अव्यवधानविरहेऽपि द्वितीयक्षणमारभ्याव्यवधानकल्पः कल्पान्तरं वा आलम्ब्यमिति सिद्धिपदवैयर्थ्यमिति भाव इति कृष्णभट्टः।

## गादाधरी

प्रतिबन्धकत्वं च। अक्लृप्तानाम्। अकारणत्वादिना सर्वानुमतानां कार्याव्यवहितपूर्ववर्त्तितद्भिन्नानामुदासीनवस्तूनाम्। तथात्वम्–कारणत्वादि। प्रसज्येत, तेषामप्युक्तकारणतावच्छेदकादिरूपाक्रान्तत्वादिति भावः। अत एवेति। अनुमित्यव्यवहितपूर्ववृत्तिसिद्धिभिन्नसिद्धीनां तत्तद्व्यक्तित्वावच्छिन्नाभावस्य हेतुत्वे अनन्तकारणताप्रसङ्गात् तादृशसिद्धिभेदवत्सिद्धित्वावच्छिन्नाभावहेतुत्वे तस्यानुमित्युत्पत्त्यधीनतयाऽन्योन्याश्रयात् तत्सिद्धिभेदकूटवत्सिद्धित्वावच्छिन्नाभावहेतुत्वे भेदानां विशेष्यविशेषणभावे विनिगमनाविरहादेवेत्यर्थः। एतन्मते अधिकदूषणमाह–वैयर्थ्याच्चेति। अनुमित्यव्यवहितपूर्ववृत्तिभिन्नत्वावच्छिन्नाभावस्यैव कारणत्वसम्भवात् बाधबुद्ध्यादेरभावस्य परामर्शादेश्च कारणत्वान्तरविलयप्रसङ्गस्येष्टत्वादिति भावः। एतन्मत इव दर्शित-

---

## भावबोधिनी

न च तत्र सिद्ध्यनुपादान इति। उत्तरक्षणे सिषाधयिषाविरहविशेषणानुपादाने यत्र सिद्धिसिषाधयिषानुमितयः तत्र सिद्ध्यधिकरणप्रथमक्षणाव्यवहितोत्तरः यः तृतीयक्षणः तदुत्पत्तिकानुमितिकतया सिद्धेस्तद्भिन्नत्वाभावात् तादृशानुमितिकभिन्नसिद्ध्यभावस्य प्रथमक्षणे सत्त्वात् सिषाधयिषोत्पत्तिक्षणेऽनुमितिः स्यात्। तद्वारणमेव तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे उत्तरक्षणे सिषाधयिषाविरहविशेषणस्य प्रयोजनं पूर्वमुक्तम्। यदि सिद्धिपदं नोपादीयते तदा तद्व्यर्थम्। सिद्धेः पूर्वमुत्पन्नायाः फलेच्छायाः स्वपदेन ग्रहणे तदव्यवहितोत्तरतृतीयक्षणे सिषाधयिषोत्पत्तिक्षणेऽनुमितेरनुत्पत्त्या स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नायाः फलेच्छायाः प्रतिबन्धकतावच्छेदकाक्रान्तायाः सिद्धिकाले सत्त्वादेव सिषाधयिषोत्पत्तिकालेऽनुमितिवारणसंभवादिति शङ्कितुराशयः।

समाधत्ते–सिद्धेरनुमितिरूपत्व इति। यत्र प्रथमतः साध्यव्याप्यानुमित्सा

## गादाधरी

तृतीयक्षणसाधारणाव्यवहितोत्तरत्वघटितस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावरूपपक्षतापक्षेऽपि पूर्वोक्तसिद्धिपदव्यावृत्त्यसङ्गतेस्तद्वैयर्थ्यं बोद्धव्यम्। न च ज्ञानेच्छयोर्यौगपद्ये सिषाधयिषाकालोत्पन्नानुमितिपूर्ववृत्तिपरामर्शादेः सिषाधयिषाविरहविशिष्टाव्यवहितोत्तरक्षणोत्पन्नानुमितिकभिन्नतया पूर्वं सिषाधयिषाविरहविशिष्टतया चानुमितिविरोधिता स्यादिति तत्सार्थकमिति वाच्यम्; ज्ञानेच्छयोर्यौगपद्ये सिद्ध्युपादानेऽपि यत्र पूर्वोत्पन्नसिषाधयिषा चतुर्थक्षणे सिद्ध्यनन्तरं पुनस्सिषाधयिषानुमितिश्च युगपत्तत्र सिद्धेर्विरोधित्वापत्तेर्दुर्वारत्वात्। न च तत्र सिद्ध्यनुपादाने सिषाधयिषाविरहविशेषणस्यापि वैयर्थ्यमापतितम्; यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र सिद्धेरनुमित्यविरोधित्वेऽपि सिषाधयिषोत्पत्तिकाले विनष्टफलेच्छा-

---

## भावबोधिनी

अथ वह्न्यनुमित्यन्तरे इष्टसाधनतावगाही साध्यव्याप्यतद्व्याप्ययोः समूहालम्बनस्मरणं फलेच्छा च ततः साध्यतद्व्याप्ययोः सिद्ध्यात्मिकानुमितिः, अथ वा यत्र साध्यतद्व्याप्यतद्व्याप्ययोः स्मरणं ततः साध्यव्याप्यानुमित्साफलेच्छे ततोऽनुमित्यन्तरेष्टसाधनताविषयकसाध्यतद्व्याप्योभयानुमितिरूपा सिद्धिः अथ वा यत्र बाधबुद्धिपरामर्शफलेच्छाः क्रमेण ततोऽनुमित्सात्मकपरामर्शः ततः क्रमेणानुमित्यन्तरेच्छारूपसिषाधयिषानुमिती तत्र सिद्धेरनुमितिरूपत्वम्। तत्र सिषाधयिषोत्पादकालेऽनुमितिवारणाय सिषाधयिषाविरहवैशिष्ट्यमावश्यकमित्यर्थः। अत्र ज्ञानेच्छयोर्यौगपद्ये यत्र सिद्धिफलेच्छयोरेकः कालः अथ क्रमेण सिषाधयिषानुमिती तत्रापि सिषाधयिषोत्पत्तिकालेऽनुमितेर्वारणं तद्विशेषणफलमिति प्राहुः।

## उपाध्यायपक्षता

समानविषयकप्रत्यक्षादौति। उपाध्यायानामयमाशयः—समाने विषये

## गादाधरी

दीनां विरोधितयैव सिषाधयिषोत्पत्तिक्षणेऽनुमितिवारणसम्भवादिति वाच्यम्; सिद्धेरनुमितिरूपत्वे इच्छाकालविनष्टस्य फलेच्छादेरनुमित्यव्यवहितपूर्ववृत्तितया विरोधित्वासम्भवादिति ।

समानविषयकप्रत्यक्षादिसामग्रीकाले पक्षताविरहेणानुमितिं वारयतो मूलस्थसाधकमानपदं सिद्धिसाधकमानविशेषान्यतरपरतया वर्णयतः उपाध्यायस्य मतमाह—सिषाधयिषेति । सिद्धाविव साधकमानेऽप्यनुमित्सायाः उत्तेजकत्वात् प्रत्येकं तदभाव-

---

## भावबोधिनी

एकदा लौकिकप्रत्यक्षसामग्रीसत्त्वे अनुमितिसामग्रीसत्त्वे च लौकिकप्रत्यक्षमेवोत्पद्यते न त्वनुमितिः । तदनन्तरं साक्षात्करोमीत्यनुव्यवसायस्यैवोदयात् । एवं समाने विषये एकदा शाब्दबोधसामग्रीसत्त्वेऽनुमितिसामग्रीसत्त्वे च शाब्दबोध एव जायते, तदनन्तरं शाब्दयामीत्यनुव्यवसायस्यैवोदयात् । अतो यदि पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयकानुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वम् । पर्वते वह्निप्रत्यक्षसामग्रीदशायां पर्वतो वह्निमान् घटवानित्यनुमित्युत्पादात् विधेयतानिवेशः । प्रतिबन्धकता च पर्वतचक्षुस्संयोगादिविशिष्टवह्निचक्षुस्संयोगत्वादिना । वैशिष्ट्य च स्वावच्छेदकावच्छिन्नवह्निपर्वतसंयोगावच्छेदकावच्छिन्नत्ववक्ष्यमाणपरम्पराघटितसामानाधिकरण्योभयसंबन्धेन । अतः पर्वते वह्निसंयोगावच्छेदकावच्छेदेन पर्वतसन्निकर्षकाले वह्निसन्निकर्षकाले च न तथाविधानुमित्यनुपपत्तिः । तदानीं संयोगप्रत्यक्षसामग्र्यभावेन पर्वतो वह्निमानित्याकारकप्रत्यक्षस्यैवानुत्पादेन तादृशानुमितेरावश्यकत्वात् । एकपुरुषीयपर्वतचक्षुस्संयोगपुरुषान्तरीयवह्निचक्षुस्संयोगोभयस्य प्रतिबन्धकत्ववारणाय द्वितीयसंबन्धनिवेशः । अत्रोभयसंबन्धेन पर्वतालोक-

दीधितिः

सिषाधयिषाविरहविशिष्टस्य सिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभावः कारणमिति तु केचित्। तन्न; साधकमानं हि सिद्धिस्वरूपयोग्यं तदुपहितं तत्सामग्री वा? नाद्यः,

गादाधरी

विशेषणत्वे गौरवमित्यन्यतरत्वावच्छिन्ने सकृत्तद्विशेषणतालाभाय समास उपेक्षितः। अनुमितिपूर्वमनुमानरूपस्यैव साधकमानस्य नियमेन सत्त्वात्सिषाधयिषां विना कदाप्यनुमितिर्न स्यादित्यनुमानातिरिक्तत्वं साधकमानविशेषणं साधकपदार्थघटकसिद्धावनुमित्यन्यत्वविशेषणपर्यवसितम्। साधकमानपदार्थं वितर्क्य दूषयति–साधकमानं हीति। तदुपहितं–स्वजन्यसिद्धिविशिष्टम्। तत्सामग्री सिद्धिकारणसमुदायः। अनुमित्सासत्त्वे तदभावविशिष्टसाधकमानाभावस्याक्षतत्वात् विनानुमित्सामिति। अनुमित्यभावप्रसङ्गादिति। कालिकप्रत्यासत्त्या प्रतिबन्धकत्वाभिप्रायेण। समवायेन

भावबोधिनी

संयोगविशिष्टवह्न्यालोकसंयोगवैशिष्ट्यमपि विशेषणम्। द्वितीयवैशिष्ट्यं च सामानाधिकरण्यमात्रम्। प्रतिबन्धकतावच्छेदकसंबन्धश्चात्मनिष्ठः स्वाश्रयचक्षुस्संयुक्तमनस्संयोगधत्वम्। अत एकपुरुषीयप्रत्यक्षसामग्रीकाले नान्यदीयानुमित्यनुपपत्ति। एवं शाब्दसामग्र्यामपि आकाङ्क्षाज्ञानविशिष्टयोग्यताज्ञानत्वादिना प्रतिबन्धकत्वम्। प्रतिबन्धकतावच्छेदकसंबन्धश्च समवाय समुच्यते, तदा सिद्धिस्थलीयप्रतिबन्धकतावच्छेदकैक्याद् अनुमित्यन्यसिद्धिसामग्रीत्वेन दर्शितसामग्रीद्वयमनुगमय्य तत्य पक्षतान्तर्भाव एवोचितः, कारणतान्तरकल्पनलाघवादिति। तथा च मूलस्थं साधकमानपदं सिद्धि–अनुमित्यतिरिक्तसिद्धिसामग्र्यन्यतरपरम्। सिषाधयिषाविरहेति सिद्धौ अनुमित्यतिरिक्तसिद्धिसामग्र्यां च विशेषणम्। सत्यामपि प्रत्यक्षादिसामग्र्यामनु-

दीधितिः

**चक्षुरादिसत्त्वे विनानुमित्सामनुमित्यभावप्रसङ्गात् । न द्वितीयः; सिद्धेः पूर्वं तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्तेः अनुमानातिरिक्तेत्यस्य वैयर्थ्याच्च ।**

---

भावबोधिनी

गित्सासत्त्वे अनुमितेरेवोदयात् सामग्र्यामपि सिषाधयिषाया उत्तेजकत्वात् । एतत्सूचनायैव दीधितौ सिषाधयिषाविरहविशिष्टसिद्ध्यनुमानातिरिक्तसाधकमानान्यतराभाव इति समासस्योपेक्षा ।

अनुमानातिरिक्तत्वस्य साधकमानविशेषणत्वेऽनुमितिजनकान्यत्वपर्यन्तनिवेशे गौरवादाह–अनुमित्यन्यत्वेति । अनुमित्यन्यसिद्धिसामग्री शाब्दबोधसामग्री च । तदभावः कारणमित्यर्थः । एवं च यथा सिषाधयिषाविरहविशिष्टसिद्धिकालेऽनुमित्यनुदयेन तादृशसिद्ध्यभावस्यानुमितिहेतुत्वं तथा सिषाधयिषाविरहविशिष्ट–समानविषयकप्रत्यक्षसामग्रीकाले तादृशशाब्दबोधसामग्रीकाले चानुमितिर्न जायत इति तयोरभावस्याप्यनुमितिहेतुत्वम् । तस्य पृथग्धेतुत्वकल्पनापेक्षया पक्षताकुक्षिनिक्षेपेण सर्वेषामेकहेतुत्वं युक्तं लाघवादिति उपाध्यायानामाशयः ।

तन्नेत्यादिदीधितिग्रन्थस्य उपाध्यायमतखण्डनपरस्यायमर्थः – अनुमानातिरिक्तसाधकमानपदेनानुमित्यतिरिक्तसिद्धिसामग्री भवद्भिर्विवक्षिता । तत्रापि विकल्प्यते किं सिद्धिस्वरूपयोग्यं विवक्षितम्, किं वा सिद्ध्युपहितं विवक्षितम् अथ वा सिद्धिजनकसमुदायः । आद्ये विनानुमित्सां परामर्शकालेऽनुमितिर्न स्यात् अनुमित्यतिरिक्तप्रत्यक्षस्वरूपयोग्यचक्षुरादेः प्रतिबन्धकस्य सद्भावात् अनुमानातिरिक्तसाधकमानाभावरूपपक्षताविरहात् । द्वितीये यत्र प्रत्यक्षसामग्री वर्तते तत्राप्यनुमितिः

## गादाधरी

प्रतिबन्धकत्वे आत्मनि सर्वदैव चक्षुरादिप्रमाणाभावादतिप्रसङ्गो बोध्यः। प्रत्यक्षसामग्रीसत्त्वे अनुत्पन्ने प्रत्यक्ष इति शेषः। ननु तत्रानुमितिवारणायान्यदेव प्रतिबन्धकमास्थेयम्; सिद्ध्यभावपक्षतामतेपि तदावश्यकत्वादित्यत आह—अनुमानातिरिक्तेति। तथा सति पक्षताशरीरे अनुमानातिरिक्तसाधकमानान्तर्भावस्य निष्फलत्वादित्यर्थः। सिद्ध्यसमवहितसामग्रीदशायाम् अनुमितिवारणस्यैव तत्फलत्वात् साधक-

---

## भावबोधिनी

स्यात्, प्रत्यक्षोत्पत्तेः प्राक्क्षणे प्रत्यक्षरूपसिद्धिविशिष्टायाः तत्सामग्र्याः प्रतिबन्धिकायाः अभावात्। किं च अनुमानातिरिक्तसाधकमानपदं व्यर्थम्। प्रत्यक्षादिसिद्ध्यनुपहितप्रत्यक्षसामग्रीकाले शाब्दसामग्रीकाले चानुमितिवारणार्थं हि तत्। यद्युपहितेत्यर्थो विवक्षितः तदा तदुपादानेऽपि प्रत्यक्षाद्युपहितसामग्रीरूपप्रतिबन्धकाभावात् पक्षतायाः अक्षततया तत्कालेऽप्यनुमित्यापत्त्या तद्वारणरूपप्रयोजनानिर्वाहात्। अतो द्वितीयपक्षो न युक्तः तृतीयेऽपि सामग्रीत्वेन सामग्रीनिवेशे प्रत्यक्षादिसामग्र्यभावः अनुमितिं प्रति कारणम् अनुमितिसामग्र्यभावः प्रत्यक्षं प्रति कारणमिति अन्योन्याश्रयः स्यात्। तस्मात् उपाध्यायमतं न युक्तमिति।

गादाधर्यां—तदभावविशिष्टेति। अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभावस्येत्यर्थः। कालिकप्रत्यासत्त्येति। यदा चक्षुरादिरूपा प्रत्यक्षसामग्री तदा नानुमितिरिति रीत्या प्रतिबन्धकतेत्यर्थः। चक्षुरादिप्रमाणाभावादिति। चक्षुरादिरूपायाः प्रत्यक्षसामग्र्याः आत्मनि समवायसंबन्धेनाभावात्। अतिप्रसङ्ग इति। प्रत्यक्षसामग्रीकालेऽनुमितिप्रसङ्ग इत्यर्थः। न च स्वजनकादृष्टवत्तासंबन्धेन प्रतिबन्धकत्वोपगमान्नातिप्रसङ्ग इति वाच्यम्। इतरविशिष्टमनोयोगानुधावनेन तादृशपरंपरायाः प्रतिबन्धकतावच्छेदकत्वस्योपाध्यायासंमतत्वात्। स्पष्टं चेदमुपरिष्टाद्दीधितौ।

## गादाधरी

मानपदेन सिध्युपहितविवक्षणे च तदनिर्वाहादिति भावः। केचित्तु यथाश्रुतानुरोधेनामुमानातिरिक्तेति तन्मात्रपरमेव, न च सामग्र्याः पृथक्प्रतिबन्धकत्वे साधकमानपदार्थस्य सिद्ध्युपहितस्यापि निवेशनमफलमेवेति वाच्यम्; यत्र विषये प्रत्यक्षाद्युपहितसन्निकर्षादिघटितप्रत्यक्षादिसामग्रीदशायामेव परामर्शादिसमवधानं तत्रानुमितिवारणाय तादृशसाधकमानस्यैव पक्षतायां निवेशयितुमुचितत्वात्। न च तत्रापि सिद्धिप्रतिबन्धकतयैवोपपत्तौ सिद्ध्युपहितत्वनिवेशनमफलमिति वाच्यम्; शाब्दसिद्धि-

---

## भावबोधिनी

अन्यदेवेति। सिद्ध्यनुपहितप्रत्यक्षसामग्रीरूपमित्यर्थः। ननु दीधितिकृता अनुमानातिरिक्तत्वमात्रस्य वैयर्थ्यमुक्तम्। तत्किमिति अनुमानातिरिक्तेत्यादि व्याख्यायत इत्यत आह–सिद्धीति। सिद्ध्युपहितसामग्रीस्थले सिद्धौ वानुमितिवारणसंभवात् साधकमानवैयर्थ्यमेवकारलभ्यम्। तदनिर्वाहादिति। सिद्ध्यनुपहितप्रत्यक्षसामग्र्याः सिद्ध्युपधानस्थलीयसामग्रीप्रतिबन्धकतानाक्रान्ततया तादृशसामग्रीकालीनानुमितिवारणरूपफलानिर्वाहात् साधकमानवैयर्थ्यस्यापि दुर्वारत्वात् सिद्ध्युपहितत्वं प्रतिक्षिप्य सिद्ध्यनुपहितसामग्रीप्रवेशस्यैतत्कल्पे दुर्लभत्वादिति भावः।

यथाश्रुतदीधितिग्रन्थात् साधकमानपदं यदि सिद्ध्युपहितपरम्, तदा अनुमानातिरिक्तेति व्यर्थम्। न च अनुमितेः पूर्वमनुमितिरूपसिद्धिजनकस्य परामर्शादेः नियमेन सत्त्वात् साधकमानाभावरूपपक्षतायाः अनिर्वाहात् अनुमानातिरिक्तेति विशेषणमावश्यकम्। तस्मिन् सति अनुमितेः पूर्वमनुमितिरूपसिद्धिजनकस्य सत्त्वेऽपि अनुमित्यतिरिक्तसिद्धिजनकस्याभावात् पक्षतानिर्वाहादिति वाच्यम्। अनुमितेः पूर्वक्षणे अनुमित्युपहितस्य परामर्शस्याभावादेव पक्षतानिर्वाहात् अनुमानातिरिक्तेति व्यर्थम्। तथा चानुमानातिरिक्तपदमात्रस्य वैयर्थ्यं

## गादाधरी

कालेऽशाब्दं ज्ञानं जायतामितीच्छाबलादनुमित्युपपत्तये सिद्धौ तादृशेच्छाया अवश्य-मुत्तेजकत्वोपगमात्तथाविधेच्छाबलादुपदर्शितप्रत्यक्षसामग्र्यनन्तरमनुमितेर्वारणाय साधक-मानान्तर्भावसार्थक्यात्। न च सिद्ध्युपहितचक्षुस्संयोगादिसत्त्वे आलोकसमवधानाद्य-सत्त्वे तादृशेच्छाबलादनुमित्युत्पत्त्या साधकमानेऽपि तादृशेच्छाया उत्तेजकताया आवश्यकत्वात् पक्षतायां तदन्तर्भावेऽपि उक्तापत्तिवारणासम्भव इति वाच्यम्; यत्र विषयविशेषे प्रत्यक्षोपहितचक्षुस्संयोगादिसत्त्वे इतरकारणसमुदायसत्त्व एवाशाब्दं ज्ञानं

---

## भावबोधिनी

प्रतीयते। तदनुसारेण व्याख्यानमेवोचितमिति केचिन्मन्यन्ते। तन्मतमाह—**केचित्तु इत्यादिना।**

**न च सामग्र्या इति।** साधकमानपदस्य सिद्ध्युपहितपरत्वे यत्र समाने विषये प्रत्यक्षसामग्री अनुमितिसामग्री चास्ति तदा प्रत्यक्षोत्पत्तिपूर्वक्षणे सिद्ध्यु-पहितस्याभावात् उत्तरक्षणेऽनुमित्यापत्तिः। तद्वारणाय प्रत्यक्षानुपहितायाः प्रत्यक्ष-सामग्र्याः पृथक्प्रतिबन्धकत्वोक्तौ पक्षताशरीरे साधकमानपदं व्यर्थम्। उक्त-स्थलेऽनुमितिवारणरूपस्य तत्फलस्य पृथक्प्रतिबन्धकतयैव निर्वाहादिति प्रष्टुराशयः। समाधत्ते—**यत्र विषय इति।** क्षेत्रविशेषपक्षे अङ्कुरविशेषे साध्ये इत्यर्थः। तथा च यत्र विषये प्रत्यक्षरूपफलविशिष्टा सन्निकर्षादिघटिता प्रत्यक्षसामग्री परामर्शादिघटिता अनुमितिसामग्री चास्ति तत्र प्रत्यक्षानुपहितसामग्रीरूपप्रतिबन्ध-काभावात् अनुमित्यापत्तिवारणाय पक्षताशरीरे सिद्ध्युपहितार्थकसाधकमानपदस्य प्रवेशः। तथा च साधकमानपदस्य सार्थक्यात् तद्वैयर्थ्यं दुर्घटमिति भावः। **तादृशसाधकमानस्यैवेति।** प्रत्यक्षाद्युपहितार्थकसाधकमानपदस्यैवेत्यर्थः। **उचितत्वा-दिति।** तत्र गुरुतरसामग्र्यभावस्य पृथक्कारणत्वानौचित्यमिति भावः। पुनः

गादाधरी

जायतामितीच्छा न त्विरतकारणाभावविशिष्टतादृशचक्षुस्संयोगादिसत्त्वे, तत्र तादृशेच्छाभावस्य प्रत्यक्षोपहितचक्षुस्संयोगादिरूपसाधकमानविशेषणत्वानुपगमात्तादृशविषयविशेषीयपक्षतायामेव तथाविधसाधकमानान्तर्भावस्य सार्थक्यादिति भाव इत्याहुः।

अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वमिति। अन्यथाऽनुमित्साधीनानुमित्युत्पादकाले प्रत्यक्षापत्तेरिति भावः। प्रत्यक्षसामग्र्यभावत्वेन—सिद्धिप्रत्यक्षसामग्र्यन्यतराभावत्वेन। अन्योन्याश्रयादिति। अनुमितिसामग्र्यभावं प्रत्यक्षकारणकालापान्त-

---

भावबोधिनी

शङ्कते—न च तत्रा.ीति। यत्र विषये प्रत्यक्षाद्युपहितसन्निकर्षादिघटितप्रत्यक्षसामग्रीदशायामेव परामर्शादिसमवधानं तत्र प्रत्यक्षरूपायाः सिद्धेः सत्त्वात् सिद्धेश्चानुमितिप्रतिबन्धकत्वादेवानुतिवारणसंभवात तत्फलकं साधकमानपदं व्यर्थमेवेत्याशयः। समाधत्ते—शाब्दसिद्धिकाले इति। शाब्दसिद्धिकाले अशाब्दं ज्ञानं जायतामितीच्छाबलात् अनुमित्युपपत्तये अशाब्दं ज्ञानं जायतामितीच्छाविरहविशिष्टसिद्धेरेवानुमितिप्रतिबन्धकत्वं वाच्यम्। एवं च यत्र अशाब्दं ज्ञानं जायतामितीच्छा प्रत्यक्षोपहिता प्रत्यक्षसामग्री अनुमितिसामग्री च तत्र प्रत्यक्षमेव जायते नानुमितिः। साधकमानपदानुपादाने तु अशाब्दं ज्ञानं जायतामितीच्छाविरहविशिष्टप्रत्यक्षात्मकसिद्धिरूपप्रतिबन्धकस्याभावात् अनुमित्यापत्तिः। अतस्तत्पदमावश्यकम्। तदुपादाने सिद्ध्युपहितसामग्रीरूपप्रतिबन्धकसत्त्वान्नानुपपत्तिः। अतः साधकमानपदं सार्थकमेवेति भावः।

पुनः शङ्कते—न च सिद्ध्युपहितेति। यत्र विषये प्रत्यक्षविशिष्टचक्षुस्संयोगादिकमस्ति, आलोकसंयोगो नास्ति अथ च अशाब्दं ज्ञानं जायतामितीच्छा

गादाधरी

गंतमज्ञात्वा प्रत्यक्षसामग्र्या अज्ञानात् तदज्ञाने च तदभावघटितानुमितिसामग्र्या अज्ञानेन तदभावाज्ञानादिति भावः। अथ वा कारणसमुदायत्वेन सामग्र्या निवेशे समुदायभेदस्य प्रत्येकं सकलकारणेष्वेव सत्वाद्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताक-भेदानुपगमे सामग्र्यां सामग्रीभिन्नभिन्नत्वं दुर्घटमिति कार्याव्यवहितप्राक्क्षणावच्छिन्नत्वे-नैव सा निवेश्या, अव्याप्यवृत्तिधर्मावच्छिन्नभेदस्याव्याप्यवृत्तितामभ्युपेत्य अन्यदा कार्या-

भावबोधिनी

परामर्शादिरूपानुमितिसामग्री च वर्तते, तत्र प्रत्यक्षसामग्रीवैकल्यात् अनुमितिरेव जायते। साधकमानपदस्य पक्षताकुक्षौ निवेशे च प्रत्यक्षरूपसिद्ध्युपहितस्यैव सत्त्वात् तदभावरूपपक्षताविरहात् अनुमित्यनुपपत्तिः। अतः साधकमानेऽपि अशाब्दं ज्ञानं जायतामितीच्छाविरहवैशिष्ट्यं निवेशनीयम्। इत्थं च यत्र समग्रा प्रत्यक्षोपहितप्रत्यक्षसामग्री परामर्शादिघटिता अनुमितिसामग्री चास्ति अशाब्दं ज्ञानं जायतामितीच्छा चास्ति तत्र तादृशेच्छाविरहविशिष्टस्य साधकमानस्याभावात् अनुमित्यापत्तिः। तथा च साधकमानपदे उपात्तेऽपि अनुमितिवारणरूपप्रयोज-नस्यानिर्वाहात् तद्वैयर्थ्यमेवेत्याशयः। समाधत्ते—**यत्र विषयविशेष इति।** यत्र विकला प्रत्यक्षोपहितप्रत्यक्षसामग्री तत्र पूर्वोक्तरीत्या अनुमितिनिर्वाहाय साधक-मानेऽशाब्दं ज्ञानं जायतामितीच्छाविरहस्य विशेषणत्वेऽपि यत्र समग्रा प्रत्यक्ष-सामग्री अनुमितिसामग्री च तत्र तादृशेच्छाविरहो न विशेषणम्। एवं च साधकमानसत्त्वान्नानुमित्यापत्तिस्तत्रेत्येवं साधकमानपदसार्थक्यसंभवात् अनुमानाति-रिक्तमात्रस्य वैयर्थ्यमिति दीधित्याशय इति केचित्कारमतम्। **अनुपगमादिति।** तदनुपगमेऽपि तत्र तादृशेच्छाबलादनुमित्युत्पत्त्यसत्त्वेन तद्वैयर्थ्यात् इति भावः।

अत्रेदमरुचिबीजम्। इदानीमेव सिद्धावशाब्दं ज्ञानं जायतामितीच्छायाः सामग्र्यामनुमिति-त्वप्रकारकेच्छायाश्चोत्तेजकतालाभात् न चानुमित्साविरहस्येत्या-

दीधितिः

न तृतीयः अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वं अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभावत्वेन चानुमितिकारणत्वमित्यन्योन्याश्रयात्, स्थाणुत्वाभावव्याप्यदर्शनक्षणे च प्रतियोग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात्; पक्षतासत्त्वे स्थाणुत्वारोपक्षणे तदभावानुमित्यापत्तेश्चेत्यपि केचित्। वस्तुतस्तु स्वतन्त्रा-

---

भावबोधिनी

दिना सकृत्तद्विशेषणत्वाशङ्काद्यसंगतिः। तस्य सिद्धिस्वरूपयोग्यसाधकमाननिवेशपक्षपरत्वमिति चेत् अस्तु लिखनसंक्षेपनिर्बन्धेऽपि तथा। परं त्वीदृशायासेन क्वचिदेव साधकमानस्थापनमयुक्तम्। बह्वनुरोधेन तद्वैयर्थ्यस्यैवाभिधातुमुचितत्वात् इति।

अन्योन्याश्रयमुपपादयति–अनुमितीति। यदि चानुमितिसामग्र्यभावादेर्विशिष्य प्रत्यक्षसामग्रीमध्ये न प्रवेश इत्युच्यते तदाप्याह–अथवेति। अयमत्र सारार्थः—सिषाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्यन्यतराभावः किल पक्षता। तत्र प्रत्यक्षसामग्रीपदेन यदि प्रत्यक्षजनकसमुदायत्वेन तत्समुदायो विवक्षितः तदा अन्यतरपदस्य तद्भिन्नभिन्नार्थकतया प्रत्यक्षजनकसमुदायभिन्नभिन्नाभावः पक्षता इति फलति। भिन्नभिन्नश्च प्रत्यक्षजनकसमुदाय एवेत्यत्र न विवादः। प्रत्यक्षजनकसमुदायभिन्नं प्रत्यक्षजनकं तत् तत् कारणं प्रत्येकं भवति तद्भिन्नत्वं समुदाये दुर्घटम्। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिकप्रत्येकवृत्तिधर्मावच्छिन्नप्रतियोगिकभेदानभ्युपगमात्। एकं नोभयमिति प्रतीतिसत्त्वेऽपि उभयं नैकमिति प्रतीतिविरहात्। अतः प्रत्यक्षसामग्र्याः प्रत्यक्षजनकसमुदायत्वेन निवेशोऽशक्यः। अपि तु प्रत्यक्षाव्यवहितप्राक्क्षणावच्छिन्नत्वेनैव निवेशः कार्यः। तदात्वे प्रत्यक्षाव्यवहितप्राक्क्षणावच्छिन्नभिन्नभिन्ना-

## गादाधरी

व्यवहितप्राक्क्षणावच्छिन्नभेदवत्त्वं कार्याव्यवहितप्राक्क्षणे च तादृशभेदावच्छिन्नभेदवत्त्वं फलोपधायकस्योपपादनीयम्, तथा च परामर्शादिसत्त्वे प्रत्यक्षोत्पत्तिकाले अनुमित्यनुत्पादः प्रत्यक्षोत्पादनिर्वाह्यः उक्तानुमितिप्रतिबन्धकस्य प्रत्यक्षोत्पत्तिमन्तरेणानिर्वाहात् प्रत्यक्षोत्पत्तिरप्यनुमित्यनुत्पादमपेक्षते; तदुत्पादे अनुमित्यव्यवहितप्राक्क्षणावच्छिन्नस्य प्रत्यक्षप्रतिबन्धकस्यावश्यं सत्त्वादित्यन्योन्याश्रय इति भावः। अत्रैव कल्पे अन्येषां दूषणमुपन्यस्यति—स्थाणुत्वाभावेति। स्वोक्तदोषस्याप्येतदनुमततया चकारसङ्गतिः। यत्र

---

## भावबोधिनी

भावस्य अनुमितिकारणत्वं फलति। प्रत्यक्षसामग्र्याः प्रत्यक्षाव्यवहितप्राक्क्षणावच्छिन्नत्वमव्याप्यवृत्ति व्यवहितप्राक्क्षणे तत्र तदभावात्। अव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदोऽप्यव्याप्यवृत्तिः। एवं च प्रत्यक्षसामग्र्यां प्रत्यक्षाव्यवहितप्राक्क्षणावच्छेदेन प्रत्यक्षाव्यवहितप्राक्क्षणावच्छिन्नभिन्नत्वम्, प्रत्यक्षाव्यवहितप्राक्क्षणे च प्रत्यक्षाव्यवहितप्राक्क्षणावच्छिन्नभिन्नभिन्नत्वमुपपाद्य तस्याः अनुमितिप्रतिबन्धकत्वं तदभावस्यानुमितिकारणत्व चोपपादनीयम्। तथा च परामर्शादिसत्त्वे प्रत्यक्षसामग्रीसत्त्वे च प्रत्यक्षोत्पत्तिकाले अनुमित्यनुत्पादः प्रत्यक्षोत्पत्तिनिर्वाह्यप्रत्यक्षाव्यवहितप्राक्क्षणावच्छिन्नसामग्रीरूपप्रतिबन्धकनिर्वाह्यः। प्रत्यक्षोत्पत्तिश्चानुमित्यनुत्पादमपेक्षते, अनुमित्युत्पादे अनुमित्यव्यवहितप्राक्क्षणावच्छिन्नस्य प्रत्यक्षप्रतिबन्धकस्य सत्त्वात् प्रत्यक्षोत्पत्त्यसंभवात्। एवं च प्रत्यक्षोत्पत्तिरनुमित्यनुत्पादसापेक्षा। अनुमित्यनुत्पत्तिः प्रत्यक्षोत्पत्तिनिर्वाह्येत्यन्योन्याश्रय इति।

साधकमानं सिद्धिसामग्रीपरमिति तृतीयकल्पेऽन्योन्याश्रयाख्यो दोष एतावता उक्तः। अन्यैः कैश्चित् अत्र कल्पे दूषणान्तरमुक्तं दीधितावनूदितं स्थाणुत्वाभावव्याप्येत्यादिना। यत्रादौ स्थाणुत्वाभावव्याप्यकरादिमानिति विशेषदर्शनं तद-

## गादाधरी

विशेषदर्शनानन्तरक्षणजातप्रतियोग्यारोपात् स्थाणुत्वाद्यभावप्रत्यक्षं तत्रेत्यादिः। तदभावानुमित्यापत्तेः–स्थाणुत्वाद्यभावानुमित्यापत्तेः। तथा चानुमित्यन्यसिद्धिसामग्र्यभावस्य कार्यकालवृत्तितया पृथगेव कारणत्वमावश्यकमिति भावः। प्रतियोग्यारोपकारणतायाः स्वासम्मततया केचिदिति। ननु पक्षताघटकप्रत्यक्षसामग्री नानुमितिसामग्र्यभावघटितकारणसमुदायरूपा; अपि तु तदतिरिक्तप्रत्यक्षासाधारणकारणसमुदायरूपैव वाच्या, अनुमित्साविशिष्टसमानमिषयकानुमितिसामग्रीदशायां सिषाधयिषा-

---

## भावबोधिनी

नन्तरक्षणे स्थाणुत्वरूपप्रतियोग्यारोपः तदनन्तरं स्थाणुत्वाभावप्रत्यक्षं तत्र प्रतियोग्यारोपक्षणे अयं स्थाणुत्वाभाववानित्याकारकानुमित्यापत्तिः। तत्पूर्वक्षणे विशेषदर्शनात्मकस्य परामर्शस्य सत्त्वात् प्रतियोग्यारोपरूपकारणवैकल्येन प्रत्यक्षसामग्रीविरहेण तदभावरूपपक्षताया अक्षतत्वात्। अतः अनुमित्यन्यसिद्धिसामग्र्यभावस्य कार्यकालवृत्तितया पृथगेव कारणत्वं वक्तव्यम्। प्रतियोग्यारोपकाले तद्घटितप्रत्यक्षसामग्रीसत्त्वात् तदभावविरहान्न तत्कालेऽनुमित्यापत्तिरिति भावः। पक्षतायास्तु न कार्यकालवृत्तितया हेतुत्वम्, अपि तु तत्पूर्ववृत्तितयेति पक्षताकुक्षिनिक्षेपेण कारणत्वं न संभवतीति पृथगेव कारणत्वमुक्तमिति ध्येयम्।

वस्तुतस्त्वित्यादिदीधितिग्रन्थमवतारयति–गादाधर्यां ननु पक्षताघटकेत्यादिना। तत्र अनुमानातिरिक्तसाधकमानपदस्य अनुमित्यतिरिक्तसिद्धिसामग्रीत्येवार्थः। तथा हि–सिषाधयिषाविरहविशिष्टसिद्धि–अन्योन्याश्रयद्वयं यदुक्तं तत् न प्रसजति। तथा हि–सिषाधयिषाविरहविशिष्टसिद्धि–अनुमित्यतिरिक्तसिद्धिसामग्री–अन्यतराभावो हि पक्षता। तत्रानुमित्यतिरिक्तसिद्धिसामग्री प्रत्यक्षसामग्री तस्यां अनुमितिसामग्र्यभावातिरिक्तानि यानि प्रत्यक्षकरणानि तेषां समुदाय एव प्रत्यक्षसामग्रीपदविवक्षितः। न च तदनिवेशे अनु-

गादाधरी

रूपोत्तेजकबलादेवानुमित्युपपत्तेः। एवं प्रत्यक्षं प्रत्यनुमितिसामग्रीप्रतिबन्धकतायामपि निरुक्तपक्षता न निवेश्यते; अपि तु लाघवादनुमित्सावैशिष्ट्यमेव, असत्यामनुमित्सायां समानविषयकप्रत्यक्षोत्पत्तेरावश्यकत्वात् तत्सत्त्वे च पक्षताया आवश्यकत्वात्। तथा च न प्रथमोक्तान्योन्याश्रयावकाशः।

एवं सामग्र्याः कार्याव्यवहितप्राक्क्षणावच्छिन्नत्वेन प्रतिबन्धकत्वेऽपि समानविषयकप्रत्यक्षप्रतिबन्धकतायां अनुमित्सावैशिष्ट्यं विवेश्यते, तथा चोक्तस्थले प्रत्यक्षो-

---

भावबोधिनी

मित्सासहितसमानविषयकानुमितिसामग्रीदशायाम् अनुमितिसामग्र्यभावातिरिक्तानां प्रत्यक्षकारणानां सत्त्वात् तदतिरिक्तप्रत्यक्षकारणसमुदायाभावरूपपक्षताविरहादनुमित्यनुपपत्तिरिति वाच्यम्। प्रत्यक्षसामग्र्यां सिषाधयिषाया उत्तेजकत्वात् अनुमित्सासत्त्वे अनुमित्साविरहरूपविशेषणाभावेन अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभावरूपपक्षतासत्त्वेनानुमित्यापत्तेः। एवं प्रत्यक्षं प्रति अनुमितिसामग्र्याः प्रतिबन्धकतायां पक्षतारूपस्यानुमितिकारणस्य न निवेशः। अपि तु अनुमित्साविशिष्टत्वमेव निवेश्यते। एवं चानुमित्साविशिष्टानुमितिकारणसमुदायः प्रत्यक्षप्रतिबन्धकः। असत्यामनुमित्सायां अनुमित्साविशिष्टानुमितिसामग्रीरूपप्रतिबन्धकाभावात् प्रत्यक्षस्यैवोत्पत्तेः। सत्यां चानुमित्सायां तद्विरहविशिष्टप्रत्यक्षसामग्र्यभावरूपपक्षतासत्त्वेनानुमितेरेवोत्पत्तेः। इत्थं च प्रत्यक्षसामग्र्यामनुमितिसामग्र्यभावस्य अनुमितिसामग्र्यां प्रत्यक्षसामग्र्यभावस्य चाप्रवेशात् अनुमितिसामग्र्यभावमज्ञात्वा प्रत्यक्षसामग्र्याः अज्ञानात् तदज्ञाने च तदभावघटितानुमितिसामग्र्या अज्ञानेन तदभावाज्ञानादिति योऽन्योन्याश्रयः प्रथमः तस्य न प्रसक्तिः।

एवं प्रत्यक्षसामग्र्याः कार्याव्यवहितप्राक्क्षणावच्छिन्नत्वेन पक्षताशरीरे निवेश इति पक्षे समानविषयकं प्रत्यक्षं प्रति या अनुमितिसामग्र्याः प्रतिबन्धकता

गादाधरी

त्पत्तिर्नानुमित्यनुत्पादमुपजीवति, अनुमित्युत्पादेऽपि अनुमित्साविरहेण प्रत्यक्षप्रतिबन्धकासत्त्वात्, अपि] त्वनुमित्साविरहमेवेति नापरोऽप्यन्योन्याश्रयः, अन्यथा सामग्र्याः पक्षतायामनन्तर्भावेऽपि पृथक्प्रतिबन्धकताया आवश्यकत्वेनानिस्तारादित्यत आह–वस्तुतस्त्विति । स्वतन्त्रान्वयव्यतिरेकशालित्वं–सिद्धित्वादिरूप-

---

भावबोधिनी

तस्यामनुमित्सावैशिष्ट्यमेव निवेश्यते, न तु प्रत्यक्षाव्यवहितप्राक्क्षणावच्छिन्नरूपप्रत्यक्षसामग्र्यभावः । एवं च प्रत्यक्षोत्पत्तिः अनुमित्साविरहमेवोपजीवति नानुमित्यनुत्पादमिति न द्वितीयोऽप्यन्योन्याश्रय इत्याशयेन वस्तुतस्त्वित्यादिना दूषणान्तराभिधानमिति भावः । **तदतिरिक्तेति ।** अनुमितिसामग्र्यभावघटितेत्यर्थः । साधारणकारणानां निवेशे प्रयोजनाभावात् **असाधारणेति ।** नन्वनुमितिसामग्र्यामनुमित्सायां च सत्यां, सत्यामपि प्रत्यक्षसामग्र्यां समानविषयकं प्रत्यक्षं न जायते किं त्वनुमितिरित्यनुभवानुरोधेन प्रत्यक्षसामग्रीसत्त्वेन पक्षताभङ्गवारणाय पक्षताघटकप्रत्यक्षसामग्र्यामनुमितिसामग्र्यभावप्रवेश आवश्यकः । तथा सति अनुमितिसामग्रीसद्भावेन तदभावघटितप्रत्यक्षसामग्र्याः असत्त्वेन पक्षतासत्त्वात् प्रत्यक्षानुत्पादानुमित्युत्पादयोर्निर्वाहादित्यत आह–**अनुमित्सेति ।** पक्षताघटकप्रत्यक्षसामग्र्यामनुमित्साविरह एव प्रवेश्यः न त्वनुमितिसामग्र्यभावः प्रयोजनाभावात् । तत्प्रवेशेऽप्यनुमित्साविरहस्यावश्यप्रवेश्यत्वात् । अन्यथा अनुमित्सासत्त्वेऽप्यनुमितिसामग्र्यभावघटितप्रत्यक्षसामग्रीसत्त्वापत्तेरित्यर्थः । **अनुमित्युत्पत्तेरिति ।** प्रत्यक्षानुत्पादोपलक्षणम् । **लाघवादिति ।** अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यां सत्यां सत्यामप्यनुमितिसामग्र्यां समानविषयकप्रत्यक्षमेव जायते नानुमितिः अनुमितिसामग्र्यभावसत्त्वात् । अनुमितिसामग्र्यभावश्च अनुमित्साया असत्त्वेनानुमित्साविरहविशिष्टप्रत्यक्षसामग्रीरूपपक्षताविरहसत्त्वात् वाच्यः । तदपेक्षया च पक्षता-

गादाधरी

प्रत्येकवृत्तिधर्मावच्छेदेन कार्यानुत्पादं प्रत्यन्वयव्यतिरेकानुविधायित्वम् । नन्वन्यतरत्वेन प्रतिबन्धकत्वेऽपि तन्नियतसिद्धित्वाद्यवच्छिन्नस्य कार्यानुत्पादान्वयनियतत्वं तदवच्छिन्नव्यतिरेकस्य च कारणान्तरपरामर्शादिसहितस्य कार्योत्पादनियतत्वं सम्भवतीति

भावबोधिनी

मप्रवेश्य लाघवादनुमित्सावैशिष्ट्यमेवानुमितिसामग्र्यां देयमित्यर्थः ।

**न प्रथमोक्तेति ।** यद्यप्यत्र प्रथमतोऽनुमितिसामग्र्यभावमज्ञात्वैव प्रत्यक्षसामग्रीज्ञानसंभवात् तदभावघटितानुमितिसामग्रीज्ञानम् । ततश्च प्रत्यक्षकारणीभूतानुमितिसामग्र्यभावज्ञानं संभवति । तावता प्रथमोक्तान्योन्याश्रयनिरसात् एवमित्यादिना अनुमितिसामग्रीप्रतिबन्धकतायां पक्षताप्रतिक्षेपो व्यर्थः । तथापि प्रत्यक्षसामग्र्याः पक्षतान्तर्भावमतेऽनुमित्सादशायामनुमितिरेव जायते न प्रत्यक्षमिति नियमनिर्वाहाय पक्षताघटितानुमितिसामग्र्याः प्रत्यक्षं प्रति प्रतिबन्धकत्वं वाच्यम् । तत्र च प्रथमोक्त एवान्योन्याश्रयः । न च घटकीभूतपक्षताशरीरे प्रत्यक्षसामग्र्याः अनुमितिसामग्र्यभावघटितायाः प्रवेशान्नायमप्यन्योन्याश्रय इति वाच्यम् । पक्षताशरीरे अन्योन्याश्रयस्यागत्या अनुमितिसामग्र्यभावघटितप्रत्यक्षसामग्रीं प्रवेश्य वारणेऽपि प्रत्यक्षकारणशरीरे लाघवात् पक्षतामप्रवेश्यैव तद्वारणौचित्यमित्येवमित्यभिधानसंगतिः ।

**अनिस्तारादिति ।** अनुमित्साविरहविशिष्टप्रत्यक्षसामग्रीत्वेनानुमितिम् अनुमित्साविशिष्टानुमितिसामग्रीत्वेन प्रत्यक्षं प्रति च प्रतिबन्धकतया तत्र प्रत्यक्षसामग्र्या अनुमितिसामग्र्यभावघटिततया अनुमितिसामग्र्याश्च प्रत्यक्षसामग्र्यभावघटिततया प्रत्यक्षकारणकलापान्तर्गतमनुमितिसामग्र्यभावमज्ञात्वा प्रत्यक्षसामग्र्या अज्ञानात् तदज्ञाने च तदभावघटितानुमितिसामग्र्या अज्ञानेन तदभावाज्ञानात् तत्र अनु-

**गादाधरी**

**न तावता सिद्धित्वादिना प्रतिबन्धकतासिद्धिरित्यतो हेत्वन्तरमाह** – नियमेनेति । प्रथमोपस्थितत्वात्–**प्रत्येकरूपावच्छिन्नस्य तदवच्छिन्नान्यतरत्वापेक्षया प्रथममुपस्थित-त्वात् । उपस्थितिलाघवमुक्त्वा शरीरलाघवमाह**–लाघवादिति । **उक्तरूपद्वयमप्यपेक्ष्य तदन्यतरत्वस्याधिकभेदादिघटिततया गुरुत्वादिति भावः ।** प्रत्येकम्–**सिद्धित्वादिना ।** तथात्वम्–**प्रतिबन्धकत्वम् ।** अन्यथा–**प्रतिबन्धकतैक्यानुरोधेन नानाधर्मावच्छिन्नानां**

---

**भावबोधिनी**

मित्सातद्विरहयोरनिवेशे प्रत्यक्षाव्यवहितप्राक्कालावच्छिन्नत्वेन प्रवेशेऽनुमित्यनुत्पादस्य प्रत्यक्षोत्पादनिर्वाह्यत्वं, अनुमित्यव्यवहितप्राक्कालावच्छिन्नत्वेन निवेशे प्रत्यक्षोत्पत्ते-रनुमित्यनुत्पादनिर्वाह्यत्वाच्चान्योन्याश्रयद्वयस्य दुर्वारत्वादिति भावः ।

**वस्तुतस्त्वित्यादि** दीधितेरयमर्थः–यथा सिद्धिसत्त्वेऽनुमित्यनुत्पादः, सिद्ध्यसत्त्वेऽनुमित्युत्पाद इत्यन्वयव्यतिरेकसत्त्वात् सिद्धित्वावच्छिन्नस्य प्रतिबन्धकत्वम्, एवं समानविषयकप्रत्यक्षसामग्रीसत्त्वे अनुमित्यनुत्पादः तदसत्त्वेऽनुमित्युत्पाद इति स्वातन्त्र्येणान्वयव्यतिरेकयोः सद्भावात् प्रत्यक्षसामग्र्यत्वावच्छिन्नस्य पृथगेव प्रतिबन्धकता न तु पक्षताकुक्षिनिक्षेपेण । अपि च सिद्धित्वप्रत्यक्षसामग्रीत्वाभ्यां प्रतिबन्धकत्वापेक्षया सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वेन प्रतिबन्धकत्वे गौरवम्, अन्यतरत्वस्य तद्भिन्नभिन्नत्व-रूपत्वात् सिद्धिभिन्नभिन्नत्वप्रत्यक्षसामग्रीभिन्नभिन्नत्वाभ्यां प्रतिबन्धकत्वे पर्यवसानात् प्रतिबन्धकतावच्छेदकधर्मयोः गुरुशरीरत्वात् । सिद्धित्वप्रत्यक्षत्वयोः तदवच्छिन्नभिन्न-भिन्नत्वापेक्षया प्रथमोपस्थितत्वात् उपस्थितिकृतं लाघवं च सिद्धित्वप्रत्यक्षसामग्रीत्वाभ्यां प्रतिबन्धकत्वे । अपि च अन्यतरत्वेन प्रतिबन्धकत्वे सिद्धिभेदप्रत्यक्षसामग्रीभेदो-भयावच्छिन्नप्रतियोगिताकभेदवत्त्वेन एकैव प्रतिबन्धकता प्रतिबन्धकतावच्छेदकैक्यात्, सिद्धित्वप्रत्यक्षसामग्रीत्वाभ्यां प्रतिबन्धकत्वे अवच्छेदकभेदात् प्रतिबन्धकताद्वयं

दीधितिः

न्वयव्यतिरेकशालित्वात् नियमेन प्रथमोपस्थितत्वाल्लाघवाच्च प्रत्येकमेव तथात्वमन्यथा बाधादेरप्यत्रैवान्तर्भावप्रसंगात्। न

गादाधरी

तत्तदवच्छिन्नभिन्नभिन्नत्वेन प्रतिबन्धकत्वे। बाधादेरित्यादिना सत्प्रतिपक्षादिपरिग्रहः। अत्रैव—पक्षतायामेव। अन्तर्भावप्रसङ्गात्। घटकताप्रसङ्गात्। सिद्धिबाधसामग्रीविशेषाद्यन्यतमत्वावच्छिन्नाभावस्य पक्षतात्वप्रसङ्गादिति समुदायार्थः। अन्यथा बाधबुद्ध्याद्यभावस्य कारणत्वान्तरकल्पनापत्तेरिति भावः। न च वह्न्यादिनिश्चयप्रतिबध्यायामपि वह्निमान्पर्वतो घटवानित्याद्यनुमितौ वह्न्यभावादिनिश्चयस्य प्रतिबन्ध-

भावबोधिनी

कल्पनीयम्। अतः अन्यतरत्वेन प्रतिबन्धकत्वमेव युक्तमिति यद्यालोच्यते, तर्हि बाधसत्प्रतिपक्षयोरपि पृथक्प्रतिबन्धकता भज्येत, पक्षतान्तर्भावेण सिद्धिप्रत्यक्षसामग्रीबाधाद्यन्यतमत्वेन एकां प्रतिबन्धकतां प्रकल्प्य तदन्यतमत्वावच्छिन्नाभावः पक्षतेति वक्तुं शक्यत्वादिति भावः।

गादाधर्यां-तन्नियतसिद्धित्वाद्यवच्छिन्नस्येति। अन्यतरत्वव्याप्यसिद्धित्वाद्यवच्छिन्नस्येत्यर्थः। व्यापकधर्मावच्छिन्नस्य कार्यानुत्पादनियतत्वे व्याप्यधर्मावच्छिन्नस्यापि तत्, व्यापकधर्मावच्छिन्नस्य कार्योत्पादनियतत्वे व्याप्यधर्मावच्छिन्नस्यापि तत् संभवतीति तावता पृथक्प्रतिबन्धकता न सिध्यतीति भावः। प्रथममुपस्थितत्वात् इति। सिद्धिरूपविशेषणज्ञानं विना तद्भेदघटितान्यतरत्वरूपविशिष्टज्ञानासंभवात् उपस्थित्यन्तराकल्पनलाघवानुरोधेन सिद्धित्वाद्यवच्छिन्न एव प्रतिबन्धकताकल्पनादित्यर्थः। उक्तरूपद्वयमिति। सिद्धित्वप्रत्यक्षसामग्रीत्वात्मकधर्मद्वयमपेक्ष्येत्यर्थः।

गादाधरी

कत्वान्तरमावश्यकमिति कथं साध्यतदभावादिनिश्चयानामेकरूपेण प्रतिबन्धकत्वप्रसक्तिरिति वाच्यम्; वह्न्यादिप्रकारकानुमितौ वह्न्यभावादिनिश्चयस्य पृथक्प्रतिबन्धकत्वविरहेऽपि वह्निमान्पर्वतो घटवानित्याद्यनुमितिहेतुपक्षतायां आश्रयासिद्धत्वादिनिश्चतयान्तर्भाविणैव तादृशनिश्चयदशायां तथाविधानुमितिवारणसम्भवात्, अवच्छेदकगौरवस्य भवतैवाप्रयोजकीकृतत्वात्। न च तथापि बाधकाले प्रत्यक्षादेरप्यनुत्पत्त्या

---

भावबोधिनी

सिद्धिबाधसामग्रीविशेषेति। सिद्धिः बाधः प्रत्यक्षसामग्री शाब्दसामग्री एतदन्यतमत्वावच्छिन्नाभावस्येत्यर्थः।

न च वह्न्यादाविति। सिद्धिर्नाम साध्यनिश्चयः पर्वतो वह्निमानित्याकारकः। बाधो नाम साध्याभावनिश्चयः पर्वतो वह्न्यभाववानित्याकारकः। तत्र सिद्धिः वह्निविधेयकपर्वतोवह्निमानित्यनुमितावेव प्रतिबन्धिका। बाधः वह्निविधेयकपर्वतो वह्निमानित्यनुमितौ वह्निप्रकारकघटविधेयकानुमितौ च वह्निमान् पर्वतो घटवानित्याकारायां प्रतिबन्धिका। अतः पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नं प्रति सिद्धिबाधान्यतरत्वेनैकप्रतिबन्धकतायाः संभवेऽपि सिद्धिप्रतिबध्यतानवच्छेदकं यत् वह्निप्रकारकानुमितित्वं तदवच्छिन्नं प्रति बाधस्य पृथक् प्रतिबन्धकत्वमावश्यकमिति कथमेकरूपेण प्रतिबन्धकत्वापादनं दीधितिकृतां संगच्छत इति प्रश्नाशयः।

वह्न्यादिप्रकारकानुमिताविति। वह्न्यादिप्रकारताघटितरूपावच्छिन्नं प्रति वह्न्यभावनिश्चयत्वेन पृथक् प्रतिबन्धकता न कल्प्यते। किं तु सिद्ध्यादिप्रतिबध्यतावच्छेदकीभूतवह्न्यादिविधेयताघटितरूपावच्छिन्नं प्रत्येव सिद्धिबाधप्रत्यक्षसामग्र्यन्यतमत्वेन प्रतिबन्धकता कल्प्यते, प्रतिबन्धकतावच्छेदकरूपान्तराकल्पनलाघ-

## गादाधरी

विशिष्टबुद्धिसामान्यं प्रति बाधबुद्धेः प्रतिबन्धकत्वान्तरकल्पनमावश्यकमिति पक्षतायां तदन्तर्भावो निरर्थक इति वाच्यम्; तत्रापि भिन्नविषयकानुमितिसामग्र्यादीनां अवश्यकल्पनोयप्रतिबन्धकतायां बाधसाधारणान्यतरत्वादेरवच्छेदकतयैवोपपत्तेः। बाधबुद्धेस्सामान्यप्रतिबन्धकत्वासिद्धेः। प्रत्यक्षस्थले इच्छानामुत्तेजकतयापि तदसिद्धेः। केचित्तु—अत्रैव—ईदृशप्रतिबन्धकतायामेव; प्रतिबन्धकान्तरसाधारणान्यतरत्वाद्यवच्छिन्न-

---

## भावबोधिनी

वात्। वह्निविशिष्टपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितघटत्वावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नं प्रति तु विशिष्टपर्वते घटाभाववत्तानिश्चयरूपबाध—शुद्धपर्वते वह्न्यभाववत्तानिश्चयरूपाश्रयसिद्धिनिश्चय—विशिष्टपर्वते घटनिश्चयरूपसिद्धि—प्रत्यक्षसामग्री—एतच्चतुष्टयान्यतमत्वेन प्रतिबन्धकत्वस्वीकारेणादोषादिति समाधानग्रन्थाशयः।

ननु एतादृशचतुष्टयान्यतमत्वावच्छिन्नस्य प्रतिबन्धकत्वे प्रतिबन्धकतावच्छेदकगौरवम्, वह्न्यभावनिश्चयस्य वह्निप्रकारकबुद्धौ पृथक्प्रतिबन्धकत्वे अन्यतमशरीरे तदप्रवेशाल्लाघवमित्यत आह—प्रतिबन्धकतावच्छेदकगौरवस्येति। प्रतिबन्धकतैक्यानुसारेण तदवच्छेदकगौरवं न दोषायेति भवतैवोक्तत्वादित्यर्थः।

न च तथापीति। बाधनिश्चयकाले यथानुमितिर्न जायते तथा प्रत्यक्षमपि न जायते। अतः तद्विशिष्टबुद्धिसामान्यं प्रति तदभाववत्तानिश्चयरूपबाधस्य पृथक्प्रतिबन्धकत्वमेव युक्तम्, न तु अनुमितिमात्रकारणपक्षताशरीरे प्रतियोगिविधया बाधनिवेशो युक्तः प्रत्युत व्यर्थश्च, सामान्यप्रतिबन्धकतयैव बाधकालेऽनुमितिवारणसंभवादिति भावः।

तत्रापीति। पक्षतान्तर्भावेऽपीत्यर्थः। भिन्नविषयकानुमितिसामग्र्याः प्रत्यक्षादिकं प्रति अवश्यं प्रतिबन्धकत्वं कल्पनीयम्। तत्र भिन्नविषयकानुमितिसामग्री-

## गादाधरी

प्रतिबन्धकतायामेवेति यावत्, अन्तर्भावप्रसङ्गात्—अवच्छेदकघटकताप्रसङ्गात; तदभावव्याप्यवत्तादिज्ञानादिसाधारणान्यतरत्वेनैव बाधादेः प्रतिबन्धकताप्रसङ्गादिति। समुदायार्थः, तथा च पक्षतायां बाधान्तर्भावपरत्वाभावात् नोक्तातिप्रसङ्ग इति व्याचक्षुः। केचित्तु तदभावनिश्चयदशायां यादृशांकुरविशेषधर्मितावच्छेदककान्यानुमितेः कारणान्तरविरहादेव नियमतोऽनुत्पादः; तत्साध्यकस्थलाभिप्रायक एवायं ग्रन्थ इत्याहुः

---

## भावबोधिनी

बाधान्यतरत्वेन प्रत्यक्षादौ प्रतिबन्धकत्वं कल्प्यते। तेनैव बाधकाले प्रत्यक्षवारणसंभवात्। एवं च विशिष्टबुद्धिसामान्ये बाधबुद्धेः प्रतिबन्धकत्वान्तरमनावश्यकमिति भाव.। एवं च पक्षताशरीरे अन्यतमत्वघटकतया बाधस्य प्रवेशात् बाधकालेऽनुमितिप्रतिबन्धः। भिन्नविषयकानुमितिसामग्र्याः प्रत्यक्षादिप्रतिबन्धकतायां बाधस्यापि प्रवेशात् न तत्काले प्रत्यक्षाद्यापत्तिरिति सामान्यप्रतिबन्धकता असिद्धेति तात्पर्यम्। तदसिद्धेरिति। विशिष्टबुद्धिसामान्यं प्रति बाधनिश्चयः प्रतिबन्धक इति सामान्यप्रतिबन्धकताया असिद्धेरित्यर्थः। अयमत्राशयः—आहार्यप्रत्यक्षानुरोधेन इच्छाविरहविशिष्टबाधज्ञानस्यैव प्रतिबन्धकत्वं वाच्यम्। तत्र च प्रत्यक्षत्वमेव प्रतिबध्यतावच्छेदकम्, न विशिष्टबुद्धित्वम। तथा सति बाधकाले इच्छासत्त्वे अनुमित्यापत्तेरिति भावः।

वह्न्यादिप्रकारताघटितरूपावच्छिन्नं प्रत्येव वह्न्यभावादिनिश्चयस्य प्रतिबन्धकता। तच्च रूपं बुद्धित्वघटितम् अनुमितित्वघटितं चेत्यन्यदेतत्। तथा च पक्षताशरीरे बाधादिप्रवेशो न संभवतीत्यालोच्य अत्रैवेति पदं व्याचक्षाणानां जगदीशानां मतमाह—केचित्त्विति। ईदृशप्रतिबन्धकतायामिति। एतत्तुल्यप्रतिबन्धकतायामित्यर्थः। बाधसत्प्रतिपक्षान्यतरत्वेन प्रतिबन्धकतापत्त्या बाधसत्प्रतिपक्षयोः पृथक्प्रतिबन्धकता न

भावबोधिनी

स्यादिति भावः। उक्तरीत्यैवोपपत्तौ अत्रशब्दस्य ईदृशपरतया व्याख्यानमनुचितमित्यस्वरसोऽत्र बोध्यः।

अङ्कुरविशेषेति। द्वित्राणामेव पुरुषाणां कदाचिदेव यादृच्छिकानुमितिसामग्री तत्रानुमितेरित्यर्थः। अङ्कुरविशेषवत्क्षेत्रविशेषादेः पक्षत्वे आश्रयासिद्धिनिश्चयसत्त्वेऽपि तस्य विरोधिता नोपगम्यते, प्रयोजनाभावादिति भाव।

तदङ्कुरविशेषस्य क्षेत्रविशेषे साधने तदङ्कुरविधेयताघटितरूपावच्छिन्नं प्रत्येव बाधसाधारणान्यतमत्वेन सिद्धिप्रतिबन्धकता संभवतीत्यर्थः। ईदृशरीत्या तदङ्कुरप्रकारताघटितरूपस्य प्रतिबध्यतावच्छेदकतानुपयोगप्रदर्शनं व्यर्थम्। सर्वत्रापि साध्यप्रकारताघटितरूपे तन्निराकरणस्य प्रदर्शितत्वात्। भवतामन्यत्र प्रकारताघटितरूपे प्रतिबध्यतावच्छेदकतासंपादकयुक्तेरभावात् स्थलविशेषानुधावनायासोऽपि विफल इत्यस्वरसोऽत्र बोध्यः।

ननु सिद्धिसामग्रीविशेषयोरित्यादि। सिद्धौ बा प्रत्यक्षसामग्र्यां वा प्रतिबन्धिकायां सत्यामपि यद्यनुमितिस्सा स्यात्तदा अनुमितेरेवोत्पत्त्या सिषाधयिषाविरहविशिष्टयोरेव तयोः प्रतिबन्धकत्वमेष्टव्यम्। तयोः पृथक् पृथक् प्रतिबन्धकत्वे सिषाधयिषाविरहरूपविशेषणस्य द्विः निवेशः कार्यः सिषाधयिषाविरहविशिष्टसिद्धिः सिषाधयिषाविरहविशिष्टा प्रत्यक्षसामग्री च प्रतिबन्धिकेत्येवम्। यदा तु तयोरन्यतरत्वेन प्रतिबन्धकत्वं तदा अन्यतरत्वावच्छिन्ने सकृदेव सिषाधयिषाविरहस्य विशेषणता सिषाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्यन्यतरत्वावच्छिन्नं प्रतिबन्धकमित्येवम्। तया च लाघवमस्ति। यद्यप्यन्यतरत्वं तद्भिन्नभिन्नत्वं, तथापि अनुमितित्वप्रकारकेच्छाविरहापेक्षया तल्लघु। एवं बाधादीनामपि पक्षतायां घटकतया अन्यतमत्वेन प्रतिबन्धकत्वापादनमपि न युज्यते। अन्यतमत्वावच्छिन्ने

गादाधरी

ननु सिद्धिसामग्रीविशेषयोरुभयोरेवानुमित्सायाः उत्तेजकतया तयोरनुगतरूपेण प्रतिबन्धकत्वे अनुमित्साविरहस्यान्यतरत्वावच्छिन्ने सकृद्विशेषणतया लाघवम्; अनुमित्साविरहविशिष्टसिद्धिसामग्र्यन्यतरत्वापेक्षया तद्विशिष्टसिद्धित्वतद्विशिष्टसिद्धिविशेषसामग्रीत्वयोर्द्वयोरेकस्यापि विशेषणस्य द्विधा निवेशेन गौरवात्। अन्यतरत्वघटकाधिकांशापेक्षया सिषाधयिषाविरहांशस्य गुरुतायाः स्फुटत्वात्। अत एव बाधाद्यन्तर्भावेण प्रतिबन्धकत्वापत्तिरूपप्रतिबन्देरपि नावसरः बाधसिद्धितद्विशेषसामग्र्यन्य-

---

भावबोधिनी

सिषाधयिषाविरहस्य विशेषणत्वे बाधनिश्चयकाले सिषाधयिषाबलात् सिद्ध्यादिकाल इवानुमित्यापत्तेः। तद्भयात् तस्याविशेषणत्वे सिद्ध्यादिकालेऽपि बाधकाल इव सिषाधयिषाबलादनुमितेरनुपपत्ते। अतो बाधस्य पृथगेव प्रतिबन्धकता वाच्या। न च तुल्यरीत्या केचित्तुकारमतेन बाधसत्प्रतिपक्षान्यतरत्वेन प्रतिबन्धकत्वमापादयितुं शक्यम्। सिषाधयिषाविरहस्य सकृद्विशेषणत्वमिति रीत्या लाघवानवकाशेन बाधत्वतदभावव्याप्यवत्त्वज्ञानत्वापेक्षया तदन्यतरत्वस्य गुरुतया प्रतिबन्धकतावच्छेदकत्वासंभवात् पृथगेव प्रतिबन्धकताया आवश्यकत्वात्। न च प्रत्यक्षात्मकतद्वत्ताबुद्धौ बाधज्ञानस्य तदभावव्याप्यवत्ताज्ञानस्य च प्रतिबन्धकतायां प्रत्यक्षेच्छाया उत्तेजकतया प्रत्यक्षेच्छाविरहविशिष्टबाधतदभावव्याप्यवत्ताज्ञानान्यतरत्वेन प्रतिबन्धकतायां प्रत्यक्षेच्छाविरहस्य सकृद्विशेषणता, पृथक्प्रतिबन्धकत्वे तु तस्य द्विः विशेषणतेति गौरवम्, अतः अन्यतरत्वेन प्रतिबन्धकत्वापादनं संभवतीति वाच्यम्। अनुमित्याद्यात्मकतद्वत्ताबुद्धौ अनुमित्साया अनुत्तेजकतया प्रत्यक्षं प्रति इच्छाविरहविशेषितयोः बाधतद्व्याप्यवत्ताज्ञानयोः अन्यतरत्वेन प्रतिबन्धकता, अनुमितौ इच्छाविरहविशेषितयोस्तयोः प्रतिबन्धकता इति नानाप्रतिबन्धकताप्रसङ्गात् विशिष्टबुद्धिसामान्ये बाधतद्व्याप्यवत्ताज्ञानत्वाभ्यां प्रतिबन्धकताकल्पन एव लाघ-

गादाधरी

तमत्वेन प्रतिबन्धकत्वे अनुगतरूपावच्छिन्नांशे सिषाधयिषाविरहविशेषणतायां सिद्ध्यादिकाले इव बाधकालेऽप्यनुमित्सावलादनुमित्यापत्तेः। सिद्धित्वाद्यवच्छिन्न एव पृथक्तद्विशेषणतया उक्तलाघवानवकाशात्। विशिष्टबुद्धिसामान्ये बाधतदभावव्याप्यवत्ताज्ञानादीनामेकरूपेण प्रतिबन्धकत्वे उक्तदिशा लाघवासम्भवेनावच्छेदकगौरवस्य दुष्परिहरत्वात्। न च प्रत्यक्षस्थले बाधबुद्धौ तदभावव्याप्यवत्तादिबुद्धौ चेच्छाया उत्तेजकतया तत्रानुगतरूपेण तयोः प्रतिबन्धकत्वे इच्छाविरहस्य सकृद्विशेषणतया लाघव-

---

भावबोधिनी

वात। तर्हि बाधतद्व्याप्यवत्ताज्ञानकाले प्रत्यक्षेच्छाबलात् प्रत्यक्षात्मकतद्वत्ताज्ञानं कथमिति चेत्–प्रतिबध्यतावच्छेदकेऽनाहार्यत्वं निवेश्य अनाहार्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति बाधतद्व्याप्यवत्ताज्ञानयोः प्रतिबन्धकतास्वीकारात् इच्छाकालीनप्रत्यक्षस्याहार्यतया अनाहार्यत्वरूपप्रतिबध्यतावच्छेदकानाक्रान्ततया दोषाभावात् इत्याशयेन दीधितौ शङ्काग्रन्थः प्रवृत्त इति भावः।

सिद्धान्तकल्पामपि निराकरोति-अनुमित्साविरहविशिष्टसिद्धिसामग्र्यन्यतरत्वेति। केचित्तुकारोक्तप्रतिबन्दीमपि निराकरोति- विशिष्टबुद्धिसामान्य इति। नानाप्रतिबन्धकताप्रसङ्गादिति। चाक्षुषत्वस्पार्शनत्वप्रकारकेच्छात्वादिना चाक्षुषत्वस्पार्शनत्वादिघटितधर्मं प्रतिबध्यतावच्छेदकीकृत्येति शेष इत्याहुः। पूर्वमस्मदुक्तमपि ग्राह्यम्।

दीधितौ न चेत्यस्य गौरवमित्यत्रान्वयः। समाधत्ते—शाब्दसिद्धौ सत्यामिति। समाने विषये शाब्दबोधात्मकसिद्धौ सत्यां अशाब्दं ज्ञानं जायतामितीच्छायां च सत्यां अनुमितिर्जायते। अतोऽनुमितिविषयकेच्छाविरह एव सिद्धौ विशेषणम्, न त्वनुमितित्वप्रकारकेच्छाविरहः। उक्तेच्छायाः अशाब्दज्ञानत्वप्रकारकत्वेनानुमितित्वप्रकारकत्वाभावात् उत्तेजकत्वानुपपत्तेः। यत्र समाने विषये प्रत्यक्षसामग्री

## गाधाधरी

मक्षुण्णमेवेति वाच्यम्; बाधादौ प्रत्यक्षेच्छाया उत्तेजकत्वे नानाप्रतिबन्धकताप्रसङ्गेन तदनभ्युपगमात्। अनाहार्यत्वस्य प्रतिबध्यतावच्छेदकत्वमङ्गीकृत्यैव बाधादिसमये आहार्यप्रत्यक्षस्योपपादनीयत्वादित्याशङ्कां निरस्यति– न चेत्यादिना। गौरवमित्यन्तमाशङ्का। अनुमितेरुत्पादादिति। प्रत्यक्षादिसामग्र्यसत्त्वे अनुमित्युत्पत्त्यैव तादृशेच्छाविषयसिद्धेरिति भावः। अनुमितिविषयकेच्छाविरहस्य– अनुमितित्वाप्रकारकतादृशेच्छासाधारणानुगतरूपावच्छिन्नविरहस्य। तादृशं च रूपं प्रागेवावेदितम्।

---

## भावबोधिनी

अनुमितिसामग्री चास्ति, शाब्दसिद्धिरस्ति, अशाब्दं ज्ञानं जायतामितीच्छा चास्ति तदा प्रत्यक्षमेव जायते नानुमितिः। अतः प्रत्यक्षसामग्रीनिष्ठप्रतिबन्धकतायाम् अनुमितित्वप्रकारकेच्छाया एवोत्तेजकतया तद्विरह एव प्रत्यक्षसामग्र्यां विशेषणम्, न तु अनुमितिविषयकेच्छाविरहः। अशाब्दं ज्ञानं जायतामितीच्छाया अपि अशाब्दत्वेनानुमितिविषयकतया उत्तेजकत्वापत्तौ अनुमित्यापत्तेः। अतो विशेषणभेदेन सिद्धिप्रत्यक्षसामग्र्योः पृथगेव प्रतिबन्धकता युक्ता न त्वन्यतरत्वेनेति भावः।

गादाधर्याम्–तादृशं च रूपं प्रागेवावेदितमिति। तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वादिप्रकारतान्यप्रकारत्वानिरूपकविषयताकेच्छात्वम्। तादृशेच्छाविषयसिद्धेरिति। अशाब्दं ज्ञानं जायतामितीच्छाविषयस्य निष्पत्तेरित्यर्थः।

सिद्धौ अनुमितिविषयत्वनिवर्तकेति दीधितिमवतारयति–नन्वनुमितित्वेति। सिद्धौ अनुमितिविषयकेच्छाविरहः प्रत्यक्षसामग्र्यामनुमितित्वप्रकारकेच्छाविरह इति द्वेधा न विशेषणं दीयते। अपि तु सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वावच्छिन्ने अनुमितिविषयकेच्छाविरहस्य सकृद्विशेषणता। न च प्रत्यक्षसामग्रीदशायाम् अशाब्दं ज्ञानं जायता-

दीधितिः

चानुमित्साविरहस्य प्रत्येकविशेषणत्वे गौरवम्; शाब्दसिद्धौ सत्यामशाब्दज्ञानं जायतामितीच्छायानुमितेरुत्पादात् सिद्धावनुमितिविषयकेच्छाविरहस्य प्रत्यक्षसामग्रीसत्त्वे च तादृशेच्छायामनुमित्यनुत्पादात् साधकमाने अनुमितित्वादिप्रकारकेच्छाविरहस्य

---

गाधादरी

अनुमित्यनुत्पादादिति। प्रत्यक्षोत्पत्त्यापि तादृशेच्छाविषयसिद्धेरिति भावः। अनुमितित्वादिप्रकारकेच्छाविरहस्य–अनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छात्वावच्छिन्नाभावस्य। पृथगेव–यथायोगं सिद्धित्वप्रत्यक्षसामग्रीत्वाद्यवच्छिन्न एव। नन्वनुमितित्वादिप्रकारकतदप्रकारकेच्छानामनुगतरूपावच्छिन्नाभाव एवान्यतरत्वावच्छिन्ने विशेषणं वाच्यम्, ! यक्षसामग्रीदशायामुक्तेच्छावलादनुमितेर्वारणाय चानुमितिभिन्नालौकिकप्रत्यक्षान्यस्वविषयतावच्छेदकावच्छिन्नसामग्रीसमवहितान्यत्वेनेच्छा विशेषणीया, अनुमिति-

---

भाववोधिनी

मितीच्छाबलात् अनुमित्यापत्तिः। तस्या इच्छाया अपि अशाब्दज्ञानत्वेनानुमितिविषयकत्वात् अनुमितिविषयकेच्छाविरहरूपविशेषणाभावप्रयुक्तायाः विशिष्टाभावरूपपक्षताया अक्षतत्वादिति वाच्यम्। उत्तेजकीभूतायामनुमितिविषयकेच्छायाम् अनुमितिभिन्नालौकिकप्रत्यक्षान्यस्वविषयतावच्छेदकावच्छिन्नसामग्रीसमवहितान्यत्वं विशेषणं दीयते। अनुमितिभिन्नम् अलौकिकप्रत्यक्षभिन्नं च यत् स्वविषयतावच्छेदकावच्छिन्नं तत्सामग्र्या समवहिता या इच्छा तदन्यत्वमिति तदर्थः। यत्र प्रत्यक्षसामग्री अशाब्दं ज्ञानं जायतामितीच्छा च तत्र इच्छायाः अनुमितिविषयकत्वे पि अलौकिकप्रत्यक्षभिन्नमनुमितिभिन्नं च यत् स्वविषयतावच्छेदकेन

## गादाधरी

सामग्र्या उपनीतभानसामग्र्या च समवहिताया इच्छायाः संग्रहाय भेदद्वयमवच्छिन्नान्तविषेषणम्, अनुमितित्वादिप्रकारिकायाः प्रत्यक्षादिसामग्रीसमवहितेच्छायाः संग्रहायावच्छिन्नान्तम्, एवं चोक्तलाघवमक्षुण्णमेवेत्यत आह—स्वनिवर्तकेति। निवर्तकत्वं विषयतया बोध्यम्। अतीव गौरवमिति। अतिगुरुशरीरतादृशेच्छाविशेषणस्याधिकस्य निवेशादिति भावः। नन्वेवमपि प्रतिबन्धकतैक्यनिबन्धनलाघवं दुर्वारमेव, प्रतिबन्धकत्वान्तराकल्पने एकत्रावच्छेदकगौरवस्याकिंचित्करत्वात् अनेकत्र पक्षताहेतुताया-

........................................................................................................

## भावबोधिनी

अशाब्दज्ञानत्वेनावच्छिन्नं लौकिकप्रत्यक्षं तत्सामग्रीसमवहिततया तदन्यत्वाभावात् तदन्येच्छाविरहरूपविशेषणसद्भावात् तद्विशिष्टप्रत्यक्षसामग्रीसद्भावात तदभावरूपपक्षताविरहान्नानुमित्यापत्तिरिति। अनुमितिसामग्र्या अलौकिकप्रत्यक्षसामग्र्या च समवहितायाः इच्छाया उत्तेजकत्वसिद्धये स्वविषयतावच्छेदकावच्छिन्ने अनुमितिभिन्नत्वं अलौकिकप्रत्यक्षभिन्नत्वं च विशेषणम्। प्रत्यक्षसामग्रीसमवहितायाः अनुमितित्वप्रकारिकाया अनुमितिर्जायतामितीच्छायाः संग्रहाय स्वविषयतावच्छेदकावच्छिन्नेति। तथा सति प्रत्यक्षस्य तु इच्छाविषयतावच्छेदकानुमितित्वावच्छिन्नत्वं नास्तीति तत्सामग्र्या उपादानासंभवात् तादृशसामग्री अन्यैव तत्समवहितान्यत्वमुक्तेच्छायामस्तीति उत्तेजकत्वनिर्वाहः। अलौकिकप्रत्यक्षसामग्र्याः सर्वापेक्षया दुर्बलत्वात् दीधितस्थप्रत्यक्षपदं लौकिकप्रत्यक्षपरम्। आदिना शाब्दबोधपरिग्रहः। अनुमितित्वादिना तयोश्चानुमितिभिन्नालौकिकप्रत्यक्षान्यत्वेनानुगमः प्रदर्शितः। स्वविषयतावच्छेदकावच्छिन्नप्रत्यक्षविषयकेच्छायाः संग्रहाय स्वविषयत्वं त्यक्त्वा स्वविषयतावच्छेदकावच्छिन्नत्वनिवेशः। एवं च अनुमितिभिन्नालौकिकप्रत्यक्षभिन्नस्वविषयतावच्छेदकावच्छिन्नसामग्रीसमवहितान्यानुमितिविषयकेच्छाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्यन्यतराभावः पक्षतेति सिद्धम्। अतः सकृदेव निवेशाल्लाघवमिति भावः।

## गादाधरी

मेकैकविधवह्न्यभावादिनिश्चयानां अन्तर्भावे अनन्तस्थलेऽवच्छेदकगौरवात्, स्वातन्त्र्येणैव तत्प्रतिबन्धकताकल्पनस्योचिततया बाधादेः पक्षतान्तर्भावप्रतिबन्देरनवकाशात्, प्रतिबन्देरनुत्तरत्वाच्च, इत्याशयेन अन्यतरत्वेन प्रतिबन्धकतामतेऽपि विनिगमनाविरहेण प्रतिबन्धकताद्वयमापादयति—अन्यतरत्वेति। अन्योन्याभावयोः सिद्धिभेदसामग्रीभेदयोः। तथा च सिद्धिभेदविशिष्टसामग्रीभेदावच्छिन्नभेदः सामग्रीभेदविशिष्टसिद्धिभेदावच्छिन्नभेदश्च विनिगमनाविरहात् प्रतिबन्धकतावच्छेदक इत्यवच्छेदकभेदात्प्रति-

---

## भावबोधिनी

दीधितौ स्वनिवर्तकप्रत्यक्षादीति। स्वनिवर्तकं स्वविषयभूतं यत् प्रत्यक्षादि तत्सामग्रीसमवहिता या इच्छा तदन्यत्वेनेत्यर्थः। इच्छाया विषयसिद्धौ सत्यां निवृत्तेः इच्छाविषयस्य इच्छानिवर्तकत्वम्। तथा च प्रत्यक्षसामग्रीकालीनायाः अशाब्दं ज्ञानं जायतामितीच्छायाः स्वनिवर्तकप्रत्यक्षसामग्रीसमवहितत्वान्नोत्तेजकत्वमिति भावः। स्वनिवर्तकानुमितिसामग्रीसमवहिताया अनुमित्साया उत्तेजकत्वरक्षार्थं प्रत्यक्षादीत्युक्तम्। आदिना शाब्दोपमित्योः संग्रहः।

गादाधर्याम्—अतिगुरुशरीरेति। अतिगुरुशरीरस्य उत्तेजकेच्छायां विशेषणस्य स्वनिवर्तकप्रत्यक्षादिसामग्रीसमवहितान्यत्वरूपस्येत्यर्थः। अन्यतरत्वघटकयोरिति दीधितिमवतारयति—नन्वेवमिति। प्रतिबन्धकतावच्छेदकस्य गुरुशरीरत्वेऽपि तदवच्छिन्नायाः प्रतिबन्धकताया ऐक्यप्रयुक्तं लाघवमस्त्येव। सिद्धिप्रत्यक्षसामग्र्यादीनां पृथक्पृथग्रूपेण प्रतिबन्धकत्वे प्रतिबन्धकतावच्छेदकभेदात् प्रतिबन्धकताभेदः इति गौरवमित्याशङ्क्य अन्यतरत्वेन प्रतिबन्धकतामतेऽपि प्रतिबन्धकताद्वयमापादयति दीधितिकारः। सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वं हि सिद्धिप्रत्यक्षसामग्रीभिन्नभिन्नत्वम्। तच्च सिद्धिभेदविशिष्टप्रत्यक्षसामग्रीभेदवद्भिन्नत्वं प्रत्यक्षसामग्रीभेदविशिष्टसिद्धिभेदवद्भिन्नत्वं वा इत्यत्र विनिगमनाविरहेण उभयरूपत्वाङ्गीकारे तादृश-

## गादाधरी

न्धकताभेद आवश्यकः। न च तादृशभेदयोः समनियततया अभेदान्नावच्छेदकभेद इति वाच्यम्; तादृशभेदाभेदेऽपि तस्य सिद्धिभेदविशिष्टसामग्रीभेदावच्छिन्नभेदत्वेन सामग्रीभेदविशिष्टसिद्धिभेदावच्छिन्नभेदत्वेन च विनिगमनाविरहेण अवच्छेदकतायाः स्वीकरणीयतया विशिष्टस्यावच्छेदकत्वस्य अवश्यं भेदात्। न चाखण्डस्य तस्य स्वरूपत एवावच्छेदकतासम्भवादुक्तविशेषपुरणस्कारेण नावच्छेदकत्वमिति कथं विनिगमनाविरह इति वाच्यम्, अभावस्याखण्डत्वेपि स्वरूपतोऽवच्छेदकतायाः सिद्धान्त-

---

## भावबोधिनी

भिन्नस्वरूपयोः प्रतिबन्धकतावच्छेदकयोर्भेदात् प्रतिबन्धकताद्वयं कल्पनीयमेव। तत्र चावच्छेदकगौरवमप्यधिकमिति पृथगेव प्रतिबन्धकता युक्तेति भावः।

अनेकत्रेत्यादि गदाधर पङ्क्तेराशयः न सम्यग्ज्ञायते। कृष्णम्भट्टस्तु–धूमालोकादिलिङ्गभेदभिन्नानेकानुमितिषु तत्पक्षकतत्साध्यकानुमितिं प्रति सकललिङ्गसाधारणसिषाधयिषां निवेश्य पक्षताया हेतुत्वे इति नार्थः। अनन्तस्थले इत्याद्यसंगतेः। किं तु तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितिं प्रति वा तल्लिङ्गकत्वप्रकारकेच्छाघटितपक्षतायाः सामानाधिकरण्येनावच्छेदकावच्छेदेन चानुमितौ तद्विधेयतदवच्छिन्नविधेयकतदवच्छिन्नोद्देश्यकानुमितौ वा तद्भेदभिन्नानुमित्साघटितपक्षताया वा हेतुत्वे इति व्याचख्यौ।

न च तादृशभेदयोः इति। सिद्धिभेदविशिष्टः प्रत्यक्षसामग्रीभेदो यत्रास्ति तत्रैव सामग्रीभेदविशिष्टः सिद्धिभेदोऽस्तीति समनियताभावानामैक्यात् उभयोरपि भेदयोरैक्यम्। अतः प्रतिबन्धकतावच्छेदकैक्यान्न प्रतिबन्धकताभेद इत्याशयः। तादृशभेदाभेदेऽपि इति। समानियताभावयोरैक्येपि अभावगतयोर्धर्मयोर्भेद एव। एवं च सिद्धिभेदविशिष्टसामग्रीभेदवद्भेदत्वेन प्रतिबन्धकतावच्छेदकत्वं वा सामग्रीभेद-

गादाधरी

विरुद्धत्वात्, यस्य स्वरूपतो भानं तस्यैव तथावच्छेदकतायाः सिद्धान्तसिद्धत्वात् विशेषणपुरस्कारेणोपस्थितेऽवच्छेदकत्वग्रहस्य विशेषणावच्छिन्नेऽवच्छेदकत्वावगाहित्व-नियमात्। किंचिद्रूपेण भासमाने स्वरूपतोऽवच्छेदकत्वस्य प्रमाणेनास्पर्शाच्च। न च तद्व्यक्तित्वेनैव भेदस्यावच्छेदकत्वं स्वीकरणीयम्; न तु स्वरूपतः; तथा च नोपदर्शितविनिगमनाविरह इति वाच्यम्; भेदनिष्ठतद्व्यक्तित्वस्य भेदस्वरूपाति-रिक्तस्य दुर्वचत्वात्, भेदस्वरूपस्य च तस्य स्वरूपतो निवेशासम्भवात्। एतेना-

भावबोधिनी

विशिष्टसिद्धिभेदवद्भेदत्वेन वा प्रतिबन्धकतावच्छेदकत्वमित्यत्र विनिगमनाविरहात् उभयरूपाभ्यां प्रतिबन्धकतावच्छेदकत्वस्य वक्तव्यतया प्रतिबन्धकतावच्छेदकता-वच्छेदकभेदात् प्रतिबन्धकतावच्छेदकभेदः तद्भेदात् प्रतिबन्धकताभेदो दुर्वार इति भावः।

न चाखण्डस्य तस्येति। सिद्धिभेदविशिष्टसामग्रीभेदवद्भेदादेरित्यर्थः। स्वरूपतो निवेशासंभवादिति। जात्यखण्डोपाधिभिन्नस्य स्वरूपतो विशेषणत्वानुप-गमादिति भावः। एतेनेति। तर्कालंकारेण तु बीजमनुक्त्वा अभावस्य तत्तद्-व्यक्तित्वेन हेतुत्वेऽन्यथासिद्धिरभिहिता। तत्र प्रतियोगिघटितरूपेण कारणत्वसंभवे तद्व्यक्तित्वेनान्यथासिद्धौ स्वयं तद्व्यक्तित्वस्य तद्व्यक्त्यात्मकतया स्वरूपतो निवेशासंभवात् प्रतियोगिघटितरूपेण निवेशो वाच्यः, तथा च गौरवमिति बीजं प्रदर्शितम्। परास्तमिति। अन्यथा घटादिसाधारणान्यतमत्वावच्छिन्नाभावस्य तद्व्यक्तित्वेन हेतुतामादाय विनिगमनाविरहप्रसङ्गात्। विशिष्टाभावस्य विशेष्या-भावविशेषणाभावानन्यत्वे तु न शङ्कापीति बोध्यम्।

केचित्तु-यथा महानसीयवह्निर्नास्तीति प्रतीतिः सामानाधिकरण्यसंबन्धेन

गादाधरी

खण्डस्यान्यतरत्वावच्छिन्नाभावस्य तद्व्यक्तित्वेनैव हेतुत्वमित्यपि परास्तम् ।

यत्तु सिद्धिभेदसामग्रीभेदयोस्सामानाधिकरण्येन मिथो विशेष्यविशेषणभावापन्नयोर्न भेदप्रतियोगितावच्छेदकत्वम्; येन विनिगमनाविरहः स्यात्; अपि तु धर्मिविशेषणतापन्नयोरेव व्यासज्यवृत्त्यवच्छेदकत्वं, तथाविधयोरप्यवच्छेदकतापर्याप्तेर्महानसीयवह्निर्नास्तीत्यादिप्रतीत्यावगाहनादिति; तदपि न; महानसीयवह्निर्नास्तीत्यादिबुद्धौ वह्नित्वाद्येकधर्मितावच्छेदकावच्छिन्न एव महानसीयत्वाद्यपरविशेषणभान-

---

भावबोधिनी

महानसीयत्वविशिष्टे वह्नित्वे वा वह्नित्वविशिष्टे महानसीयत्वे वा न प्रतियोगितावच्छेदकत्वमवगाहते, अपि तु एकत्र द्वयमिति रीत्या प्रतियोगिनि भासमानयोः महानसीयत्ववह्नित्वयोः व्यासज्यवृत्ति एकं प्रतियोगितावच्छेदकत्वमवगाहत इति स्वीक्रियते, तथा सिद्धिसामग्र्यन्यतरदिति प्रतीतिरपि सिद्धिभेदविशिष्टसामग्रीभेदे वा सामग्रीभेदविशिष्टसिद्धिभेदे वा न भेदप्रतियोगितावच्छेदकत्वमवगाहते, अपि तु अन्यतरत्वप्रतियोगिरूपे धर्मिणि विशेषणतापन्नयोः सिद्धिभेदप्रत्यक्षभेदयोरेकं भेदप्रतियोगितावच्छेदकत्वमवगाहते । ततश्च भेदद्वयनिष्ठावच्छेदकतैक्यात् भेदद्वयावच्छिन्नभेदरूपान्यतरत्वस्यैक्यं स्वीकृत्य प्रतिबन्धकतैक्यं निर्वहति । तन्मतं दूषयितुमनुवदति—यत्त्वित्यादिना । धर्मिविशेषणतापन्नयोरेवेति । एतन्मते एकत्र द्वयमिति ज्ञानेनैव निर्धर्मितावच्छेदकयोस्तयोस्तथात्वं द्रष्टव्यम् ।

तदपि नेत्यादेरयं भावः—महानसीयवह्निर्नास्तीत्यत्रापि महानसीयत्ववह्नित्वयोरवच्छेदकत्वे ग्राह्ये एकस्य धर्मितावच्छेदकत्वं अपरस्य विशेषणत्वमङ्गीक्रियते । तथा च वह्नित्वावच्छिन्ने महानसीयत्वस्य, महानसीयत्वावच्छिन्ने वह्नित्वस्य च विशेषणता । अत एव तत्र अवच्छेदकताविशेषणतारूपयोर्विषयतयोर्वैलक्षण्यात्

## गादाधरी

नियम इत्येकत्रानेकेषामवच्छेदकत्वे ग्राह्ये धर्मितावच्छेदकावच्छिन्नविशेषणतापन्नस्यैवावच्छेदकताग्रहः, न तु धर्मितावच्छेदकावच्छिन्नविशेषणतानापन्नस्यावच्छेदकताग्रह इति नियमेन प्रकृते कस्य धर्मितावच्छेदकतापन्नस्य कस्य वा तदवच्छिन्नविशेषणतानापन्नस्यावच्छेदकत्वमित्यत्र विनिगमनाविरहेणावच्छेदकताभेदस्यावश्यकत्वात्, अवच्छेदकविषयतावैलक्षण्यस्यावच्छेदकतावैलक्षण्यनियतत्वादित्यन्यत्र विस्तरः। अन्यतरत्वेनोभयोरनुगमेऽपि प्रतियोगितावच्छेदकसंबन्धाननुगमात् न तयोरेकाभावस्य कारणतासम्भव

---

## भावबोधिनी

अवच्छेदकताया भेद एव। तथा प्रकृतेऽपि सामग्रीभेदावच्छिन्ने सिद्धिभेदस्य सिद्धिभेदावच्छिन्नेसामग्रीभेदस्य च विशेषणत्वस्वीकारे विषयतावैलक्षण्येन प्रतियोगिताषच्छेदकताया भिन्नतया तदैक्यप्रयुक्तं प्रतिबन्धकतैक्यं दुरुपपादमिति।

अन्यत्र विस्तर इति। उभयधर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तदुभयैकधर्मावच्छिन्नधर्मिकतदितरप्रकारकज्ञानत्वेन हेतुत्वात् वह्निर्न महानसीय इति महानसीयो न वह्निरित्यादिबाधनिश्चयदशायां महानसीयवह्निर्नास्तीति बुद्धयनुदयस्यानुभविकत्वाच्च महानसीयवह्निर्नास्तीत्यादौ तादृशविषयतायाः सिद्धिः। एकत्र द्वयमिति रीत्या भाने तु तद्ग्रहस्य निर्धर्मितावच्छेदकतया उक्तबाधग्रहस्य विरोधित्वमेव न स्यादिति भावः।

एतावता सिद्धिप्रत्यक्षसामग्र्योरन्यतरत्वेनेनानुगमं कृत्वा तदवच्छिन्नप्रतियोगिताकाभावः पक्षतेत्युक्तौ प्रतियोगितावच्छेदकधर्मस्य गुरुशरीरतया विनिगमनाविरहेण तद्धर्मभेदेन प्रतिबन्धकताभेदप्रसक्त्या च दूषणमुक्तम्। अथ प्रतियोगितावच्छेदकसंबन्धभेदात् तयोरेकः अभावः कारणं न भवितुमर्हतीत्याह—दीधितौ आत्मनिष्ठश्चेत्यादिना। सिषाधयिषाविरहविशिष्टा सिद्धिः समवायसंबन्धेन आत्मनि

दीधितिः

पृथगेव विशेषणतायास्त्वयापि वाच्यत्वात् । स्वनिवर्तकप्रत्यक्षादिसामग्रीसमवहितान्यत्वादिना च तादृशेच्छयोरनुगमेऽतीव गौरवम् । अन्यतरत्वघटकयोरन्योन्याभावयोः मिथो विशेषणविशेष्यभावे

---

गादाधरी

इत्याह—आत्मनिष्ठ इति । समवायसंबन्धावच्छिन्नप्रतियोगिताकः सिद्ध्यभावः आत्मप्रत्यासन्नतया कारणं प्रत्यक्षासाधारणकारणचक्षुस्संयोगादिरूपसामग्र्यास्तु स्वाश्रयसंयुक्तमनस्संयोगादिरूपपरम्परात्मकभिन्नसंबन्धावच्छिन्नाभाव एवात्मप्रत्यासन्नतया कारणं वाच्यमित्यर्थः । विषयचक्षुस्संयोगादेस्समवायेनाभावस्य सर्वदैवात्मनि सत्त्वात्तादृशाभावकारणताया अतिप्रसङ्गावारकत्वादिति भावः । ननु विषयचक्षुस्संयोगादेर्न प्रतिबन्धकत्वं स्वीक्रियते येन संबन्धाननुगमः स्यात्, किं तु चक्षुस्संयोगादिविशिष्टस्य

---

भावबोधिनी

विद्यमाना सती अनुमितिं प्रतिबध्नातीति तादृशसिद्धिनिष्ठसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावः अनुमितौ कारणम् । विषयचक्षुःसंयोगादिघटितप्रत्यक्षसामग्र्याः साक्षात्संबन्धेन आत्मन्यसत्त्वात् स्वाश्रयसंयुक्तमनस्संयोगसंबन्धेन स्वजनकादृष्टवत्त्वसंबन्धेन वा आत्मनि विद्यमाना सती सामग्री प्रतिबध्नात्यनुमितिमिति वक्तव्यतया तत्तत्संबन्धावच्छिन्नप्रतियोगिताकसामग्र्यभावोऽनुमितिहेतुरिति वाच्यम् । एवं च प्रतियोगितावच्छेदकसंबन्धभेदात् एकधर्मावच्छिन्नप्रतियोगिताकाभावत्वेन कारणत्वं न संभवति । न च प्रत्यक्षसामग्र्या अपि समवायेन प्रतिबन्धकता तत्संबन्धावच्छिन्नतदभावस्य कारणता च वक्तुं शक्यते । विषयचक्षुस्संयोगादेः समवायेनाभावस्य सर्वदैवात्मनि सत्त्वात् प्रत्यक्षसामग्रीकालेऽप्यनुमितिप्रसङ्गात् । न चैतद्दोषवारणाय विषयचक्षुस्संयोगादेर्न प्रतिबन्धकत्वं स्वीक्रियते । अपि तु

दीधितिः

विनिगमकाभावश्च । आत्मनिष्ठश्च समवायेन सिद्धेरभावः कारणं; भिन्नभिन्नेन च सम्बन्धेन तत्तदसाधारणकारणरूपायास्तत्सामग्र्याः मणिविशिष्टस्य वह्नेरिवेतरेतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात् । तथा च कथमनुगतरूपेण तयोरभावः कारणं?

---

गादाधरी

मनोयोगस्यैव समवायेन प्रतिबन्धकत्वं वाच्यमित्यत आह—मणीति । वह्नेरित्यनन्तरं दाहं प्रतीति मनोयोगादेरित्यनन्तरं प्रकृत इति पूरणीयम् । प्रतिबन्धकत्वायोगादिति । मनोयोगस्यानुमितावपि हेतुत्वात् कारणस्य प्रतिबन्धकत्वायोगादिति भावः । यद्यपि कारणस्यापि रूपान्तरेण प्रतिबन्धकत्वे क्षतिविरहः दाहप्रतिबन्धकत्वे च वह्नेः प्रयोजनविरहादेवानिवेशः, प्रकृते तु संबन्धैक्यानुरोधेनैव मनोयोगादेरनुप्रवेश इत्यकिंचित्करमेतत्; तथापि मनोयोगस्याधिकस्य निवेशनीयतया

---

भावबोधिनी

विषयचक्षुस्संयोगादिविशिष्टस्य मनोयोगस्यैव समवायसंबन्धेनानुमितिप्रतिबन्धकत्वं स्वीक्रियते । अतस्संबन्धैक्यान्न दोष इति वाच्यम् । मणिविशिष्टस्य वह्नेर्यथा दाहप्रतिबन्धकत्वं न भवति, दाहकारणत्वाद्वह्नेः । तथानुमितिकारणीभूतस्य मनोयोगस्येतरविशिष्टस्यापि प्रतिबन्धकत्वासंभवादिति भावः ।

गादाधर्याम्—उभयोरिति । सिद्धिप्रत्यक्षसामग्र्योरित्यर्थः । संबन्धाननुगमादिति । संबन्धभेदादित्यर्थः । स्वाश्रयसंयुक्तमनस्संयोगादीत्यत्र आदिपदेन स्वजनकादृष्टवत्वादेः परिग्रहः । एवं विषयगतरूपादेः सामग्रीघटकस्य स्वाश्रयसंयुक्तत्वसंबन्धेन प्रतिबन्धकत्वं वाच्यम् । अत एव भिन्नभिन्नेन संबन्धेनेति दीधितावुक्तम् ।

गादाधरी

गौरवमेव बाधकं बोध्यम् । न च सामग्र्यास्स्वतन्त्रप्रतिबन्धकत्वमतेऽपि आत्मनिष्ठतासम्पत्तये चक्षुस्संयोगादेः संबन्धतया मनोयोगादिप्रवेशस्यावश्यकत्वान्नाधिक्यमेतन्मतेपि कालनिष्ठतया सामग्र्यभावहेतुत्वे तत्तत्पुरुषीयत्वनिवेशस्यावश्यकतया गौरवादिति वाच्यम्; तथापि मनोयोगादिसंबन्धस्याधिकस्य निवेशनीयतया गौरवस्य दुर्वारत्वात् । विषयभेदेन प्रतिबन्धकताभेदविरहानुरोधेन विषयप्रत्यासन्नतया चक्षुस्संयोगादिप्रतिबन्धकतापक्षस्यैव स्वतन्त्रसामग्रीप्रतिबन्धकतावादिभिराश्रयणीयतया तत्र मनोयोगादिनिवेशाभावाच्च । तथात्वेति । एवं रीत्या प्रतिबन्धकतावच्छेदक-

..............................................................................................................

भावबोधिनी

अतिप्रसङ्गावारकत्वादिति । प्रत्यक्षसामग्रीकालेऽनुमितिप्रसङ्गावारकत्वादित्यर्थः ।

ननु वह्नित्वेन रूपेण दाहकारणस्यापि वह्नेः मणिविशिष्टवह्नित्वेन प्रतिबन्धकत्वे का हानिः । एकरूपेणैव एकस्यैकत्र कारणत्वप्रतिबन्धकतयोरनुपपत्तिः, न भिन्नभिन्नरूपेण तथात्वे । न च विनिगमनाविरहात् वह्निविशिष्टमणित्वेन प्रतिबन्धकतापत्तिरिति वाच्यम् । मणित्वेनैव प्रतिबन्धकत्वे संभवति वह्नेरप्रवेशात् इति शङ्कते-यद्यपीति । समाधत्ते-तथापीति । संबन्धत्रये सत्यपि पक्षताशरीरे प्रत्यक्षसामग्रीघटकतया मनोयोगस्याधिकस्य निवेशनं कार्यमिति गौरवमिति भावः ।

ननु प्रत्यक्षसामग्र्याः स्वातन्त्र्येणानुमितिप्रतिबन्धकत्वमिति दीधितिकृन्मतेऽपि विषयचक्षुस्संयोगादिरूपायास्तस्याः आत्मनिष्ठतासम्पत्तये स्वाश्रयचक्षुस्संयुक्तमनस्संयोगवत्त्वसंबन्धेनैव प्रतिबन्धकत्वं वाच्यमिति प्रतियोगितावच्छेदकसंबन्धघटकतया मनस्संयोगस्य प्रवेशोऽस्त्येवेति न लाघवावकाश इत्याशङ्क्य मनस्संयोगस्य संबन्धतया निवेशे तस्य संबन्धो न निवेश्यते । सामग्रीमध्ये मनस्संयोगस्य चक्षुस्संयोतविशिष्टस्य निवेशे तु मनस्संयोगस्य यः संबन्धः समवायः स प्रतियोगिता-

## गादाधरी

संबन्धभेदस्यावश्यकत्वे चेत्यर्थः। पूर्वं प्रतियोगितावच्छेदकभेदेन सिद्धिसामग्रीविशेषणयोः सिषाधयिषाविरहपदार्थयोर्भेदात्तद्विशेषणप्रवेशपार्थक्यं व्यवस्थापितं, इदानीं संबन्धभेदेन तद्विशेषणताभेदं व्यवस्थापयति—एवमिति। एककालेति। एकक्षणावच्छिन्नमेकात्मसमवेतत्वमित्यर्थः। यद्यपि संबन्धमध्ये एकक्षणावच्छिन्नत्वानन्तर्भावेऽपि सिषाधयिषाकाले तद्विरहरूपविशेषणाभावायत्तो विशिष्टाभावो दात एव न च कालानन्तर्भावे सिषाधयिषाकालेऽपि सिद्धौ कालान्तरावच्छिन्नतद्विरहवत्यात्मनि वृत्तित्वरूपवैशिष्टयं वर्तते; अन्यात्मनि घटादौ च तादृशविशेशणं चेति विशिष्ट-

---

## भावबोधिनी

वच्छेदकसंबन्धतया निवेशनीय इति गौरवमिति समाधत्ते—न च सामग्र्या इत्यादिना। एतन्मतेऽपि। सामग्र्याः स्वतन्त्रप्रतिबन्धकतामतेऽपि। कालिकसंबन्धेन सामग्र्यभावः कालिकसंबन्धेनानुमितौ हेतुरिति स्वीकारे अन्यपुरुषीयसामग्र्यभावस्य कालिकसंबन्धेन काले सत्त्वात् अन्यपुरुषस्यानुमित्यापत्तिर्भवति। तद्वारणाय कालिकसंबन्धेन तत्पुरुषीयानुमितौ तत्पुरुषीयसामग्र्यभाव कालिकसंबन्धेन हेतुरिति स्वीकारे पुरुषभेदेनानन्तकार्यकारणभावः प्रसज्यत इति भावः। मनोयोगादिसंबन्धस्येति। मनस्संयोगादेः यः संबन्धः समवायस्तस्येत्यर्थः।

वस्तुतस्तु प्रत्यक्षसामग्र्याः स्वातन्त्र्येणानुमितिप्रतिबन्धकतामते सामग्र्यां मनोयोगो न प्रविशते। तन्मते विषयनिष्ठप्रत्यासत्त्यैव प्रतिबन्धकतास्वीकारादित्याह—विषयभेदेनेति। पर्वतोद्देश्यकवह्निविधेयकानुमितौ पर्वतचक्षुस्संयोगविशिष्टवह्निचक्षुस्संयोगस्य प्रतिबन्धकत्वे वह्न्यादिरूपविषयनिवेशात् विषयभेदेन प्रतिबन्धकताभेदप्रसङ्गेन गौरवम्, अतः विधेयतासंबन्धेन पर्वतोद्देश्यकानुमितौ समवायसंबन्धेन पर्वतचक्षुस्संयोगविशिष्टचक्षुस्संयोगः प्रतिबन्धक इति स्वीकार्यमिति न विषयभेदनिवेशप्रसङ्ग इत्यर्थः।

गादाधरी

सिद्धिसत्त्वमव्याहतमिति कथं विशिष्टाभावेन वर्तितव्यं? तत्कालान्तर्भावे तु तादृश-कालाभावान्न तदानीं तद्घटितवैशिष्ट्यमिति विशिष्टासत्त्वाद्विशिष्टाभावोऽक्षत इति वाच्यम्; सिषाधयिषाकालस्य तदधिकरणनिष्ठतदभावाधिकरणतानवच्छेदकतया तादृशाधिकरणताघटितसामानाधिकरण्यरूपतदिच्छासमानाधिकरणसिद्धिनिष्ठवैशिष्ट्येप्यनवच्छेद-कत्वात् तत्कालावच्छेदेन सिद्धिमत्यपि तदिच्छाधिकरणे इच्छाविरहविशिष्टसिद्धि-सत्त्वानुपपत्तेः, अन्यथा स्वाधिकरणकालावच्छिन्नत्वस्य स्वाधिकरणवृत्तिताविशेषणत्वेपि

---

भावबोधिनी

एवं सिद्धेरिति दीधितिमवतारयति-पूर्वमिति । सिद्धिप्रत्यक्षसामग्र्योः प्रति-योगितावच्छेदकरूपभेदेन तत्संबन्धभेदेन च पृथक्प्रतिबन्धकत्वात् तयोः सिषा-धयिषाविरहः पृथक् पृथक् विशेषणमिति निरूपितमेतावता । इतः परं सिद्धौ सिषाधयिषाविरहवैशिष्ट्यमन्येन संबन्धेन, सामग्र्यां तद्वैशिष्ट्यमन्येन संबन्धेनेत्येवं संबन्धभेदात् सकृत् सिषाधयिषाविरहस्य तयोर्विशेषणता न संभवतीति निरूपयती-त्यर्थः । एवं च यस्मिन् क्षणे यस्मिन्नात्मनि सिषाधयिषाविरहः वर्तते तस्मिन् क्षणे तस्मिन्नात्मनि अनुमितिर्न जायत इति एकक्षणावच्छिन्नैकात्मवृत्तित्वसंबन्धेन सिषाधयिषाविरहविशिष्टायाः सिद्धेः अनुमितिप्रतिबन्धकत्वम् । विषयचक्षुस्संयो-गादिघटितायां प्रत्यक्षसामग्र्यां तु सिषाधयिषाविरहवैशिष्ट्यं स्वाश्रयात्मानुयोगिक-स्वाश्रयसंयुक्तमनस्संयोगवत्त्वसंबन्धेन । प्रथमस्वपदं सिषाधयिषाविरहपरम् । द्वितीयस्वपदं विषयचक्षुस्संयोगादिपरम् । एवं च प्रतियोगितावच्छेदकधर्मसंबन्धभेदादिव प्रतियोगितावच्छेदकतावच्छेदकसंबन्धभेदादपि अनुगतरूपेण हेतुता न संभवतीति दीधित्याशयः । स्थूलकालमादाय दोषवारणाय कालपदं क्षणपरतया व्याचष्टे-एकक्षणावच्छिन्नेति । एकप्रहराद्यवच्छेदेन एकात्मनि सिषाधयिषाविरहविशिष्टायाः सिद्धेः सत्त्वेऽप्यनुमित्सादशायां पक्षतासंपत्त्यर्थं कालपदं क्षणपरमिति भावः ।

गादाधरी

तत्कालस्याप्यन्याधिकरणावच्छिन्नस्वाधिकरणतया कालविरहप्रयुक्तवैशिष्ट्यविरहस्यानिर्वाहात् विशेष्यीभूततत्सिद्ध्यधिकरणावच्छिन्नस्वाधिकरणकालत्वेन कालस्य संबन्धघटकत्वे चाननुगमादिति, तथापि विभिन्नकाले विशेषणविशेष्ययोः सामानाधिकरण्यसत्त्वेऽपि एकक्षणावच्छेदेन सामानाधिकरण्यस्यैव विशिष्टसत्त्वनिर्वाहकत्वमित्येतत्सूचनायैव एककालावच्छिन्नत्वकथनम्। केचित्तु कालस्य विशिष्टाभावप्रतियोगितावच्छेदकतावच्छेदकसंबन्धघटकत्वे तदुपलक्षिताभावात् तद्विशिष्टाभाववैलक्षण्यानिर्वाहः;

---

भावबोधिनी

यद्यपीति। एकक्षणावच्छिन्नत्वं संबन्धमध्ये न निवेश्यते। एकात्मवृत्तित्वसंबन्धेन सिषाधयिषाविरहवैशिष्टमेव सिद्धौ निवेश्यते। सिषाधयिषाकाले सिषाधयिषाविरहरूपविशेषणाभावात् तद्विशिष्टसिद्ध्यभावरूपपक्षता वर्तत इति नानुपपत्तिरिति भावः। न च कालान्तर्भाव इति। यदि संबन्धमध्ये एकक्षणावच्छिन्नत्वं नान्तर्भाव्यते तदा, यदा सिषाधयिषा सिद्धिश्च स्तः तदा पक्षता न स्यात्। कालान्तरावच्छेदेन सिषाधयिषाविरहस्य तदात्मनि सत्त्वात् एकात्मवृत्तित्वसंबन्धेन सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्। यदुक्तं तत्काले सिषाधयिषाविरहरूपविशेषणाभाव इति। तन्न। अन्यस्मिन्नात्मनि घटादौ च सिषाधयिषाविरहस्य सद्भावात्। तथा च विशेषणाभावप्रयुक्तः विशिष्टाभावो वक्तुं न शक्यते। कालान्तरावच्छिन्नसिषाधयिषाविरहवत्तदात्मवृत्तित्वात् सिद्धेः, सिषाधयिषाविरहविशिष्टा सिद्धिरेवास्तीति तदभावरूपपक्षता न स्यात्। एकक्षणावच्छिन्नत्वनिवेशे तु यत्कालावच्छिन्नसिषाधयिषाविरहवदात्मवृत्तित्वं सिद्धेः तत्कालस्य सिषाधयिषाकालेऽभावात् तत्कालघटितवैशिष्ट्यं नास्तीति विशिष्टसिद्ध्यभावरूपपक्षता निर्वहति। अतः संबन्धमध्ये कालान्तर्भाव आवश्यक इति भावः। एकक्षणावच्छिन्नत्वाप्रवेशे कथं विशिष्टाभावेन वर्तितव्यतमिति शङ्कायां समाधानमाह—

भावबोधिनी

**सिषाधयिषाकालस्येति ।** संबन्धमध्ये कालान्तर्भावेऽपि सिषाधयिषाकालावच्छेदेन सिषाधयिषाविरहवदात्मवृत्तित्वरूपं सिषाधयिषाविरहवैशिष्ट्यं सिद्धेर्न संभवति । आत्मनिष्ठायां सिषाधयिषाविरहाधिकरणतायां सिषाधयिषाकालस्य अनवच्छेदकत्वात् तादृशाधिकरणताघटितसामानाधिकरण्यरूपे वैशिष्ट्येऽप्यनवच्छेदकत्वात् इच्छाधिकरणे आत्मनि इच्छाकालावच्छेदेन सिषाधयिषाविरहविशिष्टसिद्धिसत्त्वानुपपत्तेः तदभावरूपायाः पक्षतायाः निर्वाहात् कालान्तर्भावो व्यर्थ इत्याशयः । **तदधिकरणनिष्ठेति ।** सिषाधयिषाधिकरणनिष्ठा या सिषाधयिषाभावाधिकरणता तदनवच्छेदकतयेत्यर्थः । **तादृशाधिकरणताघटितेति ।** सिषाधयिषाभावाधिकरणतावद्वृत्तित्वस्यैव सिषाधयिषाभावसामानाधिकरण्यरूपत्वादित्यर्थः । **अन्यथा ।** कालान्तर्भावेऽपि । **स्वाधिकरणेति ।** सिषाधयिषाविरहाधिकरणेत्यर्थः । तथा च सिषाधयिषाविरहाधिकरणकालावच्छिन्न—सिषाधयिषाविरहाधिकरणात्मवृत्तित्वनिवेशेऽपि एतदात्मनिष्ठसिषाधयिषाधिकरणकालस्य आत्मान्तरनिष्ठसिषाधयिषाविरहाधिकरणतया सिषाधयिषाविरहाधिकरणकालावच्छिन्नवृत्तित्वं सिद्धेरस्तीति वैशिष्ट्यविरहप्रयुक्ता पक्षता न निर्वहति । विशेष्यभूतसिद्धेरधिकरणभूतः य आत्मा तदवच्छिन्न—सिषाधयिषाविरहाधिकरणत्वेन कालस्य संबन्धघटकतां स्वीकृत्य तदवच्छिन्नवृत्तित्वस्य संबन्धत्वे तु अननुगमः स्यादिति भावः ।

समाधत्ते—**तथापीति ।** एतावतापि सिषाधयिषाविरहः कालान्तरावच्छेदेन, सिद्धिश्च कालान्तरावच्छेदेनेति भवतोपपादितम् । एकक्षणावच्छेदेनैकाधिकरणवृत्तित्वमेव विशिष्टसत्त्वनिर्वाहकमिति सूचनाय एककालावच्छिन्नत्वकथनमित्यर्थः ।

**केचित्त्विति ।** दण्डविशिष्टपुरुषाभावस्य दण्डोपलक्षितपुरुषाभावस्य च वैलक्षण्यं सर्वसंमतम् । तत्तु एवं निर्वाह्यम्—एकक्षणावच्छिन्नैकाधिकरणवृत्तित्व-

गादाधरी

प्रतियोगितावच्छेदकावैलक्षण्यात्, सर्वदा दण्डरहितपुरुषाधिकरणे दण्डोपलक्षितपुरुषाभावस्य सत्त्वे शुद्धपुरुषत्वादिमात्रस्य तत्प्रतियोगितावच्छेदकत्वासंभवात्, तादृशपुरुषान्तरव्यावर्तकानुगतधर्मान्तरविरहेण सत्त्वे वा प्रतियोगिकोटौ तस्याभावेन प्रतियोगितावच्छेदके तदन्तर्भावासम्भवादित्याहुः, तच्चिन्त्यम्। अन्यादृशमिति। स्वाश्रयीभूतात्मन्युक्तपरम्परासंबन्धेन संबन्धस्वरूपमित्यर्थः। ननु पक्षताशरीरे प्रत्यक्षादिसामग्र्यनन्तर्भावे तदभावस्यानुमितौ स्वतन्त्रहेतुताकल्पनमावश्यकम्, तथा च तस्यैव

भावबोधिनी

संबन्धेन दण्डस्य प्रतियोगिनि पुरुषे विशेषणत्वे दण्डविशिष्टपुरुषाभाव इत्युच्यते। कालाघटित–एकाधिकरणवृत्तित्वसंबन्धेन दण्डस्य पुरुषविशेषणत्वे दण्डोपलक्षितपुरुषाभाव इत्युच्यते। अर्थात् एकक्षणावच्छिन्नैकात्मवृत्तित्वस्य प्रतियोगितावच्छेदकतावच्छेदकसंबन्धत्वे विशिष्टाभावरूपता। एकाधिकरणवृत्तित्वस्य तत्त्वे उपलक्षिताभावरूपता। तथा च उपलक्षिताभावात् विशिष्टाभावस्य वैलक्षण्योपपादनाय विशिष्टाभावप्रतियोगितावच्छेदकतावच्छेदकसंबन्धे कालान्तर्भाव आवश्यकः। न च दण्डविशिष्टपुरुषाभावे दण्डपुरुषत्वयोः प्रतियोगितावच्छेदकत्वम्। दण्डोपलक्षितपुरुषाभावे पुरुषत्वमात्रस्य प्रतियोगितावच्छेदकत्वमिति प्रतियोगितावच्छेदकवैलक्षण्यादेव तयोर्वैलक्षण्यमिति वाच्यम्। सर्वदा दण्डरहितो यः पुरुषः तदधिकरणे भूतले दण्डोपलक्षितपुरुषो नास्तीति प्रतीत्या दण्डोपलक्षितपुरुषाभावोऽस्तीत्यविवादम्। यद्युपलक्षितपुरुषाभावे पुरुषत्वमात्रं प्रतियोगितावच्छेदकं तदा पुरुषत्वविशिष्टपुरुषाधिकरणे तदवच्छिन्नाभावानुपपत्तिः। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिना साकमभावस्य विरोधात्। अतः दण्डोपलक्षितपुरुषाभावेऽपि दण्डपुरुषत्वयोर्द्वयोरपि प्रतियोगितावच्छेदकत्वं वक्तव्यम्। तदुक्तौ दण्डरहितपुरुषवति भूतले दण्डपुरुषत्वोभयविशिष्टस्य पुरुष-

गादाधरी

**पक्षपदप्रवृत्तिनिमित्तता स्वीक्रियताम्; न तु सिद्धयभावस्य, तथा च पक्षपदप्रवृत्तिनिमित्तमिदमिति मूलविरोध इत्यत आह**–सामग्रीति। हेतुत्वेपि– **अनुमित्यसाधारणकारणत्वेपि।** लाघवात्–**लघुशरीरत्वात्। ननु लाघवस्य पक्षपदवृत्तिनिमित्तत्वोपष्टम्भकत्वे बाधाभावस्यैव तथात्वमुचितम्; सिषाधयिषाविरहाप्रवेशात्, यदि च सिद्धसाधनस्थले पक्षव्यवहारो नास्तीति सिद्धयभावस्य तथात्वमित्युच्यते; तदा बाधदशायामपि तद्विरहात् सोपि निवेश्यतामित्यत आह**–फलानुपहितेति। **स्वविषय-**

---

भावबोधिनी

स्याभावात् दण्डोपलक्षितपुरुषाभावसत्त्वम्। एवं च विशिष्टाभावोपलक्षिताभावयोरुभयोरपि दण्डपुरुषत्वयोर्द्वयोरेव प्रतियोगितावच्छेदकतया प्रतियोगितावच्छेदकतावच्छेदकसंबन्धवैलक्षण्यादेव वैलक्षण्यम् इति केचित्तत्कारणामाशयः।

ननु पुरुषाभावात् पृथक् दण्डोपलक्षितपुरुषाभावो नास्तीत्यत आह—**सर्वदेति।** ननु सर्वदा दण्डरहितो यः पुरुषः तद्व्यावृत्तं पुरुषत्वं दण्डोपलक्षितपुरुषाभावस्य प्रतियोगितावच्छेदकमतो न दोष इत्यत्राह–**तादृशपुरुषान्तरेति।** ननु तद्व्यक्त्यन्यत्वादिकं धर्मान्तरमस्त्येवेत्यत आह–**सत्त्वे वेति। तच्चिन्त्यमिति।** उपलक्षिताभावप्रतियोगिता विशेष्यमात्रनिष्ठा, विशिष्टाभावप्रतियोगिता विशेषणविशेष्योभयपर्याप्ता। यद्वा उपलक्षितस्थले दण्डधर्मितावच्छेदकतापन्नपुरुषत्वं प्रतियोगितावच्छेदकम्, विशिष्टस्थले पुरुषत्वावच्छिन्नविशेषणतापन्नं दण्डवत्त्वं तथेत्यत एव वैलक्षण्यनिर्वाहे कालान्तर्भावे नैतन्मानमिति चिन्ताबीजमाहुः।

**स्वाश्रयीभूतेति।** स्वं–सिषाधयिषाविरहः तदाश्रयीभूते आत्मनि स्वाश्रयसंयुक्तमनस्संयोगवत्त्वसंबन्धेन चक्षुस्संयोगस्य संबद्धत्वम्। स्वं चक्षुस्संयोगः तदाश्रयः चक्षुः तत्संयुक्तं मनः तत्संयोगः आत्मनि।

दीधितिः

चक्षुस्संयोगादेस्त्वन्यादृशमिति सामग्रीविशेषाभावस्य हेतुत्वेपि लाघवात्सिद्ध्यभाव एव पक्षव्यवहारनिमित्तम्। एतदेवाभिसन्धाय प्रवृत्तिनिमित्तमुक्तमिति वक्ष्यति। फलानुपहितसिद्धीच्छाविरहविशिष्टसिद्ध्यभावापेक्षया बाधाभावस्य लघुत्वेपि

गादाधरी

सिद्ध्यनुपहितेत्यर्थः। एतच्चातिगौरवसूचनाय। सिद्धसाधनस्थले—साध्यनिश्चयदशायाम्। पक्षव्यवहारविरहेण—पक्षव्यवहारविरहस्य सर्ववादिसिद्धत्वेन। गौरवादिति। बाधस्थले पक्षव्यवहारविरहस्य सविवादतया गौरवसहिष्णुताया अन्याय्यत्वादिति भावः। ननु समवायसम्बन्धावच्छिन्नसिद्ध्यभावस्यात्मप्रत्यासन्नतयैव अत्रानुमितिहेतुतया तस्य पक्षपदप्रवृत्तिनिमित्तत्वे आत्मन्येव पक्षव्यवहारप्रसङ्ग इत्यत आह—विशिष्टेति। सिषाधयिषाविरहविशिष्टेत्यर्थः। एतदभिधानं च सिद्धेः पक्षनिष्ठाया

भावबोधिनी

ननु पक्षताशरीर इति। पक्षताशरीरे पूर्वोक्तदोषेभ्यः प्रत्यक्षसामग्र्या यदि नान्तर्भावः, तदा प्रत्यक्षसामग्र्यभावस्य पृथक् अनुमितिकारणत्वं वाच्यम्। तथा च प्रत्यक्षसामग्र्यभावो यत्रास्ति स पक्षः प्रत्यक्षसामग्र्यभावः पक्षपदप्रवृत्तिनिमित्तमित्येवोच्यताम्। न चेष्टापत्तिरिति वाच्यम्। सिद्ध्यभावः पक्षपदप्रवृत्तिनिमित्तमित्यभिप्रायकेण 'तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम्' इति मूलग्रन्थेन विरोधात् इत्याशङ्क्य सिषाधयिषाविरहविशिष्टप्रत्यक्षसामग्र्यभावापेक्षया सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य लघुत्वात् स एव पक्षपदप्रवृत्तिनिमित्ततया मूलोक्त इति समाधत्ते दीधितिकृदिति भावः।

दीधितिः

सिद्धसाधनस्थले पक्षव्यवहारविरहेण तादृशसिद्ध्यभावस्यावश्यकत्वे बाधाभावो न निविशते गौरवात् । विशिष्टसिद्ध्यभावस्य चात्मनिष्ठास्यैवानुमितिहेतुत्वेऽपि तस्य परंपरासंबन्धादेव पर्वतादौ

---

भावबोधिनी

ननु लाघवस्येति। यदि लाघवं सिपाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षपदप्रवृत्तिनिमित्तत्वे प्रयोजकं तदा बाधाभावस्य ततोऽपि लघुत्वाद् पक्षपदप्रवृत्तिनिमित्तत्वमस्तु। कथं लघुत्वमिति चेत्–बाधे सिषाधयिषाविरहरूपविशेषणाप्रवेशात्। यदि तत्प्रवेशः तदा साध्याभावनिश्चयरूपबाधकाले सत्यां सिषाधयिषायामनुमितिप्रसङ्गः। यदि च बाधाभावेऽपि वह्न्यादिसाध्यनिश्चयात्मकसिद्धिकाले पर्वतादौ पक्ष इति व्यवहाराभावात् सिद्ध्यभावः पक्षव्यवहारनिमित्तमित्युच्यते, तदा सिद्ध्यभावेऽपि बाधनिश्चयकाले ह्रदादौ पक्ष इति व्यवहाराभावात् बाधाभावः पक्षपदव्यवहारनिमित्तमित्यप्यस्तु इति शङ्का। सिद्धिसत्त्वे पक्षव्यवहाराभावः सर्वसंमतः, बाधकाले पक्षपदव्यवहाराभावस्सविवादः न सर्वसंमतः। तस्मात् सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव पक्षपदप्रवृत्तिनिमित्तम्। न तु लघुभूतोऽपि बाधाभाव इति समाधानम्।

फलानुपहितसिद्धीच्छेति दीधितौ फलमित्यस्य विषयसिद्धिरित्यर्थः। विषयसिद्ध्युपहितायाः विषयसिद्धिविशिष्टायाः सिषाधयिषाया उत्तेजकत्वं नास्ति, इच्छाया विषयसिद्ध्या चरितार्थत्वादिति भावः।

गादाधर्यां–ननु समवायसंबन्धेत्यादि। समवायसंबन्धेनानुमितिं प्रति समवायसंबन्धावच्छिन्नसिद्धिनिष्ठप्रतियोगिताकाभावस्य हेतुतया तस्य चात्मनि विद्यमानस्य पक्षपदप्रवृत्तिनिमित्तत्वे पक्षे पर्वतादावव्रुत्तेः कथं पर्वतादौ पक्षव्यवहारः

भावप्रकाशिनी

ग्रस्तुत आत्मनि पक्षव्यवहारः स्यात् इति शङ्कायां तादृगसिद्ध्यभावस्य स्वप्रतियोगिनिरूपितविशेष्यतासंबन्धेन पर्वतादिनिष्ठतया तत्र पक्षव्यवहार इति समाधानमुक्तम् दीधितौ। तेन आत्मनिष्ठप्रत्यासत्त्यैव सिद्ध्यभावस्यानुमितिं प्रति हेतुत्वम्। पक्षपदव्यवहारनिमित्तत्वं तूक्तपरंपरासंबन्धेनैवेत्यावेदितं भवति।

ननु दीधितौ विशिष्टसिद्ध्यभावस्येति कुत उक्तम्? सिद्ध्यभावस्येत्येव वक्तुं शक्यत्वात् इत्यत्राह—एतदभिधानं चेति। सिषाधयिषाविरहविशिष्टत्वाभिधानमित्यर्थः। अनुमितेः सिद्धेश्च विषयनिष्ठप्रत्यासत्त्यैव प्रतिबध्यप्रतिबन्धकत्वमस्तु, तथा अनुमितेः सिद्ध्यभावस्य च विषयनिष्ठप्रत्यासत्त्यैव हेतुहेतुमत्त्वमस्तु इति शङ्कानिरासाय सिषाधयिषाविरहविशिष्टेत्युक्तमित्यर्थः। उद्देश्यतासंबन्धेनानुमितिं प्रति विशेष्यतासंबन्धेन सिद्धिः प्रतिबन्धिका। तथा उद्देश्यतासंबन्धेनानुमितिं प्रति स्वप्रतियोगितावच्छेदकविशेष्यतावच्छेदकधर्मवत्त्वसंबन्धेन सिद्ध्यभावः हेतुः। तथा तेन संबन्धेन सिद्ध्यभावः पक्षपदप्रवृत्तिनिमित्तम्। अत आत्मनि न पक्षव्यवहार इति न संभवति। पर्वतो वह्निमानित्याकारकसिद्धौ पर्वते वह्निमनुमिनुयामित्याकारकेच्छाया एवोत्तेजकत्वम्, एवं महानसं वह्निमदित्याकारकसिद्धौ महानसे वह्निमनुमिनुयामित्याकारकेच्छाया एवोत्तेजकत्वम्। अन्यथा एकस्यां सिद्धौ सर्वासामिच्छानामुत्तेजकत्वे पर्वतो वह्निमानिति सिद्धिदशायां महानसे वह्निमनुमिनुयामितीच्छायाः सत्त्वे पर्वतो वह्निमानित्यनुमित्यापत्तेः। एवं च तत्पक्षकतत्साध्यकानुमितौ तत्पक्षकतत्साध्यकानुमितीच्छाविरहविशिष्टतत्पक्षकतत्साध्यकसिद्ध्यभावः कारणमिति पक्षादिभेदेन कारणताभेदस्यावश्यकतया आत्मनिष्ठप्रत्यासत्त्या कारणतैव युक्ता। विषयनिष्ठप्रत्यासत्त्या कारणत्वे पुरुषान्तरीयसिद्ध्यभावमादाय तत्पुरुषस्य सिद्धिसत्त्वेऽनुमितिवारणाय तत्पुरुषीयानुमितौ तत्पुरुषीयसिद्ध्यभावो हेतुरिति पुरुषविशेषानन्तर्भाव्य कारणताया वक्तव्यतया गौरवादिति भावः।

## गादाधरी

उद्देश्यतासंबन्धेनानुमितिप्रतिबन्धकत्वसम्भवप्रदर्शनाय। पर्वते वह्निमनुमिनुयां महानसे वह्निमनुमिनुयामित्याद्याकारकानुमित्सानामेकत्रोत्तेजकत्वेऽतिप्रसङ्गेन पृथगेवोत्तेजकतया पक्षभेदेन कारणताभेदस्यावश्यकतयात्मनिष्ठप्रत्यासत्तेरेवोचितत्वात्। अन्यथा पुरुष-विशेषाणामन्तर्भावनीयतया गौरवात्। समानप्रकारिकाया असमानविशेष्यकसिद्धेरनु-मितिप्रतिबन्धकतयापि पक्षनिष्ठप्रत्यासत्त्यसम्भवो बोध्यः। परम्परासम्बन्धादिति। स्वप्रतियोगितावच्छेदककोटिप्रविष्टविशेष्यतावच्छेदकवत्स्वरूपादित्यादिः। न च सिद्धि-

---

## भावबोधिनी

स्वप्रतियोगितावच्छेदककोटिप्रविष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकत्वस्वसामा-नाधिकरण्योभयसंबन्धेनेच्छाविरहो विशेषणमित्युक्तौ त्वाह—समानप्रकारिकाया इति। असमानविशेष्यकसिद्धेरिति। यत्पर्वतविशेष्यिका पर्वतो वह्निमान् इत्यनुमितिः तदन्यपर्वतविशेष्यकसिद्धेरित्यर्थः। तथा चोद्देश्यतासंबन्धेनानुमितिं प्रति विशेष्यता-संबधेन सिद्धेः प्रतिबन्धकत्वे पर्वतान्तरोद्देश्यकानुमितौ पर्वतान्तरविशेष्यकवह्निप्रकारक-सिद्धेः प्रतिबन्धकत्वं न स्यात् यत्र पर्वते उद्देश्तासंबन्धेनानुमितिर्वर्तते तत्र पर्वते विशेष्यतासंबन्धेन सिद्धेरभावात्। आत्मनिष्ठप्रत्यासत्त्या हेतुत्वे तु समवाय-संबन्धेन पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकानुमितिं प्रति समवायसंबन्धेन तादृशसिद्धेः प्रतिबन्धकतया नोक्तदोष इति भावः।

स्वप्रतियोगितावच्छेदकेति। स्वं—सिद्ध्यभावः तत्प्रतियोगितावच्छेदककोटि-प्रविष्टा या विशेष्यता तदवच्छेदकधर्मवत्त्वमित्यर्थः। वह्नित्वावच्छिन्नप्रकारता-निरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नाभावस्यैव सिद्ध्यभावपदेन विवक्षणीयतया पर्वतत्वावच्छिन्नविशेष्यतायाः स्वप्रतियोगितावच्छेदककोटिप्रविष्टत्वम्।

न च सिद्धिकालेऽपीति। पर्वतो वह्निमान् इत्याकारकनिश्चयकालेऽपि तादृश-

गादाधरी

कालेऽपि पक्षे एतादृशसंबन्धेन सिद्ध्यभावो वर्तते; अत्यन्ताभावस्य नित्यत्वादित्यतिप्रसङ्ग इति वाच्यम्; तत्तदात्मवृत्तित्वविशिष्टस्यैव सिद्ध्यभावस्य तादृशसंबन्धेन तत्पुरुषं प्रति पक्षव्यवहारनियामकत्वात् ।

ननु विषयचक्षुस्संयोगादिरूपायाः प्रत्यक्षसामग्र्याः आत्मनिष्ठप्रत्यासत्त्या न प्रतिबन्धकतासम्भवः; उक्तपरम्पराया अतिप्रसक्तत्वात् सम्बन्धत्वे मानाभावाच्च,

---

भावबोधिनी

निश्चयाभावः वर्तते, अत्यन्ताभावस्य नित्यत्वात् । एतादृशसंबन्धेन = स्वप्रतियोगितावच्छेदककोटिप्रविष्टविशेष्यतावच्छेदकधर्मवत्त्वसंबन्धेन पर्वते स वर्तते । स्वं–तादृशनिश्चयाभावः तत्प्रतियोगितावच्छेदकीभूता विशेष्यता पर्वतनिष्ठा विशेष्यता तदवच्छेदकपर्वतत्ववत्त्वस्य पर्वते सत्त्वात् । तथा च सिद्धिकालेऽपि उक्तसंबन्धेन सिद्ध्यभावरूपपक्षतायाः सत्त्वादनुमितिप्रसङ्ग इति भावः । तत्तदात्मेति । यस्यात्मनः यदानुमितिरिष्यते तदात्मवृत्तित्वविशिष्टः सिद्ध्यभावः तत्पुरुषं प्रति पक्ष इति व्यवहारे निमित्तम् । सिद्धिकाले सिद्ध्यभावस्य तदात्मवृत्तित्वं नास्तीति नानुमितिप्रसङ्ग इति भावः ।

एकस्य पुंस इति दीधितिमवतारयति–ननु विषयचक्षुस्संयोगादिरूपाया इति । समवायसंबन्धेनानुमितिं प्रति स्वाश्रयसंयुक्तमनस्संयोगवत्त्वरूपपरंपरासंबन्धेन विषयचक्षुस्संयोगादिकं प्रतिबन्धकमित्येवम् आत्मनिष्ठप्रत्यासत्त्या प्रत्यक्षसामग्र्याः प्रतिबन्धकता न संभवति । आत्मनां विभुत्वात् अन्यस्मिन्नात्मन्यपि अन्यदीयचक्षुस्संयुक्तमनस्संयोगसद्भावात् अनुमित्यनापत्तेः । अपि च परंपरायाः संबन्धत्वे प्रमाणाभावात् तेन संबन्धेन प्रतिबन्धकतापि न घटते । अतो यदा प्रत्यक्षसामग्री तदुत्तरक्षणे नानुमितिरिति रीत्या कालिकसंबन्धेनानुमितिं प्रति कालिक-

दीधितिः

पक्षव्यवहार इति ध्येयम् । एकस्य पुंसोऽनुमित्सासत्त्वेपि अन्यस्य तद्विरहिण: प्रत्यक्षादिसामग्रीसत्त्वेऽनुमित्यनुत्पादात् तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषीयानुमित्साविरहकालीनतत्तत्पुरुषीयसिद्धि-

---

गादाधरी

तथा च यदा तादृशसामग्री तदुत्तरक्षणे नानुमितिरिति कालिकप्रत्यासत्त्यैव प्रतिबन्धकत्वं कल्पनीयम्; तथा च पुरुषान्तरीयप्रत्यक्षसामग्र्यापि पुरुषान्तरीयानुमितिप्रतिबन्धः स्यात्, एवं कालिकसंबन्धावच्छिन्नानुमित्साविरहस्यैव दैशिकसंबन्धघटितसामानाधिकरण्यसंबन्धेन सामग्र्यां विशेषणत्वं स्वीकार्यम्; तथा च पुरुषान्तरीयानुमित्साकालीनाया अपि पुरुषान्तरप्रत्यक्षसामग्र्यास्तदीयानुमित्यप्रतिबन्धकत्वापत्तिरित्याशंकां चक्षुस्संयोगादौ, तत्पुरुषीयत्वमन्तर्भाव्य निराकरोति- एकस्येति ।

---

भावबोधिनी

संबन्धेन प्रत्यक्षसामग्री प्रतिबन्धिकेति वाच्यम् । तथा च पुरुषान्तरस्य प्रत्यक्षसामग्री यदा अस्ति तदुत्तरक्षणे पुरुषान्तरस्य वह्न्याद्यनुमितिर्न स्यात् । एवं प्रत्यक्षसामग्र्याम् सिषाधयिषाविरहोऽपि कालिकसंबन्धावच्छिन्नप्रतियोगिताक एव विशेषणमिति वक्तव्यम् । तथा सति यदा अन्यस्य पुरुषस्यानुमित्सा अन्यस्य पुरुषस्य प्रत्यक्षसामग्री तदा अनुमित्सावतः पुरुषस्य अनुमित्यापत्तिः । विशेषणाभावप्रयुक्तस्य कालिकसंबन्धावच्छिन्नानुमित्साविरहविशिष्टप्रत्यक्षसामग्रीरूपप्रतिबन्धकाभावस्य सत्त्वात् इत्याशङ्क्य अनुमित्सायां प्रत्यक्षसामग्र्यां अनुमितौ च तत्पुरुषीयत्वं निवेश्य प्रतिबध्यप्रतिबन्धकभावः कार्यकारणभावश्च कल्पनीयः इति समाधत्ते दीधितिकृत । तथा च तत्पुरुषीयानुमितिं प्रति तत्पुरुषीयसिषाधयिषा-

## गादाधरी

अनुमित्यनुत्पादादित्यन्तमुपलक्षणम् । अन्यस्य प्रत्यक्षसामग्रीसत्त्वे अन्यस्य तद्विरहिणोऽनुमित्युत्पादाच्चेत्यपि द्रष्टव्यम् । तत्पुरुषीयानुमित्सायाः कालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य दैशिकसंबन्धेनाधिकरणं यः क्षणः तत्र कालिकसंबन्धेन वर्तमानत्वं कालीनान्तार्थः सामग्रीविशेषणम् । अथ वा समवायावच्छिन्नप्रतियोगिताकतदात्मवृत्तित्वविशिष्टानुमित्साभावाधिकरणतावच्छेदकक्षणे कालिकसंबन्धेन वृत्तित्व-

---

## भावबोधिनी

विरहकालीन-तत्पुरुषीयप्रत्यक्षसामग्री प्रतिबन्धिका तदभावः कारणमिति गत्यन्तराभावात् कल्पनीयमिति भावः ।

उक्तपरंपराया इति । स्वाश्रयसंयुक्तमनस्संयोगवत्त्वरूपपरंपराया इत्यर्थः । अतिप्रसक्तत्वादिति । आत्मनां विभुत्वेन परात्मन्यप्युक्तसंबन्धसत्त्वादिति भावः । मनस्संयोगे वैजात्यनिवेशे त्वाह-संबन्धत्व इति । दैशिकसंबन्धघटितेति । स्वरूपसंबन्धघटितेत्यर्थः । अनुमित्साविरहस्य स्वरूपसंबन्धेनाधिकरणं यः क्षणः तत्र कालिकसंबन्धेन वृत्तित्वं सामानाधिकरण्यमित्यर्थः । सामग्र्यां तत्पुरुषीयत्वोपादानबीजं पूरयति-उपलक्षणमिति ।

ननु तत्पुरुषीयानुमित्साक्षणस्यापि पुरुषान्तरावच्छेदेन तत्पुरुषीयानुमित्साविरहवत्त्वात् तत्पुरुषीयानुमित्साविरहस्य स्वरूपसंबन्धेनाधिकरणं यः क्षणः तद्वृत्तित्वविशिष्टप्रत्यक्षसामग्र्याः प्रतिबन्धिकायाः सत्त्वात् तत्पुरुषस्यानुमितिर्न स्यादित्यतः कल्पान्तरमाह-अथवेति । समवायसंबन्धावच्छिन्नप्रतियोगिताकः यः तदात्मवृत्तित्वविशिष्टः अनुमित्साभावः तदधिकरणतावच्छेदके क्षणे कालिकसंबन्धेन वृत्तित्वविशिष्टा प्रत्यक्षसामग्री प्रतिबन्धिकेत्यर्थः । तत्पुरुषीयानुमित्साक्षणः तत्पुरुषीयानुमित्साविरहाधिकरणतावच्छेदको न भवति । किं तु क्षणान्तरमेव तद्वृत्तित्व-

गादाधरी

मेव तदर्थः; तेन तत्पुरुषीयानुमित्साक्षणस्यापि अन्यदेशावच्छेदेन दैशिकसंबन्धेन कालिकसंबन्धावच्छिन्नतदिच्छाभाववत्त्वेपि न क्षतिः। तत्पुरुषीयसिद्धिसामग्रीविशेषविरह इति। कालिकसंबन्धावच्छिन्नप्रतियोगिताकः पक्षनिष्ठतदीयेन्द्रियसन्निकर्षादिविशिष्टसाध्यनिष्ठतदीयेन्द्रियादिसन्निकर्षादिविरह इत्यर्थः। विशिष्टत्वमेककालीनत्वमेव। विशेष्य-

---

भावबोधिनी

विशिष्टा अनुमित्साक्षणवृत्तिः प्रत्यक्षसामग्री न भवतीति न तस्याः अस्मिन् पक्षे प्रतिबन्धकत्वमिति भावः।

कालिकसंबन्धावच्छिन्नानुमित्साविरहस्य आत्मनि सर्वदा सत्त्वात् अवच्छेदकाप्रसिद्धेः समवायेति। सामग्रीमत्क्षणस्य तादृशानुमित्साकाले तदभावाधिकरणतावच्छेदकत्वं दुर्वारम्, अभावस्य नित्यत्वात् अतः अनुमित्साविरहः तत्पुरुषीयत्वेन विशेषितः। अत्रैव विशिष्टाधिकरणतानिवेशसाफल्यम्।

न च पूर्वकल्पस्यातितुच्छत्वापत्तिः। क्षणे निरवच्छिन्नदैशिकसंबन्धेन तत्पुरुषीयानुमित्साविरहनिवेशेन दोषवारणात्। परं तु गौरवात्तत्त्यागो बोध्यः।

दीधितौ सिद्धिसामग्रीविशेषविरह इति। सिद्धिसामग्रीमात्रस्याप्रतिबन्धकत्वादुक्तं विशेषेति। तेन प्रत्यक्षात्मकसिद्धिसामग्रीलाभः। यद्यपि सिद्ध्यात्मकप्रत्यक्षस्यापि सामग्रीमात्रं न प्रतिबन्धकम्, प्रसिद्धसाध्यकस्थले सर्वत्रैव साध्यवत्त्वोपनीतभानसामग्रीसंभवात्। नापि लौकिकप्रत्यक्षसामग्री तथा, वंशे सर्पत्वव्याप्यवत्तानिश्चयदशायां मण्डूकवसाञ्जनादिबलात् सर्पत्वाद्यलौकिकप्रत्यक्षानुत्पत्तिप्रसङ्गात्। तथापि साक्षात्कारत्वनिरूपितसाध्यनिष्ठप्रकारताकप्रत्यक्षसामग्री प्रवेश्या। तादृशी च प्रकारता लौकिक इव दोषविशेषजन्यत्वेऽपि साध्यस्य प्रत्यक्षे वर्तत

## गादाधरी

विशेषणभावे विनिगमनाविरहान्नानाकारणताकल्पनमगत्या न दोषाय। यावत्त्वेन तदसाधारणकारणसमुदायस्य प्रतिबन्धकत्वं पुनरनुपादेयमेव; यावत्त्वस्य दुर्निर्वचत्वात्। पर्वतो वह्निमानित्याद्यनुमितिसमानविषयकचाक्षुषादिसामग्र्याः प्रतिबन्धकतायां रूपादिकं नान्तर्भावनीयम्। तत्र साध्यपक्षयो रूपादिमत्त्वनियमेन तन्निवेशे प्रयोजनाभावात्। किं तु पर्वतो द्रव्यवान् द्रव्यं वह्निमत् द्रव्यं द्रव्यवदित्याद्यनुमितौ वाय्वादीन्द्रिय-सन्निकर्षस्याविरोधित्वोपपत्तये यथायोगं साध्यपक्षादौ रूपादिमत्त्वं निवेशनीयम्।

---

## भावबोधिनी

एव। उभयत्रैव सर्पं साक्षात्करोमीत्यनुभवादित्यन्यत्र विस्तृतमिति तर्कालंकारः।

गादाधर्या—कालिकसंबन्धावच्छिन्नप्रतियोगिताक इति। पर्वतो वह्निमानिति प्रत्यक्षसामग्री पर्वतो वह्निमानित्यनुमितौ प्रतिबन्धिका। अतः तादृशसामग्र्य-भावः तादृशानुमितौ हेतुः। पर्वतो वह्निमानिति प्रत्यक्षे पर्वतस्य वह्नेश्च भावात् एककालिकत्वसंबन्धेन तत्पुरुषीयपर्वतचक्षुस्संयोगविशिष्टः यः तत्पुरुषीयवह्निचक्षुस्संयोगः तदभावः तन्निष्ठकालिकसंबन्धावच्छिन्नप्रतियोगिताकः अभावः तत्पुरुषीयपर्वतो वह्नि-मानित्यनुमितौ हेतुः इति भावः। विनिगमनाविरहादिति। पर्वतचक्षुस्संयोगविशिष्टः यः वह्निचक्षुस्संयोगस्तदभवो वा वह्निचक्षुस्संयोगविशिष्टो यः पर्वतचक्षुस्संयोगः तद-भावो वा कारणमित्यत्र विनिगमनाविरहादित्यर्थः। ननु प्रत्यक्षसामग्र्याः नैक-विशिष्टापरत्वेन निवेशः येन विनिगमनाविरहप्रयुक्तं कारणानन्त्यं स्यात्। अपि तु समुदायत्वेनेत्यत्राह—यावत्त्वेनेति। यावत्त्वस्याप्यन्ततः एकविशिष्टापरत्व एव पर्यवसानादिति भावः।

अथेत्यादि। यस्मिन् काले समानविषयकप्रत्यक्षसामग्रीरूपं प्रतिबन्धकं वर्तते तस्मिन्नेव काले सामग्र्यनधिकरणदेशावच्छेदेन प्रत्यक्षसामग्र्यभावो वर्तत

गादाधरी

अथ प्रतिबन्धकसामग्रीमत्यपि काले तदनधिकरणदेशावच्छेदेन तदभावस्य सौलभ्यात् अनुमित्यापत्तिः। न च प्रतिबन्धकसत्तायाः कार्यानुत्पादप्रयोजकत्वात् तत्सत्त्वे कथं कार्योत्पत्तिरिति वाच्यम्; सामग्र्याः कार्योत्पत्तिप्रयोजिकायाः प्रतिबन्धकसत्त्वेपि तदभावस्याक्षतत्वेनाक्षततया कार्योत्पत्तेर्दुर्वारत्वादिति चेत्; न, यादृशकारणताघटकनियमे देशान्तरावच्छेदेन कार्यसमानाधिकरणकरणाभावव्यावर्तकं देशभेदानवच्छिन्नत्वं अन्यद्वा विशेषणमभावे निविशते, यथा समवायादिसंसर्गावच्छिन्नसंयोगज्ञानादिनिष्ठ-

---

भावबोधिनी

इति कारणसद्भावात् अनुमित्यापत्तिः। न च प्रतिबन्धकसत्तायाः कार्यानुत्पत्तिप्रयोजकत्वात् प्रतिबन्धके सति कथं कार्योत्पत्तिः स्यादिति वाच्यम्। तथैव कारणसत्तायाः कार्योत्पत्तिप्रयोजकत्वात् प्रत्यक्षसामग्र्यभावरूपकारणसद्भावात् अनुमितिरूपकार्योत्पत्त्यापत्तिरिति भावः। **कार्योत्पत्तिप्रयोजिकाया इति।** अक्षततयेत्यत्रान्वेति।

समाधत्ते—**यादृशकारणेत्यादिना।** कार्याधिकरणे कार्याव्यवहितप्राक्कालावच्छेदेन देशनिष्ठावच्छेदकत्वानिरूपकवृत्तिमान् योऽभावः तदप्रतियोगित्वमेको नियमः। अत्र कपालादिसंयोगस्य घटादिकं प्रति, इच्छां प्रति वा ज्ञानादेः, घटाद्यधिकरणकपालादौ तत्पूर्वकालेऽवयवान्तरावच्छेदेन तादृशसंयोगाभावस्य, इच्छाधिकरणात्मादौ घटाद्यवच्छेदेन तत्पूर्वकाले ज्ञानाद्यभावस्य सत्त्वात् कारणत्वं न स्यात्। अतो देशविशेषानवच्छिन्नत्वं देशविशेषनिष्ठावच्छेदकत्वानिरूपकत्वात्मकमावश्यकम्। **अन्यद्वेति।** प्रतियोगिवैयधिकरण्यमित्यर्थः। वाकारोऽनास्थायाम्। कार्याव्यवहितप्राक्कालावच्छेदेन कार्यसामानाधिकरणाभावाप्रतियोगित्वमात्रं द्वितीयनियमः। तत्र देशविशेषानवच्छिन्नत्वाप्रवेशं दर्शयति **उक्तेति। तादृशाभावविशेषण-**

गादाधरी

कारणताघटकनियमे तदन्यकारणतावच्छेदकावच्छिन्नस्य देशभेदानवच्छिन्नवृत्तिरेव अधिकरणे कार्योत्पत्तिप्रयोजिका उक्तप्रतिबन्धकाभावस्य च कारणता न तादृशी, किंचिदवच्छेदेन प्रतिबन्धकसत्त्व एव तत्र कार्यानुत्पत्त्या तादृशाभावविशेषणप्रवेशे प्रयोजनाभावात्, तथा च देशभेदावच्छिन्नप्रतिबन्धकाभावसत्त्वेनानुमित्यापत्तिः। एतेनात्मनि शरीरविशेषावच्छेदेन सिद्ध्यादिरूपप्रतिबन्धकसत्त्वे घटाद्यवच्छिन्नतदभावबलादनुमित्यापत्तिरपि निरस्ता। न च सिद्ध्यादिमत्यात्मनि तत्काले वा घटाद्य-

---

भावबोधिनी

प्रवेशे इति। तादृशं—देशविशेषानवच्छिन्नत्वरूपं यत् अभावस्य विशेषणं तस्य प्रवेशे इत्यर्थः। तथा चेति। प्रत्यक्षसामग्रीकाले तदनधिकरणदेशावच्छिन्नैव प्रत्यक्षसामग्र्यभावसत्ता न देशविशेषानवच्छिन्नेति नानुमित्यापत्तिरित्यर्थः।

एतेनेति। तदन्यकारणतावच्छेदकावच्छिन्नस्य देशविशेषानवच्छिन्नवृत्तिरेव अधिकरणे कार्योत्पत्तिप्रयोजिकेति स्वीकारेणेत्यर्थः।

न च सिद्ध्यादिमतीति। सिद्ध्यादिमति आत्मनि काले वा सिद्ध्यनधिकरणघटाद्यवच्छिन्ना या सिद्ध्यभाववृत्तिः तदन्या देशविशेषानवच्छिन्ना वृत्तिरेव नास्तीति कथं तस्याः कार्योत्पत्तिप्रयोजकत्वमुच्यत इति भावः। तादृशवृत्त्यनभ्युपगम इति। सिद्ध्याद्यसत्त्वदशायां आत्मनि विद्यमानः सिद्ध्यभावः दैशिकाव्याप्यवृत्तिरिति सर्वानुभवसिद्धम्। दैशिकाव्याप्यवृत्तित्वं नाम देशविशेषानवच्छिन्नवृत्तिकत्वम्। तथा च देशविशेषानवच्छिन्नवृत्तिः यदि सिद्ध्याद्यभावस्य नाभ्युपगम्यते तदा दैशिकाव्याप्यवृत्तित्वं न स्यादिति भावः।

कायव्यूहस्थल इति। एकेन जीवात्मना अनेकशरीराधिष्ठानस्थल इत्यर्थः।

गादाधरी

च्छिन्ना या तदभाववृत्तिस्तदन्यदेशभेदानवच्छिन्नतद्वृत्तेरप्रामाणिकत्वेन सिद्ध्याद्य-सत्त्वेप्यनुमित्याद्यनुपपत्तिरिति वाच्यम्; तादृशवृत्त्यनभ्युपगमे सिद्ध्याद्यसत्त्वदशायां तदभावस्यात्मनि दैशिकव्याप्यवृत्तितायास्सर्वानुभवसिद्धाया अनुपपत्तेः। यदि च काय-व्यूहस्थले एकत्रात्मनि शरीरान्तरावच्छेदेन सिद्ध्यभावाद्यभावस्य सिद्ध्यादेः सत्त्वेऽ-प्यन्यशरीरावच्छेदेनानुमित्याद्युत्पादः प्रामाणिकः, तदा सिद्ध्यभावविशिष्टकारणता-घटकनियमशरीरेऽभावांशे उक्तविशेषणप्रवेशस्यावश्यकत्वात् घटाद्यवच्छिन्नसिद्ध्यभाव-

---

भावबोधिनी

तथा च एकेनात्मना अनेकेषु शरीरेषु परिगृहीतेषु एकशरीरावच्छेदेन सिद्धौ सत्यामपि शरीरान्तरावच्छेदेन सिद्ध्यभावात् तदवच्छेदेन अनुमितिर्भवति। सिद्ध्य-भावस्य तदात्मवृत्तिः शरीरविशेषावच्छिन्नेति, अनुमित्यव्यवहितप्राक्क्षणावच्छेदेन तदात्मवृत्तिः योऽभावः सिद्ध्यभावाभावः तत्प्रतियोगित्वमेव सिद्ध्यभावे वर्तते। अतः तस्य कारणत्वोपपत्तये तन्निष्ठकारणताघटकनियमशरीरे अभावे देशविशेषा-नवच्छिन्नत्वं निवेशनीयम्। एवं च कायव्यूहव्यतिरिक्तस्थलेऽपि घटाद्यवच्छिन्न-सिद्ध्यभावबलात् सिद्धिकालेऽप्यनुमितिः स्यात्। तद्वारणाय गत्यन्तरमेवानुसर-णीयम्। तच्च स्वावच्छेदकावच्छिन्नत्वस्वाव्यवहितप्राक्कालावच्छिन्नत्वस्वाधिकरण-निरूपितत्वैतत्त्रितयसंबन्धेन कार्यविशिष्टा या वृत्तिः तद्वदभावाप्रतियोगित्वरूप-व्यापकत्वमेव कारणघटकम्। न चात्र देशविशेषानवच्छिन्नवृत्तेरेवाधिकरणे कार्यो-त्पत्तिनियामकत्वम्। अन्यथा घटावच्छेदेन सिद्ध्यभावबलात् अनुमित्यापत्तेरनु-द्धरात्। तथा च कायव्यूहस्थले अनुमित्यनुपपत्तिरिति वाच्यम्। शरीरविशेषा-वच्छिन्नवृत्तेरप्यधिकरणे कार्योत्पत्तिप्रयोजकत्वादिति। सर्वमिदं मनसिकृत्यैव दिगि-त्युक्तम्।

केचित्तु एकत्र क्रियायाः संयोगकारणताघटकनियमस्यैवासंभववारणाय कार्यता-

दीधितिः

सामग्रीविशेषविरहोऽनन्यगतिकत्वेन हेतुरुपेतव्य इति वदन्ति।

अथ सिद्ध्यनन्तरानुमितौ सिषाधयिषा हेतुरस्तु, न चैवं मण्यादिस्थलीयदाहं प्रत्युत्तेजकस्य हेतुत्वापत्तिः; उत्तेजकानामननुगतत्वात् तावदभावविशिष्टमण्याद्यभावस्यानुगतत्वादिति चेत्

---

गादाधरी

बलात् सिद्ध्यादिदशायामनुमित्यापत्तेर्वारणाय गत्यन्तरमेवानुसरणीयमिति दिक्।

उत्तेजकत्वाभिमतसिषाधयिषाकारणतां स्वीकृत्य सिद्ध्यभावकारणतामाक्षिपति– अथेत्यादिना चेदित्यन्तेन। एतावतैव विना सिषाधयिषां सिद्ध्यनन्तरमनुमितेर्वारणसम्भवादिति भावः। प्रतिबन्दिमाशङ्कते–नचैवमिति। उत्तेजकस्य– मन्त्रौषधविशेषादेः। प्रतिबन्दिमुद्धरति–उत्तेजकानामिति। मण्यादिस्थलीयोत्तेजकमन्त्रौषधादीनामित्यर्थः। अननुगतत्वादिति। तथा चानुगतकार्यं प्रति व्यभिचारेण कारणत्वा-

---

भावबोधिनी

वच्छेदकव्यापकत्वसामानाधिकरण्यकत्वमेव तद्घटकनियमो वाच्यः। संयोगज्ञानादीनामव्याप्यवृत्तीनामप्येषैव रीतिः। तत्राभावानां देशविशेषानवच्छिन्नवृत्तिरेव कार्योत्पत्तिप्रयोजिका। कायव्यूहानुरोधेन तु शरीरविशेषावच्छिन्नवृत्तिरपीति प्राहुः।

यत्र सिद्धिः सिषाधयिषा चास्ति तत्रानुमितेः संपादनाय सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणं दत्तं मणिकारैः। तद्विशेषणं मास्तु। सिद्ध्यनन्तरजायमानानुमितिं प्रति उत्तेजकत्वेनाभिमता सिषाधयिषा हेतुरिति स्वीक्रियताम्। तत्र सिद्ध्यभावस्य कारणत्वं मास्तु इति आक्षिपतीत्याह– उत्तेजकताभि-

दीधितिः

इहाप्युपदर्शितोऽननुगमः सिषाधयिषायाः, सिद्ध्युत्तरानुमितित्वं चानुगतानतिप्रसक्तं दुर्वचम्। सिद्धिस्थितिकालीनां स्वेतरसिद्धिकालीनां वानुमितिं प्रति हेतुत्वकल्पने विना सिषाधयिषां सिद्धिनाश-

---

गादाधरी

सम्भवादिति भावः। इहापि—सिद्धिस्थलेपि। दर्शित इति।—यादृशयादृशेच्छासत्त्व इत्यादिनेत्यादि.। सिषाधयिषायाः—उत्तेजकीभुतायाः इत्यादिः। तथा च तुल्य-युक्त्या उत्तेजकाभावकूटविशिष्टायास्सिद्धेरभाव एव दाहादौ मण्याद्यभाववद्धेतुर्भ-विष्यतीति भावः। ननु तावदभावकूटविशिष्टसाध्यनिश्चयाभावत्वापेक्षया लघीयसा अन्ततस्तावदन्यान्यत्वेनैवानुगमसम्भवः सिषाधयिषाणामित्यत आह—सिद्ध्युत्तरानुमितित्वं

---

भावबोधिनी

मतेति। ननु यदि सिद्ध्यभावस्यानुमितिकारणत्वं नाङ्गीक्रियते, तदा सिद्ध्यनन्तर-मनुमित्यापत्तिरित्यत आह—एतावतैवेति। सिद्ध्यनन्तरानुमितौ सिषाधयिषाया हेतुत्वात् सिषाधयिषाया असत्त्वे अनुमितिर्नापादयितुं शक्यते। सिषाधयिषायाः सत्त्वे त्वनुमितिरिष्टैवेति भावः। तथा चेति। मणिस्थलीयदाहरूपैककार्यं प्रति मन्त्रौषधविशेषादीनामनेकेषां कारणत्वे यत्र एकस्मात् उत्तेजकात् दाहो जायते तत्रोत्तेजकान्तरं विनैव दाहस्य जायमानतया व्यतिरेकव्यभिचारेण उत्तेजकानां कारणत्वासंभवादित्यर्थः। ननु उत्तेजकानां सिषाधयिषाणां तत्तद्व्यक्तित्वेन अनुमितिकारणत्वेऽननुगमात् व्यतिरेकव्यभिचारो भवेदिति तावदन्यान्यत्वरूपेणान्य-तमत्वेनानुगतरूपेण कारणत्वे न व्यतिरेकव्यभिचारः इत्याशङ्क्य दोषान्तरमुक्तं दीधितौ सिद्ध्युत्तरानुमितित्वं चेति।

## गादाधरी

चेति। अनुगतस्य तस्य सिद्धिसमानकालीनप्रागभावप्रतियोगित्वरूपस्य, अनतिप्रसक्तस्य च तत्सिद्धिनाशकालीनप्रागभावप्रतियोगित्वे सति तत्सिद्धिसमानकालीनप्रागभावप्रतियोगित्वात्मकस्यैव सम्भवात् अनुगतानतिप्रसक्तेत्युभयमुपात्तम्; तथा च प्रथमधर्मस्य कार्यतावच्छेदकत्वे सिषाधयिषामन्तरेण सिद्धिनाशोत्तरे काले जायमानायामनुमितौ सिषाधयिषाया व्यभिचारः, उत्तरस्य तथात्वे चानन्तकार्यकारणभावप्रसङ्ग इति भावः। सिद्धिस्थितिकालीनामिति। स्वक्षणवृत्तिप्रागभावप्रतियोगित्वस्वक्षणवृत्तित्वोभयसंबन्धेन

## भावबोधिनी

सिद्ध्युत्तरानुमितिर्द्विप्रकारेण भवति। सिद्ध्यव्यवहितोत्तरक्षणे सिषाधयिषाबलाजायमानानुमितिः, सिद्धिनाशोत्तरं सिषाधयिषां विना जायमानानुमितिश्चेति। उभयानुगतं सिद्ध्युत्तरत्व सिद्धिसमानकालिकप्रागभावप्रतियोगित्वरूपं वक्तु शक्यते। परं त्विदं न सिषाधयिषाकार्यतावच्छेदकम्, सिषाधयिषां विना जायमानायां सिद्धिनाशोत्तरकाले जायमानायामनुमितावपि सत्त्वेन अतिप्रसक्ततया तदवच्छिन्नं प्रति व्यभिचारेण सिषाधयिषायाः कारणत्वासंभवात्। अनतिप्रसक्तं = सिद्धिनाशोत्तरकालीनानुमितावविद्यमानं सिद्ध्युत्तरत्वं च तत्सिद्धिकालीनप्रागभावप्रतियोगित्वरूपं यद्यपि सुवचं, तथापि तन्नानुगतम्। न च तत्सिद्धिनाशेति अनुक्त्वा सिद्धिनाशेत्याद्युक्तौ अस्याप्यनुगतत्वमस्त्येवेति वाच्यम्। अप्रतियोगित्वेनाभिमताया अनुमितेरपि सिद्ध्यन्तरनाशकालीनप्रागभावप्रतियोगितया सत्यन्ताप्रसिद्धिवारणाय तत्सिद्धिनाशकालीनेत्येव वक्तव्यतया सिद्धिभेदेन कारणतानन्त्यं स्यादिति हृदयम्। अतः अनुगतानतिप्रसक्तं तत् दुर्वचमित्युक्तमिति भावः। ननूक्तानतिप्रसक्तरूपावच्छिन्नं प्रत्येव सिषाधयिषाया हेतुत्वमस्तु इत्यत्राह—उत्तरस्य तथात्व इति।

स्वक्षणवृत्तीति। स्वं—सिद्धिः स्वक्षणवृत्तिः यः प्रागभावः अनुमितिप्रागभावः

बोधितिः

कालेऽनुमित्युत्पादो दुर्वारः। एकस्य पुंसः सिद्धिसत्त्वे अन्यस्य सिषाधयिषाशून्यस्यानुमित्यनुत्पादप्रसङ्गः। अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतो अनुमितिसामान्योत्पत्ति-

---

भावबोधिनी

तत्प्रतियोगित्वमनुमितौ, एवं स्वक्षणः सिद्ध्युत्पत्तिद्वितीयक्षणः तद्वृत्तित्वमनुमितौ। तथा च सिद्धेः पूर्वक्षणे सिषाधयिषासत्त्व एव सिद्धिद्वितीयक्षणेऽनुमितिर्भवितुमर्हति। अतः सिद्धिस्थितिकालीनानुमितौ सिषाधयिषा हेतुरित्युक्तौ न दोषः। सिद्धिनाशोत्तरकालीनाया अनुमितेः सिद्धिस्थितिकालीनत्वाभावेन कार्यतावच्छेदकानाक्रान्ततया तस्याः सिषाधयिषां विना जायमानत्वेऽपि न व्यतिरेकव्यभिचार इति भावः। **सिद्ध्यवच्छिन्नामिति**। सिद्धिविशिष्टामित्यर्थः।

**स्फुटैवेति**। अनुमितेः स्वक्षणवृत्तित्वात् आद्यम्। नष्टसिद्धिमादाय व्यभिचारवारणाय द्वितीयम् इति भावः। ननु स्वपदार्थस्य तत्तद्व्यक्तिविश्रान्ततया अननुगम इत्याशङ्क्य तस्य संबन्धविधया निवेशान्नाननुगम इत्याह – **संबन्धविधयेति**। संबन्धविधया निवेशेऽपि स्वपदेन तत्तद्व्यक्तेरेव ग्राह्यतया अननुगमोऽस्त्येवेत्याशङ्क्याह–**संबन्धमध्य इति**। अयं भावः-सिद्धिविशिष्टत्वमनुमितेः क्षणवृत्तित्वभिन्नत्वोभयसंबन्धेन, न तत्र स्वपदार्थप्रवेशः। न च सिद्धिनाशानन्तरानुमितेः तत्सिद्ध्यतिरिक्तसिद्धिक्षणवृत्तित्वात्, अनुमित्यात्मकसिद्धिक्षणवृत्तेरनुमितेः सिद्ध्यन्तरभिन्नत्वाच्च तयोः सिद्धिविशिष्टत्ववारणाय स्वपदार्थप्रवेश आवश्यक इति वाच्यम्। सिद्ध्यन्तराधिकरणक्षणवृत्तित्वस्य एतत्सिद्धिप्रतियोगिकसंबन्धत्वाभावात् सिद्ध्यन्तरभिन्नत्वस्य एतदनुमितिरूपसिद्धिप्रतियोगिकसंबन्धत्वाभावाच्च उक्तदोषाभावात् इति।

## भावबोधिनी

अतिप्रसङ्गविरहादित्यस्य सिद्धिनाशानन्तरानुमित्यादेः सिद्धिविशिष्टत्वमादाय सिषाधयिषायाः व्यतिरेकव्यभिचारप्रसक्त्यभावादित्यर्थः ।

सिद्धिस्थितिकालीनानुमितिं प्रति सिषाधयिषाया हेतुत्वे सिद्धिनाशकालेऽनुमित्युत्पादो दुर्वार इति दीधितावुक्तम् । तत्र सिद्धिनाशकालपदेन सिद्धिनाशोत्पत्त्यनन्तरक्षणानामपि सिद्धिनाशकालरूपत्वात् ग्रहीतुं शक्यतया तेषु क्षणेषु सिषाधयिषां विना अनुमित्युत्पत्तेरिष्टतया दोषाभावात् सिद्धिनाशोत्पत्तिक्षण एव सिद्धिनाशकालपदेन विवक्षणीयः । तथा सति सिद्ध्युत्पत्तितृतीयक्षणस्यैव सिद्धिनाशोत्पत्तिक्षणतया तस्मिन् क्षणे विना सिषाधयिषां नानुमितिरिष्यते, पूर्वक्षणे सिद्धिरूपप्रतिबन्धकसद्भावात् । सिद्धिस्थितिकालीनानुमितिं प्रत्येव सिषाधयिषाहेतुत्वे तु सिद्धिनाशोत्पत्तिक्षणे आपाद्यमानायाः अनुमितेः सिद्धिस्थितिकालीनत्वाभावात् तां प्रति सिषाधयिषाया अहेतुत्वात् विनापि सिषाधयिषां अनुमित्यापत्तिरिति वक्तुं शक्यते । तदिदमभिसन्धाय—नाशकाले इत्यस्य नाशोत्पत्तिक्षणे इति विवरणं कृतम् । **उक्तसिषाधयिषेति** । उक्तं यत् सिषाधयिषायाः कार्यतावच्छेदकं स्वक्षणवृत्तित्व-स्वभिन्नत्वोभयसंबन्धेन सिद्धिविशिष्टत्वरूपं तदनाश्रयत्वादित्यर्थः ।

एकस्य पुंस इत्यादिदीधितिमवतारयति—ननु स्वक्षणवृत्तीत्यादिना । सिद्ध्युत्पत्तिद्वितीयक्षणे तृतीयक्षणे वा अर्थात् सिद्धिनाशोत्पत्तिक्षणे वा यानुमितिर्जायते सैवोक्तोभयसंबन्धेन सिद्धिविशिष्टा भवति । स्वक्षणपदेन प्रथमक्षणग्रहणे तद्वृत्तिर्यः द्वितीयक्षणे जायमानानुमितेः प्रागभावः तत्प्रतियोगित्वं तस्या अनुमितेः भवति, एवं सिद्धिनाशक्षणवृत्तिर्यः प्रागभावः अनुमित्यन्तरप्रागभावः तदप्रतियोगित्वं च द्वितीयक्षणे जायमानानुमितावस्ति । एवं स्वक्षणपदेन द्वितीयक्षणग्रहणे तद्वृत्तिर्यः प्रागभावः तत्प्रतियोगित्वं तृतीयक्षणे जायमानानुमितावस्ति । एवं स्वनाशक्षणे

### गादाधरी

सिद्ध्यवच्छिन्नामित्यर्थः। लाघवायाह—स्वेतरेति। स्वभिन्नत्वस्वक्षणवृत्तित्वोभयसंबन्धेन सिद्ध्यवच्छिन्नामित्यर्थः। पक्षद्वये दलद्वयव्यावृत्तिश्च स्फुटैव। सम्बन्धविधया स्वक्षणवृत्तित्वादीनां निवेशान्न स्वत्वाननुगमनिबन्धनो दोषः। संबन्धमध्ये स्वपदार्थानिवेशेऽप्यन्याधिकरणवृत्तित्वादेरन्यसंबन्धत्वाभावेनातिप्रसंगविरहात्। नाशकाले—नाशोत्पत्तिक्षणे। अनुमित्युत्पादो दुर्वार इति। सिद्धिनाशसमयोत्पन्नाया अनुमितेः उक्तसिषाधयिषाकार्यतावच्छेदकानाक्रान्तत्वादिति भावः। ननु स्वक्षणवृत्तिप्रागभाव-

---

### भावबोधिनी

सिद्धिनाशाधिकरणे सिद्धितृतीयक्षणे वर्तमानः यः प्रागभावः अनुमित्यन्तरप्रागभावः तदप्रतियोगित्वं च तस्यामस्ति। एवं च तयोरनुमित्योः सिद्धिविशिष्टयोः सिषाधयिषा कारणमिति न तयोः सिषाधयिषां विनोत्पत्तिः। सिद्धिनाशानन्तरक्षणे जायमानानुमितिस्तु नोक्तोभयसंबन्धेन सिद्धिविशिष्टा, स्वनाशक्षणवृत्तिप्रागभावप्रतियोगित्वेन तदप्रतियोगित्वरूपद्वितीयसंबन्धाभावात्। अतस्तां प्रति न सिषाधयिषाया अपेक्षेति न कोऽपि दोषः इति भावः। नातिप्रसङ्ग इति। सिद्धिनाशोत्पत्तिक्षणे नानुमित्युत्पादप्रसङ्ग इत्यर्थः। संबन्धाननुगमस्यादोषत्वादिति। अन्यनाशक्षणवृत्तिनाशाप्रतियोगित्वस्य अन्यसंबन्धत्वाभावात्, यत्सिद्धिव्यक्तिवैशिष्ट्यमनुमितेरुपपादनीयम् तत्सिद्धिनाशाधिकरणक्षणवृत्तिप्रागभावाप्रतियोगित्वस्यैव तत्सिद्धिसंबन्धत्वात् स्वपदार्थस्य संबन्धमध्येऽनिवेशेऽपि क्षत्यभावादित्यर्थः। कथंचिदनुगमस्यापि संभवाच्चेति। स्वक्षणवृत्तिप्रागभावप्रतियोगित्वस्वध्वंसोत्पत्त्यधिकरणक्षणवृत्तित्वैतदुभयत्वेनानुगम इति भावः। दीधितौ—एकस्य पुंस इत्यादि। यदि सिद्ध्युत्तरानुमितिं प्रति सिषाधयिषा हेतुरित्युच्यते तदा चैत्रस्य सिद्धिसत्त्वे तदुत्तरं मैत्रस्य सिद्धिसिषाधयिषोभयशून्यस्य परामर्शवतः अनुमितिरिष्यमाणा न स्यात्। मैत्रीयानुमितेरपि चैत्रीयसिद्ध्युत्तरतया कार्यतावच्छेदकाक्रान्तत्वेन तां प्रति सिषाधयिषाया अपेक्षितत्वात्। ननु सिद्धि-

## गादाधरी

प्रतियोगित्वस्वनाशक्षणवृत्तिप्रागभावाप्रतियोगित्वोभयसंबन्धेन सिद्ध्यवच्छिन्नानुमितित्वमेव सिषाधयिषाजन्यतावच्छेदकं वाच्यम्। एतच्च सिद्धिनाशकालोत्पन्नानुमितिसाधारणमेवेति नातिप्रसङ्गः। न च सामान्यतो नाशक्षणवृत्तिप्रागभावाप्रतियोगित्वं जन्यमात्रस्यैव न सम्भवतीति यदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वं तद्व्यक्तिनाश एव विशिष्य निवेश्य इत्यननुगमतादवस्थ्यमिति वाच्यम्। सम्बन्धाननुगमस्यादोषत्वात्। कथञ्चिदनुगमस्यापि सम्भवाच्चेत्यतो दोषान्तरमाह—एकस्येति। सिद्धि-

---

## भावबोधिनी

समानाधिकरणसिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुः, मैत्रीयानुमितेः चैत्रीयसिद्धिसमानाधिकरणत्वाभावात् तत्र सिषाधयिषा नापेक्षितेति चेत्—एवमपि सिद्धौ सत्यां विनापि सिषाधयिषां परामर्शरूपसामान्यसामग्रीतः अनुमितित्वावच्छिन्नं भवतु। सिद्ध्युत्तरानुमितित्वरूपविशेषधर्मावच्छिन्नं प्रत्येव सिषाधयिषाया हेतुतया अनुमितित्वरूपसामान्यधर्मावच्छिन्नस्य विशेषकारणसिषाधयिषां विनापि संभवात्। न च विशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं न भवतीति अनुमित्सात्मकविशेषसामग्र्याः अभावात् कथमापत्तिरिति वाच्यम्। यत्र सिद्धिर्नास्ति तत्र परामर्शादिरूपसामान्यसामग्र्याः सिषाधयिषामन्तरेणाप्यनुमितिजनकत्वात्। न च तत्र सिद्ध्यभावरूपविशेषसामग्रीसहित एव परामर्शोऽनुमितिजनक इति वाच्यम्। सिद्ध्यभावस्यैतन्मतेऽनुमित्यहेतुत्वात्। सिषाधयिषायाश्च विशेषसामग्र्यास्तत्र अभावात्। ननु सिद्ध्युत्तरानुमितौ सिषाधयिषाया इव तदनुत्तरानुमितावपि सिद्धिसामान्याभावस्य हेतुत्वं वाच्यम्। तथा च परामर्शादिसामान्यसामग्रीसत्त्वेऽपि सिद्धिदशायां निरुक्तविशेषसामग्रीविरहादेव नानुमितिरिति चेन्न। विशेषसामग्रीद्वयकल्पनामपेक्ष्यानुमितिसामान्ये एकस्य विशिष्टसिद्ध्यभावस्यैव हेतुत्वं लाघवादिति भावः।

दीधितिः

प्रसङ्गः। न हीदृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति। न चान्यत्रापि तद्विशेषसामग्र्यन्तर-

---

गादाधरी

सत्त्व इति। अव्यवहितपूर्वकाल इत्यादिः। अनुमित्यनुत्पादप्रसङ्ग इति। पुरुषान्तरीय-सिद्ध्यव्यवहितोत्तरोत्पन्नपुरुषान्तरीयानुमितेरपि उक्तसिषाधयिषाजन्यतावच्छेदकधर्मा-क्रान्तत्वादिति भावः। सामानाधिकरण्यस्याप्यधिकस्य दर्शितकार्यतावच्छेदकघटकसंबन्ध-मध्ये निवेशेन पुरुषान्तरीयसिद्ध्यनन्तरोत्पन्नानुमितौ सिषाधयिषाया व्यभिचारवारण-सम्भवाद्दोषान्तरमाह-अपि चेति। सामान्यसामग्रीतः अनुमितिसामान्यहेतुभूतपरामर्शा-दितः। ननु विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्योत्पादकत्वान्नापत्ति-सम्भव इत्याशङ्कायामाह- न हीति। ईदृशेति। सिषाधयिषारूपेत्यर्थः। जनकत्वमुप-

---

भावबोधिनी

गादाधर्यां-सामानाधिकरण्यस्यापीति। स्वक्षणवृत्तिप्रागभावप्रतियोगित्वस्वनाश-क्षणवृत्तिप्रागभावाप्रतियोगित्वस्वसामानाधिकरण्यैतन्त्रितयसंबन्धेन सिद्धिविशिष्टानुमितिं प्रति सिषाधयिषाया हेतुत्वमिति भावः।

अनुमितिजनकतावच्छेदकपरामर्शत्ववत्त्वरूपस्य स्वरूपयोग्यत्वस्य विशेष-सामग्रीशून्यकालीनसामान्यसामग्र्यां सत्त्वात् जनकत्वमुपधायकत्वमित्युक्तम्। शिष्टं स्पष्टम्।

तत्तदनुमितीत्यादि। न च सिद्ध्यनुत्तरवर्तितत्तदनुमितिव्यक्तिष्ववश्यं तत्त-त्परामर्शादिव्यक्तेर्विशिष्य हेतुत्वमुपेयम्। अन्यथा परामर्शादेः सामान्यकारणस्या-विशिष्टत्वात् तत्रैकानुमित्युत्पत्तिदशायां भाव्यनुमित्यन्तरापत्तेः। तथा च तत्तत्प-

गादाधरी

धायकत्वम् । नास्तीति । न हीत्यन्वयः । सिद्ध्यसत्त्वे सिषाधयिषां विनापि परामर्शादेरनुमित्युत्पादकत्वादिति भावः । तथा च तत्रैव सिद्धिदशायामपि परामर्शादिसत्त्वे- सिषाधयिषाविरहो नानुमित्यनुत्पादप्रयोजको भवेदिति पर्यवसितम्; ननु विशेष- सामग्रीविरहकूट एव सामान्यसामग्रीदशायां सामान्यकार्यानुत्पादप्रयोजकः सिद्ध्यसत्त्व- स्थलीयविशेषसामग्रीविरहघटितस्याभावकूटस्य च सिषाधयिषाविरहसहकृतसिद्धिस्थल

---

भावबोधिनी

रामर्शाद्यात्मकविशेषसामग्रीविरहादेव सिद्धिदशायामनुमित्यापत्त्यसंभव इति वाच्यम् । यत्र क्रमेण सिद्धिपरामर्शसिद्धिनाशानुमितयः तत्रत्याया एवानुमितिव्यक्तेः सिद्धि- नाशोत्पाददशायामापादनीयत्वात् तत्तद्व्यक्तिहेतोः परामर्शस्य प्रागपि सत्त्वात् । न च तथाविधानुमितिव्यक्तिषु तत्तत्सिद्धिनाशक्षणस्य तत्क्षणोत्पन्नज्ञानादेर्वा विशिष्य हेतुत्वकल्पनात् तदभावादेव न तादृशानुमितेरिति वाच्यम् । क्षणादीनां विशिष्य हेतुतायाम् अन्यथासिद्धत्वात् । अन्यथा सर्वत्रैव तत्तत्क्षणसंबन्धानां विशिष्य हेतुतयैव सामञ्जस्ये विशेषतः कारणान्तरस्य क्वापि कल्पनं न स्यात् । अनन्त- तत्तत्क्षणव्यक्तीनां तत्रोत्पन्नज्ञानादीनां वा विशेषतो हेतुत्वकल्पनामपेक्ष्य विशिष्ट- सिद्ध्यभावस्यैकस्यैवानुमितिसामान्यहेतुत्वकल्पनाया एव लाघवेनौचित्यादिति तर्का- लङ्कारग्रन्थोऽप्यत्र वैशद्यार्थिभिः परिशीलनीयः ।

अत्राहुरिति । सिद्धिस्थितिकालीनामनुमितिं प्रति सिषाधयिषायाः हेतुत्व- कल्पने विनापि सिषाधयिषां सिद्धिनाशोत्पत्तिक्षणेऽनुमितिप्रसङ्गः । तादृशानुमितेः सिद्धिस्थितिकालीनत्वाभावेन कार्यतावच्छेदकानाक्रान्ततया तत्र सिषाधयिषाया अनपेक्षणादिपि पूर्वमुक्तम् । या अनुमितिः सिद्धिस्थितिकालीना न भवति तां प्रति सिद्ध्यभावस्य हेतुत्वान्तरकल्पने उक्तदोषो न भवति । सिद्धिनाशोत्पत्ति-

### गादाधरी

एव सत्त्वं न तु सिद्धचसत्त्वस्थल इति न दोष इत्यत आह– न चेति । अन्यत्रापि–सिद्धचसत्त्वस्थलेपि । विशेषसामग्र्यन्तरमिति । सिद्धचभावस्यैतन्मतेऽहेतुत्वादिति भावः । तत्तदनुमितिव्यक्त्युत्पादकतत्तत्परामर्शव्यक्तीनां विशेषसामग्रीत्वेपि अनुमित्युत्पत्तिकालेपि तत्सत्त्वेन तदनन्तरमनुमित्यनुत्पादप्रयोजकविरहः तत्तद्व्यक्तिविरहाणामनन्तानां सामान्यकार्यानुत्पादप्रयोजकत्वे गौरवम् । अन्यथा बहुतरसामान्यकारणताया उच्छेदप्रसङ्गादित्याशयः ।

---

### भावबोधिनी

पूर्वक्षणे सिद्धेः सत्त्वेन सिद्ध्यभावरूपकारणाभावात् तत्क्षणेऽनुमितिवारणसंभवात् । तथा च सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य अनुमितिहेतुत्वं मास्तु । न च सिद्ध्युत्तरानुमितौ सिषाधयिषायाः सिद्ध्यनुत्तरानुमितौ सिद्ध्यभावस्य हेतुत्वकल्पने हेतुताद्वयकल्पनागौरवं स्यादिति वाच्यत् । सिषाधयिषाविरहविशिष्टसिद्धेरनुमितिप्रतिबन्धकत्वेऽपि सिषाधयिषाविरहसिद्ध्योः विशेष्यविशेषणभावे विनिगमनाविरहात् सिषाधयिषाविरहविशिष्टसिद्धेः सिद्धिविशिष्टसिषाधयिषाविरहस्य च प्रतिबन्धकत्वमिति प्रतिबन्धकताद्वयकल्पनेन गौरवात् । न च तव मते कारणताद्वयं मम मते प्रतिबन्धकताद्वयमिति साम्यमिति वाच्यम् । कारणतावच्छेदकसिषाधयिषात्वसिद्ध्यभावत्वापेक्षया प्रतिबन्धकतावच्छेदकयोः सिद्धिविशिष्टसिषाधयिषाविरहत्वसिषाधयिषाविरहविशिष्टसिद्धित्वयोः गुरुत्वेन तदंशे गौरवाधिक्यात् । न च सिषाधयिषायाः हेतुत्वे सिद्ध्युत्तरत्वस्य सिद्धिस्थितिकालीनत्वस्य वा कार्यतावच्छेदककोटौ निवेशनीयतया गौरवम् । यद्वा सिषाधयिषाया लिङ्गभेदेन भिन्नतया तल्लिङ्गकानुमितौ तल्लिङ्गकसिषाधयिषाया हेतुतया यत्र आलोकलिङ्गकानुमितीच्छा धूमालोकोभयलिङ्गपरामर्शाभ्यां पर्वतो वह्निमानित्यनुमितिस्तत्रानुमितेर्धूमलिङ्गकायाः धूमलिङ्गकसिषाधयिषां विनापि जायमानतया व्यतिरेकव्यभिचारवारणाय कार्यतावच्छेदकेऽव्यव-

दीधितिः

मस्ति। तत्कल्पने चातिगौरवम्, इह जायमाना सा सिध्द्यु-त्तरमेव स्यात् सा च न जायते, तत्कारणाभावात् इति चेत् सा मा जनिष्ट अनुमितिसामान्यं तु स्यादेव। कार्यनुत्पादस्य

गादाधरी

अत्राहुः—सिद्ध्यनुत्तरानुमितौ सिद्ध्यभावस्य हेतुत्वान्तरकल्पनयैव तादृशाति-प्रसंगवारणसंभवाद्विशिष्टाभावस्य हेतुत्वमयुक्तम्; सिद्धिसिषाधयिषाविरहयोर्विशेषण-विशेष्यभावे विनिगमनाविरहेण प्रतिबन्धकताद्वयस्य त्वन्मतेऽप्यावश्यकत्वात्, प्रतिबन्ध-कतावच्छेदकगौरवस्याधिक्यात्। न च सिषाधयिषाहेतुतापक्षेऽपि कार्यतावच्छेदक-कोटावव्यवहितोत्तरत्वादिनिवेशाधिक्येन गौरवमित्याशङ्क्यम्; तल्लिंगकेच्छाविरहविशिष्ट-सिद्ध्यभावस्य पूर्वोपदर्शितसमूहालम्बनजन्यानुमितौ व्यभिचारवारणायाऽव्यवहितोत्तरत्व-संबन्धेन तादृशसिद्ध्यवच्छिन्नानुमितिं प्रत्येव हेतुताया भवताऽपि वाच्यत्वादिति।

भावबोधिनी

हितोत्तरत्वं निवेश्यमिति गौरवमिति वाच्यम्। सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यानु-मितिहेतुत्वेऽपि पक्षताया लिङ्गभेदेन भिन्नत्वस्य पूर्वमुक्ततया तल्लिङ्गकानुमितौ तल्लिङ्ग-केच्छाविरहविशिष्टसिद्ध्यभावो हेतुरिति वक्तव्यतया यत्र आलोकलिङ्गकानुमितीच्छा-धीनधूमालोकोभयलिङ्गकपरामर्शजन्यवह्न्यनुमितिः तत्र धूमलिङ्गकेच्छाविरहविशिष्ट-सिद्ध्यभावं विना धूमलिङ्गकानुमितेर्जायमानतया व्यतिरेकव्यभिचारवारणाय धूम-लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावाव्यवहितोत्तरानुमितावेव तादृशसिद्ध्यभावस्य हेतु-ताया वाच्यतया विशिष्टाभावहेतुतामतेऽपि कार्यतावच्छेदककोटावव्यवहितोत्तरत्व-निवेशस्यावश्यकत्वात्। तथा च सिद्ध्युत्तरानुमितौ सिषाधयिषायाः तदनुत्तरानुमितौ सिद्ध्यभावस्य पृथगेव हेतुत्वं युक्तमिति भावः।

दीधितिः

विना कारणाभावमसम्भवात्। करणव्यापारत्वेन आवश्यककारणभावस्य परामर्शस्य कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः। प्रतिबन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात। अन्यथा यथासम्भवं निमित्तकारणस्य समवायिकारण-

---

गादाधरी

सिद्धिस्थले विना सिषाधयिषां सामान्यकार्योत्पत्तावपि तादृशकार्यस्योक्तविशेषसामग्रीकार्यतावच्छेदकाक्रान्तता स्यात्। तथा च विशेषसामग्रीं विना तदुत्पत्तौ तत्र तस्य व्यभिचारात् कारणतैव व्याहन्यत इति न तत्र तदुत्पत्त्यापत्तिरित्याशङ्कते इहेति। कार्योत्पादप्रयोजकसामग्रीसत्त्वे प्रयोजनक्षतिः न कार्योत्पत्तिं विरुणद्धि। तथा च प्रकृते सिषाधयिषाऽघटितायाः सामान्यकार्यप्रयोजकसामग्र्याः सिद्धिकालेपि सत्त्वे विशेषसामग्रीविरहात् तत्कार्यतावच्छेदकावच्छिन्नापत्त्यसम्भवेऽपि सामान्यधर्मावच्छिन्ना-

---

भावबोधिनी

इह जायमानेति दीधितिमवतारयति—सिद्धिस्थल इति। सिद्धौ सत्यां सिषाधयिषां विना परामर्शादिरूपसामान्यसामग्रीबलात् अनुमितिसामान्यं जायताम्, सामान्यकार्योत्पत्तौ विशेषसामग्र्या अनपेक्षणादिति यदुक्तं, तन्न संगच्छते। तत्र जायमानायाः सामान्यधर्मावच्छिन्नाया अपि अनुमितेः वस्तुतः सिद्ध्युत्तरत्वरूपकार्यतावच्छेदकाक्रान्ततया विशेषधर्मावच्छिन्नत्वात् तां प्रति सिषाधयिषारूपविशेषसामग्र्या अपेक्षितत्वात् तां विना कथं सानुमितिर्जायेतेति प्रष्टुराशयः।

कार्योत्पादप्रयोजकसामग्रीसत्त्व इति। अनुमितित्वरूपसामान्यधर्मावच्छिन्नानुमित्युत्पादकपरामर्शादिरूपसामान्यसामग्रीसत्त्वे तादृशकार्योत्पत्तिरावश्यिकी। तां,

## गादाधरी

पत्तिर्दुर्वारैवेत्याह—सा माजनिष्टेति। सा—सिध्द्युत्तरानुमितिः। कार्यानुत्पादस्य—तद्धर्मावच्छिन्नानुत्पादस्य। विना कारणविरहम्— तद्धर्मावच्छिन्नप्रयोजकसामग्रीविरहं विना। अनुमितिं प्रति पक्षतासहितपरामर्शत्वेनैव हेतुता न तु पक्षतापरामर्शयोः पृथक्कारणताद्वयं गौरवात्; न च विशेष्यविशेषणभावे विनिगमनाविरहः; परामर्शस्यानुमित्यहेतुत्वे तस्य व्याप्तिज्ञानरूपकरणव्यापारत्वासम्भवात् व्यापारतायाः फलजनकतागर्भत्वादित्यस्यैव विनिगमकस्य सम्भवादिति केषांचिन्मतं दूषयति—करणेत्यादिना। परामर्शस्येति। षष्ठ्यन्तार्थो वृत्तिः तस्याः कारणतायामन्वयः। निमित्तकारणस्य

---

## भावबोधिनी

विशेषसामग्र्याः विशेषकार्यं प्रति कारणत्वक्षतिः न प्रतिरोद्धुं शक्नोति। अनुमितिसामान्यरूपकार्यानुत्पादः तत्कारणाभावादेव वक्तव्यः। तत्कारणाभावाश्च प्रकृते नास्त्येव, परामर्शादेः सद्भावादिति समाधानग्रन्थतात्पर्यम्। प्रयोजनक्षतिरित्यस्य विशेषसामग्र्याः कारणत्वभङ्ग इत्यर्थः।

करणव्यापारत्वेनेति दीधितिमवतारयति—अनुमितिं प्रतीति। पक्षता अनुमितिकारणतावच्छेदिका न तु अनुमितौ स्वातन्त्र्येण हेतुः। तथा हि पक्षताविशिष्टः परामर्शोऽनुमितौ हेतुः इत्येक एव कार्यकारणभावः, न तु पक्षतायाः परामर्शस्य च पृथक् पृथक् हेतुता। न च पक्षताविशिष्टः परामर्शो हेतुः, अथ वा परामर्शविशिष्टा पक्षता हेतुरित्यत्र विनिगमनाविरहात् द्वयोरेव हेतुत्वमिति वाच्यम्। परामर्शस्य यदि हेतुत्वं न स्यात् अपि तु हेतुतावच्छेदकत्वमेव, तदा परामर्शस्य व्याप्तिज्ञानरूपकरणव्यापारत्वं न स्यात्। तज्जन्यत्वे सति तज्जन्यजनकताया एव व्यापारत्वरूपत्वात्। अतो व्यापारत्वोपपत्त्यर्थं परामर्शस्य कारणत्वमिति विनिगमकमस्ति। न ह्येवं पक्षतायाः कारणत्वे विनिगमकमस्ति।

## गादाधरी

दण्डादेः। समवायिकारणञ्चेति। कपालादिनिष्ठघटत्वाद्यवच्छिन्नकारणतेत्यर्थः। समवायनियमाय तत्कारणताया आवश्यकत्वादिति भावः। जन्यसत्त्वाद्यवच्छिन्ननिरूपितायां समवायिकारणतायां दण्डादेर्व्यभिचारेण प्रवेशासम्भवात् यथासम्भवमित्युक्तम्। कारणत्वतदवच्छेदकत्वयोरुक्तविनिगमकेन नियतत्वेऽपि सिद्ध्यभावसाहित्यपरामर्शयोरेकविशिष्टस्यैव एकविशेष्यतावच्छेदकतापन्नस्यैव वाऽपरस्यावच्छेदकत्वं वाच्यम्; तत्र

---

## भावबोधिनी

तस्मात् परामर्शनिष्ठायामनुमितिकारणतायां पक्षता अवच्छेदिका, न तु हेतुरिति प्रगल्भानां मतम्। तद्दूषयति दीधितिकृदिति भावः। फलजनकतेति। फलपदेन प्रकृतेऽनुमितिरूपफलं ग्राह्यम्।

तन्मतदूषणपरस्य दीधितिग्रन्थस्यायमाशयः-यथा अनुमितिं प्रति बाधनिश्चयरूपप्रतिबन्धकाभावस्य स्वतन्त्रान्वयव्यतिरेकशालित्वेन पृथगेव कारणत्वं, न तु परामर्शस्य कारणत्वं स्वीकृत्य परामर्शनिष्ठकारणतावच्छेदकत्वम्, तथा सिषाधयिषाविरहविशिष्टसिद्धिरूपप्रतिबन्धकाभावस्यापि अनुमितिं प्रति पृथगेव हेतुत्वम्, अन्वयव्यतिरेकशालित्वात् न तु कारणतावच्छेदकत्वम्। अन्यथा पृथगन्वयव्यतिरेकशालिनां निमित्तकारणानां समवायिकारणनिष्ठकारणतावच्छेदकत्वमेव स्यात् न तु कारणत्वम्। तथा च दण्डचक्रादिविशिष्टस्य कपालस्य घटकारणत्वं स्वीकृत्य दण्डचक्रादेः कारणत्वमपलपनीयं स्यात् इति।

ननु दीधितौ निमित्तकारणस्य समवायिकारणतावच्छेदकत्वमेव कुत आपादितम्, समवायिकारणस्य निमित्तकारणतावच्छेदकत्वं कुतो नापादितमित्यत्राह-समवायनियमायेति। घटस्य कपाल एव समवायः नान्यत्रेति नियमनिर्वाहाय कपालस्य

गादाधरी

विनिगमनाविरहो दुर्वार एवेति तत्त्वम् । ननु सिद्ध्यभावस्यानुमितिहेतुत्वेऽनुमित्सां विना कदाप्यनुमितिर्नोत्पद्येत; मणिसमवधानोत्पत्तिकाले दाहानुत्पत्त्या प्रतिबन्धकाभावस्य कार्यकालसत्ताया. फलोपधानप्रयोजकत्वादनुमितिकाले च सिद्ध्यभावासत्त्वादित्यगत्या तस्य कारणतावच्छेदकत्वमेव; न तु कारणत्वमिति शंकते—अथेति । कार्योत्पत्तिक्षणावच्छेदेनापि कार्याधिकरणे नियतसत्त्वं यत्कारणताघटकं तत्कारणताश्रयस्यैव कार्योत्पत्तिक्षणे सत्त्वं कार्योत्पत्तिप्रयोजकम्; यथा मण्यभावादेः, सिद्ध्य-

---

भावबोधिनी

कारणत्वमावश्यकमिति भावः । यथासंभवमित्यस्य प्रयोजनमाह-जन्यसत्त्वाद्यवच्छिन्नेति । समवायसंबन्धेन जन्यसत्त्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन द्रव्यत्वावच्छिन्नस्य कारणत्वात् द्रव्यनिष्ठायां जन्यसत्त्वावच्छिन्ननिरूपितसमवायिकारणतायां दण्डादिरूपनिमित्तकारणस्य अवच्छेदकतया निवेशासंभवात्, यादृश्यां समवायिकारणतायां निमित्तकारणस्यावच्छेदकतया निवेशः संभवति तत्र कारणत्वं न स्यादिति प्रसञ्जनीयमित्याशयेन यथासंभवमित्युक्तमिति भावः । व्यभिचारेणेति । दण्डादिकं विनापि द्रव्यत्वावच्छिन्नस्य जन्यसत्त्वावच्छिन्नं प्रति समवायिकारणत्वादिति भावः । यदभावविशिष्टस्य कारणत्वं न संभवति तस्यैव कारणतावच्छेदकत्वमिति भावः । प्रतिवन्देरनुत्तरत्वादाह—कारणत्वतदवच्छेदकत्वयोरिति । परामर्शस्य व्यापारत्वोपपत्तये कारणत्वमावश्यकम्, पक्षतायास्तु तदवच्छेदकत्वमिति भवतु नाम । सिद्ध्यभावरूपपक्षताया इव परामर्शत्वस्यापि कारणतावच्छेदकत्वात् किं सिद्ध्यभावविशिष्टपरामर्शत्वस्य कारणतावच्छेदकत्वं किं वा परामर्शत्वविशिष्टस्य सिद्ध्यभावस्य कारणतावच्छेदकत्वमित्यत्र विनिगमनाविरहः । एवमेकधर्मावच्छिन्ने विशेषणतापन्नस्यापरस्य कारणतावच्छेदकत्वमिति स्वीकारेऽपि किं परामर्शत्वविशिष्टविशेषणतापन्नस्य सिद्ध्यभावस्य कारणतावच्छेदकत्वम्, किं वा सिद्ध्यभावविशिष्टे विशेषणता-

दीधितिः

त्वाद्यवच्छेदकत्वप्रसङ्गात् । अथानुमितिसाधारणसिद्धेः प्रतिबन्धकत्वे तदभावस्य मण्याद्यभाववत् प्रतिबन्धकाभावत्वेन कार्यकालवृत्तेरेव हेतुत्वात् अनुमितिकाले तदसम्भवात्सा नोत्पद्येतेति चेन्न;

---

गादाधरी

भावस्य प्रतिबन्धकाभावरूपत्वेपि नियतप्राक्सत्त्वमेव कारणताघटकं न तूक्तमपीति तस्य प्राक्सत्त्वमात्रं फलोत्पत्तौ तन्त्रमिति नानुपपत्तिरिति समाधत्ते-यस्येति । अन्यथेति । सहचारदर्शनमात्रेणैव प्रतिबन्धकाभावे कार्यसहभावेन हेतुतानियमसिद्धावित्यर्थः । प्राभाकरा इति । सहभावनिरूपकस्यैव कारणतावादिन इत्यादिः । यत्तु अनुमितौ प्रत्यक्षादिसामग्र्याः प्रतिबन्धकतान्तरकल्पने गौरवात्तत्सामग्रीदशायां अनुमित्यापत्तिवारणायानुमित्यन्यसिद्ध्यभावस्य कार्यकालवृत्तितया हेतुत्वमेव युक्तम्; अनुमित्यभावस्य च प्राक्सत्त्वमात्रेण हेतुत्वान्तरं कल्प्यतामिति, तदसत्; सिषाधयिषानन्तरजातसिद्धि-

---

भावबोधिनी

पन्नस्य परामर्शत्वस्य कारणतावच्छेदकत्वमित्यत्र विनिगमकाभाव इत्यर्थः । सर्वत्र एकविशेष्यतावच्छेदकतापन्नस्येति पाठो दृश्यते । एकविशेष्यतावच्छेदकावच्छिन्ने विशेषणतापन्नस्येति पाठः साधुरित्यस्मद्गुरुचरणाः । यथाश्रुतपाठेऽपि एकं प्रति विशेष्यतावच्छेदकतापन्नस्येत्यर्थः । परामर्शत्वं प्रति विशेष्यतावच्छेदकतापन्नस्य सिद्ध्यभावस्य कारणतावच्छेदकत्वं वा सिद्ध्यभावं प्रति विशेष्यतावच्छेदकतापन्नस्य परामर्शत्वस्य कारणतावच्छेदकत्वं वेत्यत्र विनिगमनाविरहः । तथा च पक्षतायाः न कारणतावच्छेदकत्वम्, अपि तु कारणत्वमेवेति सिद्धम् ।

अथेत्यादिदीधितिमवतारयति-ननु सिद्ध्यभावस्येति । यस्मिन् क्षणे कार्यं

दीधितिः

यस्य मण्यभावादेः कार्यसमकालतयान्वयव्यतिरेकित्वं तस्यैव तथात्वेन हेतुत्वं न तु सर्वस्य, गौरवात्। अन्यथा समवायिकारणस्य कार्यसहवृत्तित्वेन हेतुत्वात्कारणमात्रस्य तथात्वप्रसक्तौ

---

भावबोधिनी

जायते तत्क्षणवृत्तित्वं प्रतिबन्धकाभावस्य अपेक्षितम्। अन्यथा तस्य पूर्वकालवृत्तित्वमात्रेण कार्योत्पत्त्यङ्गीकारे मणिसमवधानोत्पत्तिकाले दाहरूपं कार्यं जायेत। दाहोत्पत्तेः पूर्वक्षणे मणिसमवधानरूपप्रतिबन्धकाभावस्य सत्त्वात्। एवं च सिषाधयिषां विना सिद्ध्यन्तरशून्यकाले अनुमितिरेव नोत्पद्येत। अनुमित्युत्पत्तिकाले अनुमित्यात्मकसिद्धेः सत्त्वेन सिद्ध्यभावस्य कार्यकाले विरहादिति शङ्कितुराशयः। सिद्ध्यभावः कार्यकालवृत्तिः सन् हेतुः प्रतिबन्धकाभावत्वात् मण्यभाववत् इत्यनुमानमत्र विवक्षितम्।

समाधानं तु यस्य प्रतिबन्धकाभावस्य कार्यसमानकालिकतया अन्वयव्यतिरेकौ स्तः तस्यैव तथा हेतुत्वम्। यथा मण्याद्यभावादेः, यस्य तु कार्यप्राक्क्षणवृत्तितया अन्वयव्यतिरेकवत्त्वं तस्य न कार्यकालवृत्तितया हेतुत्वम्। तथा च अनुमितिप्राक्क्षणे सिद्ध्यभावसत्त्वेऽनन्तरक्षणेऽनुमितिरित्येवान्वयव्यतिरेकौ भवतः इति अनुमितिं प्रति तत्प्राक्क्षणवृत्तिः सिद्ध्यभाव एव हेतुरिति नानुपपत्तिः। एवं च पूर्वानुमाने कार्यसमकालिकतया अन्वयव्यतिरेकवत्त्वमुपाधिरिति।

यदि तु क्वचित् प्रतिबन्धकाभावस्य कार्यसमकालिकतया हेतुत्वमस्तीति कृत्वा सर्वत्रैव तथात्वमित्युच्यते, तदा समवायिकारणस्य कपालादेः घटादौ कार्यसमानकालिकतया हेतुत्वमस्तीति निमित्तकारणस्यापि तथात्वं प्रसज्यते। तथा कारणस्य कार्यसमानकालिकत्ववादिनां प्राभाकराणां विजयः स्यादिति भावः।

गादाधरी

द्वितीयक्षणेऽनुमित्यनुत्पादप्रसङ्गात्, कार्यकालेऽनुमित्सानाशेन तदभावविशिष्टसिद्धिसत्त्वात् प्रत्यक्षादिसिद्धिसत्त्वेऽसत्यां च तत्सामग्र्यां वह्निज्ञानान्तरं जायतामितीच्छाबलादनुमित्युत्पत्त्याऽनुमित्यन्यसिद्धौ तादृशेच्छाया उत्तेजकत्वात्तादृशेच्छाबलात् प्रत्यक्षादिसामग्र्यनन्तरं प्रत्यक्षाद्युत्पादसमयेऽप्यनुमित्यापत्तिः, सिद्धावप्रामाण्यग्रहसत्त्वे प्रत्यक्षाद्युत्पादसमयेऽनुमित्यापत्तिश्चेति ।

---

भावबोधिनी

तन्मते कार्यकालवृत्तेरेव कारणत्वस्वीकारात् ।

सिद्ध्यभावासत्त्वादिति । अनुमितिरूपसिद्धेरेव सत्त्वादिति भावः । कारणतावच्छेदकत्वमिति । पक्षताविशिष्टस्य परामर्शस्य कारणत्वमिति भावः । कार्यसहभावेनेति । कार्यसमानकालिकतयेत्यर्थः । सहभावनिरूपकस्येति । कार्यसमानकालिकस्येत्यर्थः ।

कार्योत्पत्तिक्षणावच्छेदेनापि इति । स्वाधिकरणस्वाव्यवहितप्राक्क्षणान्यतरावच्छिन्नत्वस्वाधिकरणनिरूपितत्वोभयसंबन्धेन कार्यविशिष्टा या वृत्तिः तद्वदभावाप्रतियोगित्वरूपकार्यव्यापकत्वमित्यर्थः । मण्यात्मकाभावस्य दाहाधिकरणक्षणतत्प्राक्क्षणान्यतरावच्छिन्नदाहवद्वृत्तित्वाभावान्न दोषः इति कृष्णम्भट्टः ।

यत्त्वित्यादि । सिद्ध्यभावस्य कार्यकालवृत्तितया हेतुत्वं न संभवति । अनुमित्युत्पत्तिकालेऽनुमित्यात्मकसिद्धेरेव सत्त्वेन तदभावसत्त्वासंभवादिति दोषपरिहाराय यत्तुकारा एवं वदन्ति । अनुमित्यन्यसिद्ध्यभावः कार्यकालवृत्तितया अनुमितिहेतुः । तेन प्रत्यक्षात्मकसिद्धिकाले अनुमित्यापत्तिः । अनुमित्यात्मकसिद्ध्यभावस्तु अनुमितिप्राक्क्षणवृत्तितया पृथग्घेतुः । अतोऽनुमित्यनन्तरं नानुमितिः । न च प्रत्यक्ष-

## गादाधरी

पक्षताया हेतुतामनङ्गीकुर्वतां गुरूणां मतमाह—प्राभाकरास्त्विति। अनुमित्सायोग्यताया उत्तेजकत्वे द्वित्वत्रित्वादिप्रकारकेच्छाबलात् अनुमितिद्वितीयक्षणोत्पन्नपरामर्शतृतीयक्षणेऽनुमित्यन्तरोत्पादस्य पक्षताहेतुतामतेऽप्युपपत्तेः - विनानुमित्सामिति। क्वचित्—प्रतिबन्धकान्तरासत्त्वस्थले। परामर्शानुमितिप्रवाहस्य—क्रमोत्पन्नपरामर्शानुमितिसमूहस्य। अपलापस्य निराकरणाय समूहपर्यन्तानुसरणम्। पूर्वपूर्वानुमितिनाशे द्वितीयादिपरामर्शादनुमित्यन्तरोत्पत्तौ बाधकाभावादाह—अविरलस्येति। ननु तत्रागत्या

---

## भावबोधिनी

सामग्र्या अनुमितिप्रतिबन्धकतयैव प्रत्यक्षोत्पत्तिकालेऽनुमितिवारणसंभवात् अनुमित्यन्यसिद्ध्यभावस्य कार्यकालवृत्तितया हेतुत्वं मास्त्विति वाच्यम्। प्रत्यक्षसामग्र्याः पृथक्प्रतिबन्धकत्वकल्पने गौरवात्। अनुमित्यन्यसिद्ध्यपेक्षया बहुकारणघटितप्रत्यक्षसामग्र्याः गुरुत्वादिति।

तदसदित्यादिखण्डनग्रन्थस्यायमाशयः—प्रत्यक्षादिसिद्ध्यभावस्य कार्यकालवृत्तितया हेतुत्वे दोषत्रयं प्रसज्यते। तथा हि—यत्र आदौ सिषाधयिषा ततः प्रत्यक्षात्मकसिद्धिः ततोऽनुमितिर्भवति तत्रानुमित्युत्पत्तिकाले सिषाधयिषाविरहविशिष्टप्रत्यक्षात्मकसिद्धेरेव सत्त्वेन तदभावविरहात् तदभावस्यानुमितिकालवृत्तितया हेतुत्वं न संभवति। तथा च तत्रानुमितिर्न स्यात् इत्येको दोषः। ज्ञानेच्छयोर्युगपदुत्पादमते यत्र प्रत्यक्षसामग्र्यनन्तरं प्रत्यक्षं वह्निज्ञानान्तरं जायतामितीच्छा च ततः पर्वतो वह्निमानित्यनुमितिः तत्रानुमित्युत्पत्तिकाले प्रत्यक्षात्मकसिद्ध्यभावस्यासत्त्वात् अनुमितिर्न स्यादिति वह्निज्ञानान्तरं जायतामितीच्छाविरहविशिष्टा या अनुमित्यन्यसिद्धिः तदभावस्य कार्यकालवृत्तितया हेतुत्वं वाच्यम्। तथा च प्रत्यक्षोत्पत्तिकालेऽप्यनुमित्यापत्तिः। तत्काले तादृशेच्छाविरहविशिष्टसिद्ध्यभावस्य सत्त्वात् इति

दीधितिः

प्राभाकरा एव विजयेरन्निति। प्राभाकरास्तु विनाप्यनुमित्सां क्वचित्परामर्शानुमितिप्रवाहस्य अविरलस्यानुभाविकत्वात् कालभेदकल्पनायां मानाभावाच्च पक्षता नानुमितिहेतुः, परार्थानुमितिं प्रति तु

---

गादाधरी

एकैकक्षणविलम्बेनैवानुमितयः स्वीकार्या इत्यत आह–कालभेदेति। मानाभावात्–युक्त्यभावात्। पक्षताहेतुत्वस्यापि सिद्ध्या गत्यन्तरविरहस्यैवासिद्धेरिति भावः। नन्वेवं सिद्धसाधनस्यादूषणतया परार्थस्थले तदुद्भावनानुपपत्तिरित्यत आह–परार्थेति। अर्थान्तरेति। सिद्धेऽर्थे आकाङ्क्षाविरहादिति भावः। न च पक्षताया अनुमित्यहेतुत्वेऽनुमित्यनन्तरं जाता व्यक्तिरेव कथं नोत्पद्यते? तद्वारणाय तत्तद्व्यक्तौ

---

भावबोधिनी

द्वितीयो दोषः। यत्र भाविसिद्धिरप्रमेत्यप्रामाण्यग्रहः ततः प्रत्यक्षात्मकसिद्धिः ततोऽनुमितिस्तत्र अप्रामाण्यज्ञानाभावविशिष्टसिद्ध्यभावस्यैव हेतुताया वक्तव्यतया प्रत्यक्षोत्पत्तिकालेऽपि तादृशविशिष्टाभावसत्त्वादनुमित्यापत्तिरिति तृतीयो दोषः इति।

प्रत्यक्षसामग्रीकाले तस्याः कार्यकालवृत्तितया प्रतिबन्धकत्वान्नानुमित्यापत्तिरिति ब्रूयादिति असत्त्यां च तत्सामग्र्यामित्युक्तम्।

दीधितौ–प्रामाकारास्त्वित्यादि। यत्र अन्यत् प्रतिबन्धकं नास्ति तत्र अनुमित्सां विनापि आदौ परामर्शस्ततोऽनुमितिः ततः परामर्शस्ततोऽनुमितिरिति अविरलक्रमेण परामर्शानुमितिपरंपरा तत्र सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षता नास्ति। अनुमित्यात्मकसिद्धेरेव सत्त्वात्। तथा च पक्षतां विनापि अनुमित्युत्पत्त्या व्यति-

## गादाधरी

तत्तत्प्रागभावव्यक्तीनां विशिष्यानन्तहेतुत्वकल्पने गौरवमिति वाच्यम्; तत्तदनुमिति-व्यक्तीनां पूर्वं तन्नाशात् परतो वा कदाचित समानविषयकानुमित्यन्तरोत्पादसमये तत्तद्व्यक्त्यापत्तिवारणाय तत्तत्परामर्शव्यक्तीनां विशिष्य हेतुताया आवश्यकत्वात् तत एव तद्व्यक्तीनां पुनरुत्पादवारणसम्भवात् ।

---

## भावबोधिनी

रेकव्यभिचारात् नानुमितिहेतुत्वं पक्षतायाः । न च तत्र परामर्शतृतीयक्षणे एवानु-मितिः, तथा च पक्षतायाः सत्त्वमिति वाच्यम् । तत्र प्रमाणाभावात् । न च पक्षतायाः अनुमित्यहेतुत्वे सिद्धिकालेऽप्यनुमितेरिष्टया सिद्धसाधनस्य दूषणत्वाभावात् परार्थानुमाने तदुद्भावनं न स्यादिति वाच्यम् । सिद्धेऽर्थे आकाङ्क्षाविरहात् अनाकाङ्क्षितार्थकथनरूपमर्थान्तरं सिद्धसाधनस्थले दूषणमिति प्राभाकरमतसारः ।

अनुमितिद्वितीयक्षणोत्पन्नपरामर्शतृतीयक्षणेऽनुमितिस्थले तत्पूर्वक्षणेऽनुमित्सा-विरहात् अनुमित्साया उत्तेजकत्वासंभवात् अनुमित्सायोग्यताया उत्तेजकत्व इत्युक्तं गादाधर्याम् । **द्वित्वत्रित्वप्रकारकेच्छा ।** अनुमितिद्वयं जायताम्, अनुमितित्रयं जायतामित्याद्याकारकेच्छा । **उपपत्तेरिति ।** अनुमित्सायोग्यताविरहविशिष्टसिद्ध्य-भावरूपपक्षतायाः सत्त्वादिति भावः । अनुमितिरूपप्रतिबन्धकसत्त्वात् **प्रतिबन्धका-न्तरासत्त्व इत्युक्तम् । अगत्येति ।** तथा च सिषाधयिषाविरहे क्रमिकपरामर्शानु-मितिपरामर्शानन्तरं क्षणविलम्बनेनैवानुमितिस्वीकारान्न दोष इति भावः । ननु पक्षताया हेतुत्वं तादृशस्थले क्षणविलम्बेनानुमितिस्वीकार एव निर्वहति । तथा च तथानुमितिस्वीकारातिरिक्तगत्यभाव एव युक्तिरित्यत्राह–**पक्षताहेतुत्वस्यासिद्ध्येति ।** यदि पक्षताया हेतुत्वं सिद्धं तदा तन्निर्वाहाय उक्तस्थले क्षणविलम्बेनानुमितिस्वीकारं विना गत्यन्तराभावः सिद्ध्येत् । पक्षताहेतुत्वमेव त्वसिद्धम् । अतो गत्यन्तर-

दीधितिः

सिद्धसाधनमर्थान्तरविधया दूषणमित्याहुः ।

इति महामहोपाध्यायश्रीरघुनाथशिरोमणिभट्टाचार्यविरचितायाम् अनुमानमणिदीधितौ पक्षता ।

---

गादाधरी

न च परामर्शानां तत्तद्व्यक्तित्वेन तत्तदनुमितिव्यक्तिहेतुत्वेऽपि विनश्यदवस्थात्तदव्यवहितपूर्वोत्पन्नपरामर्शात्पुनस्तदनुमितिप्रसङ्ग इति वाच्यम् । एतन्मते कार्यासहवर्तिनः फलाजनकत्वात् अनुमितित्वावच्छिन्नाभावहेतुतयापि तादृशापत्तिवारणसंभवात् तदनुरोधेन गुरूणां प्रत्यक्षादिसाधारणनिश्चयत्वेन प्रतिबन्धकत्वासिद्धेः । अत्र केचित् पक्षताया अनुमित्यहेतुत्वमते विनापि वह्न्यादिसिसाधयिषां वह्न्याद्यनुमितोच्छां तादृशानु-

---

भावबोधिनी

विरहोऽप्यसिद्ध इति भावः ।

न च पक्षताया इति । पक्षता यदि नानुमितिहेतुः अनुमितेरुत्पत्त्यनन्तरं उत्पन्नाया अनुमितिव्यक्तेरुत्पत्त्यापत्तिः । पक्षताया हेतुत्वे तु अनुमित्यात्मकसिद्धिसत्त्वात् सिद्ध्यभावरूपपक्षताविरहान्नापत्तिः । यदि तु तत्तदनुमितिव्यक्तौ तत्तदनुमितिव्यक्तिप्रागभावस्य हेतुत्वं स्वीकृत्य अनुमितेरुत्पत्त्यनन्तरं तत्प्रागभावविरहादेव न पुनस्तस्या उत्पत्तिरित्युच्यते तदा तत्तत्प्रागभावव्यक्तीनां विशिष्य तत्तदनुमितिव्यक्तिषु कारणत्वकल्पने अनन्तकार्यकारणभावात् गौरवमिति भावः ।

तत्तदनुमितीति । यादृशानुमितिव्यक्तेः पूर्वं तन्नाशात् पश्चाद्वा तत्समानविषयकानुमित्यन्तरं परामर्शान्तराज्जायते, तदा तादृशानुमितिव्यक्तेरुत्पत्त्यापत्तिवारणाय तत्तदनुमितिव्यक्तौ तत्तत्परामर्शव्यक्तेः कारणत्वस्य पक्षताहेतुत्ववादिनापि कल्पनीय-

गादाधरी

मित्युत्पत्त्या तादृशानुमितौ तादृशानुमितीच्छाविरहविशिष्टप्रत्यक्षादिसामग्र्यभावस्य कारणताधिक्याद्गौरवम्, पक्षताहेतुतामते तादृशानुमितेरिच्छानियततया तत्रेच्छाया लघीयस्या हेतुतयैवोपपत्तेः पक्षतापि तत्रेच्छैवेत्याहुः ।

इति श्रीमहामहोपाध्यायगदाधरभट्टाचार्यचक्रवर्तिविरचिता
पक्षतादीधितिप्रकाशिका ।

---

भावबोधिनी

तथा तत एव तद्व्यक्तेः पुनरुत्पत्तिवारणसंभवात् प्रागभावव्यक्तीनां कारणत्वाकल्पनात् । न च तदनुमितिव्यक्तौ तत्परामर्शव्यक्तेः कारणत्वेऽपि यादृशपरामर्शव्यक्त्या यादृशानुमितिव्यक्तिर्जायते सैवानन्तरक्षणे पुनर्जायताम, तत्परामर्शव्यक्तेः द्वितीयक्षणे सद्भावात्, अतः तत्प्रागभावस्यापि हेतुत्वमावश्यकमिति वाच्यम् । प्राभाकरमते कार्यकालवर्तिन एव कारणत्वात् परामर्शतृतीयक्षणे परामर्शस्य नाशात परामर्शद्वितीयक्षणोत्पन्नानुमितिव्यक्तेरुत्पत्त्यसंभवात् । किं च गुरूणां मते अनुमितित्वावच्छिन्नाभावः अनुमितिं प्रति कार्यकालवृत्तितया हेतु; अतो जाताया अनुमितिव्यक्तेः न पुनरुत्पत्तिः । तथा च तदर्थं प्रत्यक्षसाधारणसिद्धित्वावच्छिन्नाभावरूपपक्षताया हेतुत्वमनावश्यकम् । प्रत्यक्षात्मकसिद्ध्यनन्तरं सत्यां सामग्र्यामनुमितेरेतन्मते इष्टत्वात् इति भावः ।

**अत्र केचिदिति ।** पक्षताया अनुमित्यहेतुत्ववादिनां प्राभाकराणां मते सिद्ध्यनन्तरमपि अनुमित्सां विनापि अनुमितिरिष्यते । तथा च यत्र वह्नेरेव साध्यत्वं हेतुत्वं च तत्र पर्वतो वह्निव्याप्यवह्निमानिति परामर्शानन्तरं पर्वतो वह्निमानिति अनुमितिः भवति । परं तु तत्र प्रत्यक्षसामग्रीसत्त्वे पर्वतो वह्निमानिति प्रत्यक्षमेव जायते इति अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभावस्यानुमितिहेतुत्व-

भावबोधिनी

मधिकतया कल्पनीयमिति गौरवम् । पक्षताया अनुमितिहेतुत्ववादिनां नैयायिकानां मते तु सिद्धिकालीनानुमितेरिच्छाधीनतया तत्र तादृशेच्छैव लघ्वी पक्षताविधया हेतुः इति भावः।

अत्रेदमरुचिबीजम्–गुरुमतेऽपि वह्न्यादिलिङ्गकवह्न्याद्यनुमितावेव लाघवेन सिषाधयिषाया हेतुत्वं कल्प्यते । न च तन्मते सिषाधयिषाशून्यकालेऽपि तादृशानुमित्युत्पादे बाधकाभावः, सिद्धेरविरोधित्वादिति वाच्यम्। हेतुभूतसिषाधयिषाविरहस्यैव बाधकत्वात्। एवमपि सिद्धिप्रतिबन्धकत्वकल्पनापेक्षया तथाविधप्रत्यक्षसामग्र्यभावानुमितिसामग्र्यभावयोरकारणत्वाच्च लाघवात्। परं तु नेयं पक्षता, विषयामिश्रितानुमित्साकाले पक्षव्यवहारानुपपत्तेरिति कृष्णम्भट्टः ।

तर्कशास्त्रोपदेष्टॄणां गुरूणां कृपया मया।
नावागाधो दुस्तरोऽपि तीर्णोऽयं पक्षतार्णवः ॥

इति श्रीकृष्णताताचार्यतनयेन श्रीदेवनाथताताचार्यलब्धशास्त्रविज्ञानेन रामानुजताताचार्येण कृता भावबोधिन्याख्या पक्षताव्याख्या संपूर्णा ।

॥ शुभमस्तु ॥



# शोधनिका

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 2 | 16 | तत्कारणतात्व- | तत्कारणताव- |
| 5 | 18 | सन्देहविशेष्यत्व | सन्देहविशेष्यत्वं |
| 6 | 7 | निवेश | निवेशे |
| 7 | 13 | तन्निरूपकत्व | तन्निरूपकत्वं |
| ,, | 18 | तमःप्रभ्र्‌तिषु | तमःप्रभृतिषु |
| 8 | 5 | साध्यानुमितो | साध्यानुमितौ |
| ,, | 10 | मितित्वावच्छिन्न | मितित्वावच्छिन्नं |
| 13 | 6 | व्यापकप्रति- | व्यापकप्रति |
| 14 | 14 | किचिन्निष्ठ- | किंचिन्निष्ठ |
| 15 | 2 | महानसीयमह्नि- | महानसीयवह्नि |
| 15 | 7 | यत्वावच्छिन्नप्रतिबध्यता | यत्वावच्छिन्नप्रतिबन्धकता-<br>निरूपितप्रतिबध्यता |
| 15 | 14 | सयोग | संयोग |
| 16 | 13 | श्चयेऽपि | निश्चयेऽपि |
| 17 | 16 | वह्यभाव | वह्न्यभाव |
| 17 | 24 | बन्धकवादिति | बन्धकत्वादिति |
| 18 | 23 | वाच्यत्व | वाच्यत्वं |
| 19 | 8 | वर्तमानभेदेत्यारभ्य २१ पृष्ठे 'पक्षतावच्छेदकावच्छेदेन' इत्यन्तं पुनरुक्तत्वात् निष्कासनीयम् । | |
| 20 | 23 | प्रतियोगित्वोपादनम् | प्रतियोगित्वोपादानम् |
| 25 | 3 | द्धित्वाद्यव- | बुद्धित्वाद्यव |
| 27 | 19 | वच्छिन्नत्वेन | वच्छिन्नत्वेन |
| 28 | 1 | तत्त्वचिन्ताम | तत्त्वचिन्तामणौ |
| 28 | 16 | वह्निमानिनि | वह्निमानिति |
| 28 | 19 | वटकत्वं | घटकत्वं |
| 29 | 4 | निरूपितसंशयत्व- | निरुक्तसंशयत्व |
| 29 | 6–7 | "निश्चयनिष्ठा····वह्निमान्न वेति संशये" इत्येतत् पुनरुक्तत्वात् निष्कासनीयम् | |
| 29 | 15 | निवर्त्यवं | निवर्त्यत्वं |
| 31 | 6 | वह्न्यभावाभावत्पर्वत- | वह्न्यभावाभाववत्पर्वत- |
| 32 | 5 | वा पर्व | वा पर्वतो |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 32 | 7 | पक्षतात्वामिति | पक्षताऽवमिति |
| 32 | 21 | घच्छेदकत्व | वच्छेदकत्वं |
| 36 | 4 | भाववानि | भाववानिति |
| ,, | 13 | प्रतिबन्धकज्ञा | प्रतिबन्धकज्ञाने |
| 37 | 2 | धारकत्वं | धारताकत्वं |
| ,, | 3 | निष्टकोटि- | निष्ठकोटि- |
| ,, | 4 | वषयता | विषयता |
| ,, | 9 | धर्षः | धर्मः |
| ,, | 15 | विरीध | विरोध |
| 38 | 2 | फीभूता | कीभूता या |
| ,, | 5 | चान्तत | चान्ततः |
| ,, | 17 | अन्याः | अन्या |
| ,, | 18 | अभय | उभय |
| ,, | ,, | विशेष्यताय | विशेष्यतायाः |
| 38 | 2 | सम्भवान् | सम्भवात् |
| ,, | 3 | ङ्ग इति | प्रसङ्ग इति |
| ,, | 20 | अनुमितेमृत्पत्त्या | अनुमितेरुत्पत्त्या |
| 40 | 8 | वीध्यः | बोध्यः |
| 41 | 2 | योग्यत | योग्यतां |
| ,, | 15 | वृत्तिनवेति | वृत्तिर्नवेति |
| 44 | 9 | व्याच | व्याचष्टे |
| 45 | 15 | स्वसामगी | स्वसामग्री |
| 45 | ,, | ज्ञान | ज्ञानं |
| 46 | 10 | अनुमिनोमित्यनु | अनुमिनोमीत्यनु- |
| 47 | 3 | मित्यनु | मीत्यनु |
| 49 | 15 | साध्यभाव | साध्याभाव |
| 57 | 8 | साधनत्रा | साधनता |
| 59 | 12 | सिषाधयिषः | सिषाधयिषा |
| 62 | 11 | "मेघानुमितौ" इत्येतद् अनन्तरपङ्क्तौ "नत्रेति" इत्यनन्तरं पठनीयम् | |
| 62 | 12 | तदेहदाह | तदेतदाह |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 62 | 19 | "संबन्धेन" इत्यनन्तरं "पर्वतो" इत्यतः प्राक् "पर्वते इच्छा वर्तते । तत्र विषयतासंबन्धेन" इत्यधिकं पठनीयम् । | |
| 65 | 18 | तक्षतात्व- | पक्षतात्व- |
| 68 | 14 | गाधादर्यां | गादाधर्यां |
| 69 | 14 | सिषधयिषा | सिषाधयिषा |
| " | 20 | विशेणष- | विशेषण- |
| " | 23 | सधक- | साधक |
| 71 | 5 | स्वनन्तरो | स्वानन्तरो |
| 72 | 8 | स्वव्यवहित | स्वाव्यवहित- |
| 76 | 14 | फलच्छा | फलेच्छा |
| " | 18 | वारणाय | वारणात् |
| 78 | 1 | पतार्थ- | पदार्थ- |
| " | 19 | त्वकारकत्वेऽपि | त्वप्रकारकत्वेऽपि |
| 80 | 21 | सिद्धयात्कक- | सिद्धयात्मक- |
| 81 | 9 | यया | यथा |
| " | 17 | अलोकवान् | आलोकवान् |
| 85 | 9 | "पर्वतत्वावच्छिन्नोद्देश्यताकानुमितिर्जायतामितीच्छायाः" इत्येतन्निष्कासनीयम् | |
| " | 14 | तादृशायां | तद्दशायां |
| 88 | 3 | विनेश्यैव | निवेश्यैव |
| " | 19 | प्रकारिकायामपीमि | प्रकारिकायामपीति |
| 90 | 2 | शक्यमव तादृश- | शक्यमेव तादृशे- |
| 91 | 11 | तरपक्ष- | तत्पक्ष- |
| 96 | 12 | मायस | मानस- |
| 98 | 22 | वियानामिति | विधानामिति |
| 100 | 20 | सत्पात् | सत्वात् |
| 103 | 12 | विाहरदिति | विरहादिति |
| " | 21 | व्याप्वधूम- | व्याप्यधूम- |
| 109 | 2 | तादृशच्छा | तादृशेच्छा |
| 113 | 20 | नित्रेशनीयमिति | निवेशनीयमिति |
| 114 | " | त्यात् | स्यात् |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 114 | 21 | कत्नेन | कत्वेन |
| 115 | 2 | माच्यम् | वाच्यम् |
| 116 | 15 | तत्तदश्यक्तित्वेन | तत्तद्व्यक्तित्वेन |
| 117 | 17 | सामग्रा | सामग्री |
| 118 | 13 | गतरूप | गतरूपं |
| 119 | 4 | तथाः | तथा |
| ,, | 17 | अस्तुत | वस्तुतो |
| 120 | 13 | इत्यादि | इत्यादिः |
| 121 | 9 | तत्साध्व- | तत्साध्य- |
| 123 | 13 | आलोकावृत्तितया | आलोकवृत्तितया |
| ,, | 14 | आलोकवृत्ति | आलोकावृत्ति |
| 127 | 9 | ति | इति |
| 128 | 22 | द्रव्यत्वलिङ्ग | द्रव्यत्ववलिङ्ग |
| 129 | 6 | बन्धकतायां | प्रतिबन्धकतायां |
| 130 | 12 | तिबन्धक- | प्रतिबन्धक- |
| 131 | 8 | यत्राबलोकमलिङ्गकः | यत्रालोकमात्रलिङ्गकः |
| ,, | 8 | आलोलिङ्गक | आलोकलिङ्गक- |
| ,, | 10 | मितिरेव | मितेरेव |
| 132 | 3 | र्जायते | जायते |
| 133 | 20 | लोकवाँश्च | लोकवांश्च |
| 134 | 9 | आलोकलियक | आलोकलिङ्गक |
| 140 | 2 | धूमेनलोकेन | धूमेनालोक |
| ,, | 5 | नुविति | नुमिति |
| ,, | 15 | उत्तेजकत्व | उत्तेजकत्वं |
| ,, | 18 | रपीच्छायोः | रपीच्छयोः |
| 142 | 9 | ववच्छेदकं | रवच्छेदकं |
| 143 | 15 | च्छायाः | केच्छायाः |
| 145 | 20 | आक्षेयसारः | आक्षेपसारः |
| 152 | 12 | परामर्शलोके- | परामर्शालोके- |
| ,, | ,, | मितयः यः | मितयः |
| ,, | 17 | व्यमिचाः | व्यमिचारः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 152 | 18 | काणक्षणः | करणक्षणः |
| 153 | 10 | नानालियक- | नानालिङ्गक |
| ” | 18 | तृतीतक्षण | तृतीयक्षण |
| 154 | 8 | तादृशष्टधूम- | तादृशधूम- |
| 156 | 16 | मितीच्छरसत्त्वे | मितीच्छासत्त्वे |
| 157 | 17 | विषयविद्धेः | विषयसिद्धेः |
| 158 | 11 | विशेश्यता | विशेष्यता |
| 162 | 4 | सिङ्गके- | लिङ्गके- |
| 163 | 3 | सूचनाथेति | सूचनार्थं इति |
| 164 | 13 | तदुपपत्त्यर्थः | तदुपपत्त्यर्थं |
| 165 | 14 | वैशियमपि | वैशिष्ट्यमपि |
| 167 | ” | भिन्नत्व | भिन्नत्वं |
| 169 | 17 | त्वायत्तेः | त्वापत्तेः |
| 171 | 14 | इति इति समाधत्ते | इति समाधत्ते |
| 172 | 19 | वच्छेयकता | वच्छेदकता |
| 178 | 8 | बधकत्वव्वब- | बन्धकत्वव्यव- |
| ” | 19 | र्याप्त- | पर्याप्त- |
| 179 | 5 | संसर्गतयाः | संसर्गतया |
| 181 | 22 | वगाही | वगाहि- |
| 183 | 2 | वच्छदन | वच्छेदेन |
| 187 | 3 | दापत्तः | दापत्तेः |
| 189 | 11 | मेक | मेकं |
| ” | 16 | वणत्मक- | वर्णात्मक- |
| ” | 18 | तरेभ्यी | इतरेभ्यो |
| 190 | 3 | वच्छदकस्य | वच्छेदकस्य |
| ” | 12 | वाक अनित्या | वाक् अनित्या |
| 192 | 10 | अववच्छेद | अवच्छेद |
| ” | 21 | अवच्छेदकव- | अवच्छेदकाव- |
| ” | ” | व्यायकत्व- | व्यापकत्व- |
| 199 | 13 | अवच्छेदकत्व- | अवच्छेदकाव- |
| 201 | 4 | विशेषष्यभावे | विशेष्यभावे |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 203 | 6 | अत एम | अत एव |
| ” | 9 | व्यक्त्वनुमान- | व्यक्त्यनुमान |
| ” | 22 | वह्निमानियत्नु- | वह्निमानित्यनु- |
| 204 | 16 | सिद्धेर्नन्तु- | सिद्धेर्नानु- |
| 207 | 21 | वावच्छिन्नो- | त्वावच्छिन्नो- |
| 210 | 5 | साध्यप्रसिद्धः | साध्यप्रसिद्धेः |
| 217 | 3 | न्यायनानु- | न्यायेनानु- |
| 218 | 2 | नुमितितिस्वी- | नुमितिस्वी- |
| 219 | 3 | विशषणा- | विशेषणा- |
| ” | 3 | स्याप्यक- | स्याप्येक- |
| 220 | 6 | विशिष्ष्यांशे | विशिष्टांशे |
| ” | 11 | विशेष्यकज्ञानस्य | विशेष्यज्ञानस्य |
| 224 | 21 | दितानि । तत्र अनू- | अनूदितानि । तत्र |
| 231 | 3 | कालस्तस्तत्समुदाय | कालस्तत्समुदाय |
| 234 | 17 | निर्वहतीति | निर्वहति |
| 235 | 5 | तदनन्तरश्चेदनु- | तदनन्तरं चेदनु- |
| ” | 19 | थूलकालः | स्थूलकालः |
| 249 | 15 | निवे..ने | निवेशने |
| 256 | 4 | मित्युत्पाद | मित्यनुत्पाद |
| 258 | 3 | प्रयोजनानन्तरं | प्रयोजनान्तरं |
| 259 | 17 | निवे...नं | निवेशन |
| 261 | 2 | मक्षतेति | पक्षतेति |
| ” | 15 | अन्ययधानं | अव्यवधानं |
| 263 | 11 | ध्वंसाधिकरणत्व- | ध्वंसानधिकरणत्व- |
| ” | 23 | क्षणोत्पत्तिकाया | क्षणोत्पत्तिका या |
| 264 | 3 | नुमितवः | नुमितयः |
| ” | 12 | सिषाधयिया | सिषाधयिषा |
| 272 | 9 | स्वसामाना- | स्वसमाना- |
| 273 | 5 | करणरूपत्व- | करणस्वरूप- |
| 276 | 14 | अनुतपादे | अनुत्पादे |
| ” | 15 | गुणान्तरोत्पदस्य | गुणान्तरोत्पादस्य |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 279 | 12 | पपत्तिमित | पपत्तिमिति |
| 283 | 5 | सम्पत्तश्च | सम्पत्तेश्च |
| ” | 12 | सियुत्पत्ति- | सिद्ध्युत्पत्ति- |
| 284 | 5 | आद | आदौ |
| 285 | 10 | चरितार्थत्वम्त् | चरितार्थत्वात् |
| 286 | 3 | सम्पत्तय | सम्पत्तये |
| 289 | 18 | प्रत्वात | सत्वात् |
| 291 | 7 | कालश्यापि | कालस्यापि |
| 296 | 6 | नुपपत्तिरिति | नुपपत्तेरिति |
| 297 | 21 | माव: | भावः |
| 303 | 22 | यक्ति | व्यक्तिं |
| 306 | 3 | न्रेरनन्तर- | द्धेरनन्तर- |
| 307 | 17 | सद्रव- | सद्भाव- |
| 308 | 6 | कारणतावच्छेदक- | कारणतावच्छेदका- |
| ” | 17 | आदोपत्वे | अदोषत्वे |
| 310 | 6 | ससय | समय |
| 311 | 5 | प्रनङ्ग | प्रसङ्ग |
| 312 | 2 | दाणाय | वारणाय |
| 320 | 16 | सूचनाथ | सूचनाय |
| ” | 18 | यत्र भिन्नान्त- | तत्र भिन्नान्त- |
| 321 | 17 | विशेषणाक्रातः | विशेषणाक्रान्तः |
| 323 | 6 | उत्तरस्वक्षण- | उत्तरत्वक्षण- |
| ” | 8 | ध्यधिकरणा- | व्यधिकरणा- |
| ” | 20 | तमादाय | तामादाय |
| 324 | 21 | तत्दृश- | तादृश- |
| 325 | 6 | सामानधि | सामानाधि- |
| 326 | 3 | स्वत्वान्तर्भतिना- | स्वत्वान्तर्भाविना- |
| ” | 4 | द्वयपि | द्वयेपि |
| ” | 5 | तत्तद्वस्दु- | तत्तद्वस्तु- |
| ” | 10 | अन्वत् | अन्यत् |
| 327 | 2 | कारणान्तरया- | कारणान्तरस्या- |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 327 | 12 | चानुमितिव्यव- | चानुमित्यव्यव- |
| 329 | 21 | काणत्व- | कारणत्व- |
| 330 | 3 | आ-ह | आह |
| 332 | 22 | युदि | यदि |
| 333 | 6 | मधिकरण- | नधिकरण- |
| 337 | 2 | " स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन वा" एतन्निष्कासनीयं, पुनरुक्तत्वात् । | |
| 342 | 10 | तिरिशतत्वमभ्यु- | तिरिक्तत्वमभ्यु- |
| 343 | 9 | स्वसमाना- | स्वसामाना- |
| " | 10 | तत्रास्वत्वा- | तत्र स्वत्वा- |
| 345 | 5 | द्वितीथः | द्वितीयः |
| 346 | 20 | तृतीयज्ञणे | तृतीयक्षणे |
| 349 | 7 | उत्तजकत्वात् | उत्तेजकत्वात् |
| " | 17 | वैशिष्टथ | वैशिष्ट्यं |
| 350 | 15 | नुपपत्ति | नुपपत्तिः |
| " | 12 | समुच्यते | इत्युच्यते |
| 351 | 10 | सिद्धिसामग्री शाद्ब- | सिद्धिसामग्री प्रत्यक्षसामग्री शाब्द, |
| " | 18 | स्वरूपयोग्य | स्वरूपयोग्यं |
| 352 | 22 | स्योपाभ्याया- | स्योपाध्याया- |
| 363 | 14 | प्रत्यक्षसामग्र्य- | प्रत्यक्षसामग्री- |
| 370 | 16 | स्पार्शनवादि | स्पार्शनत्वादि |
| " | 22 | मितिव- | मितित्व- |
| 372 | 11 | यक्ष- | प्रत्यक्ष- |
| 374 | 4 | मवेपि | मतेपि |
| 375 | 6 | पुरणस्कारेण | पुरस्कारेण |
| 381 | 22 | योतविशिष्टस्य | योगविशिष्टस्य |
| 382 | 6 | दात एव | ज्ञात एव |
| " | 11 | मतुऽपि | मतेऽपि |
| " | 14 | भाव | भावः |
| 384 | 10 | वैशिष्टमेव | वैशिष्ट्यमेव |

| पृष्ठम् | पङ्क्तिः | अशुद्धम | शुद्धम् |
|---|---|---|---|
| 386 | 6 | संबन्धत्व- | संबद्धत्व- |
| 390 | 2 | प्रस्युत | प्रत्युत |
| 391 | 14 | उद्देश्ता | उद्देश्यता |
| 392 | 4 | संबन्धन | संबन्धेन |
| 395 | 4 | काकिक- | कालिक- |
| ,, | 17 | सर्वत्रैय | सर्वत्रैव |
| ,, | 21 | ादृशी | तादृशी |
| 402 | 11 | सिद्ध्युत्तरत्व | सिद्ध्युत्तरत्वं |
| ,, | 11 | वक्त | वक्तुं |
| 404 | 16 | त्यादि | इत्यादि |
| 405 | 4 | मयेध | मध्ये |
| ,, | 19 | ध्वंसोत्पत्त्वधि- | ध्वंसोत्पत्त्यधि- |
| 406 | 4 | प्रसङ्ग। | प्रसङ्गः |
| 407 | 15 | हेतुत्ममिति | हेतुत्वमिति |
| 408 | 16 | लाघनेनौ- | लाघवेनौ- |
| 409 | 12 | वाच्यत् | वाच्यम् |
| 411 | 5 | त्वात | त्वात् |
| 414 | 23 | सिद्ध्यभाविशिष्टे | सिद्ध्यभावविशिष्टे |
| 421 | 7 | तदनुमिवि- | तदनुमिति |
| ,, | 10 | अनुमित्यवेतुत्व- | अनुमित्यहेतुत्व- |
| ,, | ,, | वह्न्यादिसिङ्गक- | वह्न्यादिलिङ्गक |
| 422 | 21 | सायग्रीसत्त्वे | सामग्रीसत्त्वे |



